येत्यर्थः 'तेल्लकेला इव सुसंगोविय'त्ति तैलकेला इव-तैलाश्रयो भाजनविशेषः सौराष्ट्रप्रसिद्धः सा च सुष्ठु संगोपनीया भवत्यन्यथा लुठति ततश्च तैलहानिः स्यादिति, 'चेलपेडा इव सुसंपरिगहिय'त्ति चेलपेडावत्-वस्त्रमञ्जूषेव सुष्ठु संपरिवृत्ता (गृहीता)-निरुपद्रवे स्थाने निवेशिता। 'दाहिणिल्लेसु असुरकुमारेसु देवेसु देवत्ताए उववज्जिहिति'त्ति विराधितश्राम-ण्यत्वादन्यथाऽनगाराणां वैमानिकेष्वेवोत्पत्तिः स्यादिति, यच्चेह 'दाहिणिल्लेसु'त्ति प्रोच्यते तत्तस्य क्रूरकर्म्मत्वेन दक्षिणक्षे-त्रेष्वेवोत्पाद इतिकृत्वा, 'अविराहियसामन्ने'त्ति आराधितचरण इत्यर्थः, आराधितचरणता चेह चरणप्रतिपत्तिसमया-दारभ्य मरणान्तं यावन्निरतिचारतया तस्य पालना, आह च—"आराहणा य एत्थं चरणपडिवत्तिसमयओ पभिई। आम-रणंतमजस्सं संजमपरिपालणं विहिणा ॥ १ ॥" इति [ आराधना चात्र चारित्रप्रतिपत्तिसमयत आरभ्य आमरणान्तमजस्रं विधिना संयमपरिपालना ॥ १ ॥ ] एवं चेह यद्यपि चारित्रप्रतिपत्तिभवा विराधनायुक्ता अग्निकुमारवर्ज्जभवनपतिज्योति-ष्कत्वहेतुभवसहिता दश अविराधनाभवास्तु यथोक्तसौधर्म्मादिदेवलोकसर्वार्थसिद्ध्युत्पत्तिहेतवः सप्ताष्टमश्च सिद्धिगमनभव इत्येवमष्टादश चारित्रभवा उक्ताः, श्रूयन्ते चाष्टैव भवांश्चारित्रं भवति तथाऽपि न विरोधः, अविराधनाभवानामेव ग्रहणा-दिति, अन्ये त्वाहुः—"अट्ठ भवा उ चरित्ते" [ चारित्रेऽष्टौ भवाः । ] इत्यत्र सूत्रे आदानभवानां वृत्तिकृता व्याख्यातत्वात् चारित्रप्रतिपत्तिविशेषिता एव भवा ग्राह्याः, नाराधनाविराधनाविशेषणं कार्यम्, अन्यथा यद्भगवता श्रीमन्महावीरेण हालिकाय प्रव्रज्या बीजमिति दापिता तन्निरर्थकं स्यात्, सम्यक्त्वमात्रेणैव बीजमात्रस्य सिद्धत्वात्, यत्तु चारित्रदानं तस्य

तदष्टमचारित्रे सिद्धिरेतस्य स्यादिति विकल्पादुपपन्नं स्यादिति, यच्च दशसु विराधनाभवेषु तस्य चारित्रमुपवर्णितं तद्द्रव्य-तोऽपि स्यादिति न दोष इति, अन्ये त्वाहुः—न हि वृत्तिकारवचनमात्रावष्टम्भादेवाधिकृतसूत्रमन्यथा व्याख्येयं भवति, आवश्यकचूर्णिकारेणाप्याराधनापक्षस्य समर्थितत्वादिति। 'एवं जहा उववाइए' इत्यादि भावितमेवाम्मडपरिव्राजकक-थानक इति ॥ पञ्चदशं शतं वृत्तितः समाप्तमिति ॥

श्रीमन्महावीरजिनप्रभावाद्गोशालकाहङ्कृतिवद्गतेषु । समस्तविघ्नेषु समापितेयं, वृत्तिः शते पञ्चदशे मयेति ॥ १ ॥

॥ इति श्रीमदभयदेवसूरिवर्यविहितविवरणयुतं पञ्चदशं गोशालाख्यं शतकं समाप्तम् ॥

## ॥ अथ षोडशं शतकम् ॥

व्याख्यातं पञ्चदशं शतं, तत्र चैकेन्द्रियादिषु गोशालकजीवस्यानेकधा जन्म मरणं चोक्तं, तथापि जीवस्य जन्ममर-
णाद्युच्यते इत्येवंसम्बन्धस्यास्येयमुद्देशकाभिधानसूचिका गाथा—

अहिगरणि जरा कम्मे जावतियं गंगदत्त सुमिणे य। उवओग लोग बलि ओहि दीव उदही दिसा
थणिया ॥ १ ॥ तेणं कालेणं तेणं समएणं रायगिहे जाव पज्जुवासमाणे एवं वयासी—अत्थि णं भंते !
अधिकरणिंसि वाउयाए वक्कमति ?, हंता अत्थि, से भंते ! किं पुट्ठे उद्दाइ अपुट्ठे उद्दाइ ?, गोयमा ! पुट्ठे
उद्दाइ नो अपुट्ठे उद्दाइ, से भंते ! किं ससरीरी निक्खमइ असरीरी निक्खमइ एवं जहा खंदए जाव
नो असरीरी निक्खमइ ( सूत्रं ५६१ ) । इंगालकारियाए णं भंते ! अगणिकाए केवतियं कालं संचिट्ठति ?,
गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तिन्नि राइंदियाइं, अन्नेवि तत्थ वाउयाए वक्कमति, न विणा वाउयाएणं
अगणिकाए उज्जलति ( सूत्रं ५६२ ) ॥

'अहिगरणी'त्यादि, 'अहिगरणि'त्ति अधिक्रियते—ध्रियते कुट्टनार्थं लोहादि यस्यां साऽधिकरणी—लोहकाराद्युपकरण-
विशेषस्तत्प्रभृतिपदार्थविशेषितार्थविषय उद्देशकोऽधिकरण्येवोच्यते, स चात्र प्रथमः, 'जर'त्ति जराद्यर्थविषयत्वाज्जरेति
द्वितीयः, 'कम्मे'त्ति कर्म्मप्रकृतिप्रभृतिकार्थविषयत्वात्कर्म्मेति तृतीयः, 'जावइयं'ति 'जावइय'मित्यनेनादिशब्देनोपलक्षितो

जावइयमिति चतुर्थः, 'गंगदत्त'त्ति गङ्गदत्तदेववक्तव्यताप्रतिबद्धत्वाद् गङ्गदत्त एव पञ्चमः, 'सुमिणे य'त्ति स्वप्नविषयत्वात्स्वप्न इति षष्ठः, 'उवओग'त्ति उपयोगार्थप्रतिपादकत्वादुपयोग एव सप्तमः, 'लोग'त्ति लोकस्वरूपाभिधायकत्वाल्लोक एवाष्टमः, 'वलि'त्ति वलिसम्बन्धिपदार्थाभिधायिकत्वाद्वलिरेव नवमः, 'ओहि'त्ति अवधिज्ञानप्ररूपणार्थत्वादवधिरेव दशमः, 'दीव'त्ति द्वीपकुमारवक्तव्यतार्थो द्वीप एवैकादशः 'उदहि'त्ति उदधिकुमारविषयत्वादुदधिरेव द्वादश 'दिसि'त्ति दिक्कुमारविषयत्वाद्दिगेव त्रयोदशः, 'थणिए'त्ति स्तनितकुमारविषयत्वात्स्तनित एव चतुर्दश इति ॥ तत्राधिकरणीत्युद्देशकार्थप्रस्तावनार्थमाह—'तेण'मित्यादि, 'अत्थि'त्ति अस्त्ययं पक्षः 'अहिगरणिंसि'त्ति अधिकरण्यां 'वाउयाए'त्ति वायुकायः 'वक्कमइ'त्ति व्युत्क्रामति अयोघनाभिघातेनोत्पद्यते, अयं चाक्रान्तसम्भवत्वेनादावचेतनतयोत्पन्नोऽपि पश्चात्सचेतनीभवतीति सम्भाव्यत इति ॥ उत्पन्नश्च सन् म्रियत इति प्रश्नयन्नाह—'से भंते'इत्यादि, 'पुट्ठे'त्ति स्पृष्टः स्वकायशस्त्रादिना सशरीरश्च कडेवरान्निष्क्रामति कार्म्मणाद्यपेक्षया औदारिकाद्यपेक्षया त्वशरीरीति ॥ अग्निसहचरत्वाद्वायोर्वायुसूत्रानन्तरमग्निसूत्रमाह—'इंगाले'त्यादि, 'इंगालकारियाए'त्ति अङ्गारान् करोतीति अङ्गारकारिका—अग्निशकटिका तस्यां, न केवलं तस्यामग्निकायो भवति 'अन्नेऽवित्थ'त्ति अन्योऽप्यत्र वायुकायो व्युत्क्रामति, यत्राग्निस्तत्र वायुरितिकृत्वा, कस्मादेवमित्याह—'न विणे'त्यादि । अग्न्यधिकारादेवाग्नितप्तलोहमधिकृत्याह—

'पुरिसे णं भंते ! अयं अयकोट्ठंसि अयोमएणं संडासएणं उव्विहमाणे वा पव्विहमाणे वा कतिकिरिए ?, गोयमा ! जावं च णं से पुरिसे अयं अयकोट्ठंसि अयोमएणं संडासएणं उव्विहिति वा पव्विहिति वा तावं-

च णं से पुरिसे कातियाए जाव पाणाइवायकिरियाए पंचहिं किरियाहिं पुट्ठे, जेसिंपिय णं जीवाणं सरीरेहिंतो
अए निव्वत्तिए अयकोट्ठे निव्वत्तिए संडासए निव्वत्तिए इंगाला निव्वत्तिया इंगालकड्ढिणि निव्वत्तिया भत्था निव्व-
त्तिया तेवि णं जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा। पुरिसे णं भंते ! अयं अयकोट्ठाओ अयोमएणं
संडासएणं गहाय अहिकरणिंसि उक्खिव्वमाणे वा निक्खिव्वमाणे वा कतिकिरिए ?, गोयमा ! जावं च णं से
पुरिसे अयं अयकोट्ठाओ जाव निक्खिवइ वा० तावं च णं से पुरिसे काइयाए जाव पाणाइवायकिरियाए
पंचहिं किरियाहिं पुट्ठे, जेसिंपि णं जीवा णं सरीरेहिंतो अयो निव्वत्तिए संडासए निव्वत्तिए चम्मेट्ठे निव्वत्तिए
मुट्ठिए निव्वत्तिए अधिकरणि० अधिकरणिखोडी णि० उदगदोणी णि० अधिकरणसाला निव्वत्तिया तेवि णं
जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा ( सूत्रं ५६२ ) ॥

'पुरिसे णं भंते !'इत्यादि, 'अयं'ति लोहम् 'अयकोट्ठंसि'त्ति लोहप्रतापनार्थे कुशूले 'उव्विहमाणे व'त्ति उत्क्षिपन्
वा 'पव्विहमाणे व'त्ति प्रक्षिपन् वा 'इंगालकड्ढिणि'त्ति ईषद्वक्राग्रा लोहमययष्टिः 'भत्थ'त्ति ध्मानखल्ला, इह चायःप्रभृ-
तिपदार्थनिर्वर्त्तकजीवानां पञ्चक्रियत्वमविरतिभावेनावसेयमिति। 'चम्मेट्ठे'त्ति लोहमयः प्रतलायतो लोहादिकुट्टनप्रयोजनो
लोहकाराद्युपकरणविशेषः, 'मुट्ठिए'त्ति लघुतरो घनः 'अहिगरणिखोडि'त्ति यत्र काष्ठेऽधिकरणी निवेश्यते 'उदगदो-
णि'त्ति जलभाजनं यत्र तप्तं लोहं शीतलीकरणाय क्षिप्यते 'अहिगरणसाल'त्ति लोहपरिकर्मगृहम् ॥ प्राक्क्रियाः प्ररूपिता-
स्तासु चाधिकरणिकी, सा चाधिकरणिनोऽधिकरणे सति भवतीत्यतस्तद्द्वयनिरूपणायाह—

जीवे णं भंते ! किं अधिकरणी अधिकरणं ?, गोयमा ! जीवे अधिकरणीवि अधिकरणंपि, से केणट्ठेणं भंते ! एवं वुच्चइ जीवे अधिकरणीवि अधिकरणंपि ?, गोयमा ! अविरतिं पडुच्च से तेणट्ठेणं जाव अहिकरणंपि ॥ नेरइए णं भंते ! किं अधिकरणी अधिकरणं ?, गोयमा ! अधिकरणीवि अधिकरणंपि एवं जहेव जीवे तहेव नेरइएवि, एवं निरंतरं जाव वेमाणिए ॥ जीवे णं भंते ! किं साहिकरणी निरहिकरणी ?, गोयमा ! साहिकरणी नो निरहिकरणी, से केणट्ठेणं पुच्छा, गोयमा ! अविरतिं पडुच्च, से तेणट्ठेणं जाव नो निरहिकरणी एवं जाव वेमाणिए ॥ जीवे णं भंते ! किं आयाहिकरणी पराहिकरणी तदुभयाहिकरणी, गोयमा ! आयाहिकरणीवि पराहिकरणीवि तदुभयाहिकरणीवि, से केणट्ठेणं भंते ! एवं वुच्चइ जाव तदुभयाहिकरणीवि ?, गोयमा ! अविरतिं पडुच्च, से तेणट्ठेणं जाव तदुभयाहिकरणीवि, एवं जाव वेमाणिए ॥ जीवाणं भंते ! अधिकरणे किं आयप्पओगनिव्वत्तिए परप्पयोगनिव्वत्तिए तदुभयप्पयोगनिव्वत्तिए ?, गोयमा ! आयप्पयोगनिव्वत्तिएवि परप्पयोगनिव्वत्तिएवि तदुभयप्पयोगनिव्वत्तिएवि, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! अविरतिं पडुच्च, से तेणट्ठेणं जाव तदुभयप्पयोगनिव्वत्तिएवि, एवं जाव वेमाणियाणं (सूत्रं ५६४) ॥ कइ णं भंते ! सरीरगा पण्णत्ता ?, गोयमा ! पंच सरीरा पण्णत्ता, तंजहा-ओरालिए जाव कम्मए । कति णं भंते ! इंदिया पण्णत्ता ?, गोयमा ! पंच इंदिया पण्णत्ता, तंजहा-सोइंदिए जाव फासिंदिए, कतिविहे णं भंते ! जोए पण्णत्ते ?, गोयमा ! तिविहे जोए पण्णत्ते, तंजहा-मणजोए वइजोए कायजोए ॥ जीवे णं भंते ! ओरालियसरीरं निव्वत्तेमाणे किं अधिकरणी

अधिकरणं ?, गोयमा ! अधिकरणीवि अधिकरणंपि, से केणट्ठेणं भंते ! एवं वुच्चइ अधिकरणीवि अधिकर-णंपि ?, गोयमा ! अविरतिं पडुच्च, से तेणट्ठेणं जाव अधिकरणंपि, पुढविकाइए णं भंते ! ओरालियसरीरं निव्वत्तेमाणे किं अधिकरणी अधिकरणं ?, एवं चेव, एवं जाव मणुस्से । एवं वेउव्वियसरीरंपि, नवरं जस्स अत्थि । जीवे णं भंते ! आहारगसरीरं निव्वत्तेमाणे किं अधिकरणी ? पुच्छा, गोयमा ! अधिकरणीवि अधिकरणंपि, से केणट्ठेणं जाव अधिकरणंपि ?, गोयमा ! पमायं पडुच्च, से तेणट्ठेणं जाव अधिकरणंपि, एवं मणुस्सेवि, तेयासरीरं जहा ओरालियं, नवरं सव्वजीवाणं भाणियव्वं, एवं कम्मगसरीरंपि । जीवे णं भंते ! सोइंदियं निव्वत्तेमाणे किं अधिकरणी अधिकरणं ?, एवं जहेव ओरालियसरीरं तहेव सोइंदियंपि भाणियव्वं, नवरं जस्स अत्थि सोइंदियं, एवं चक्खिंदियघाणिंदियजिब्भिंदियफासिंदियाणवि, नवरं जाणियव्वं जस्स जं अत्थि । जीवे णं भंते ! मणजोगं निव्वत्तेमाणे किं अधिकरणी अधिकरणं, एवं जहेव सोइंदियं तहेव निर-वसेसं, वइजोगो एवं चेव, नवरं एगिंदियवज्जाणं, एवं कायजोगोवि, नवरं सव्वजीवाणं जाव वेमाणिए । सेवं भंते ! २ त्ति ( सूत्रं ५६५ ) ॥ १६-१ ॥

'जीवे ण'मित्यादि, 'अहिगरणीवि'त्ति अधिकरणं—दुर्गतिनिमित्तं वस्तु तच्च विवक्षया शरीरमिन्द्रियाणि च तथा बाह्यो हलगन्त्र्यादिपरिग्रहस्तद्यस्यास्तीत्यधिकरणी जीवः 'अहिकरणंपि'त्ति शरीराद्यधिकरणेभ्यः कथञ्चिदव्यतिरिक्तत्वा-दधिकरणं जीवः, एतच्च द्वयं जीवस्याविरतिं प्रतीत्योच्यते तेन यो विरतिमान् असौ शरीरादिभावेऽपि नाधिकरणी नाप्य-

धिकरणमविरतियुक्तस्यैवं शरीरादेरधिकरणत्वादिति ॥ एतदेव चतुर्विंशतिदण्डके दर्शयति—'नेरइए'इत्यादि, अधिकरणी जीव इति प्रागुक्तं, स च दूरवर्त्तिनाऽप्यधिकरणेन स्याद् यथा गोमान् इत्यतः पृच्छति—'जीवे ण'मित्यादि, 'साहिगरणि'त्ति सह–सहभाविनाऽधिकरणेन–शरीरादिना वर्त्तत इति समासान्तेन्विधिः साधिकरणी, संसारिजीवस्य शरीरेन्द्रियरूपाधिकरणस्य सर्वदैव सहचारित्वात् साधिकरणत्वमुपदिश्यते, शस्त्राद्यधिकरणापेक्षया तु स्वस्वामिभावस्य तदविरतिरूपस्य सहवर्त्तित्वाज्जीवः साधिकरणीत्युच्यते, अत एव वक्ष्यति—'अविरइं पडुच्च'त्ति, अत एव संयतानां शरीरादिसद्भावेऽप्यविरतेरभावान्न साधिकरणित्वं, 'निरहिगरणि'त्ति निर्गतमधिकरणमस्मादिति निरधिकरणी समासान्तविधेः अधिकरणदूरवर्त्तीत्यर्थः, स च न भवति, अविरतेरधिकरणभूताया अदूरवर्त्तित्वादिति, अथवा सहाधिकरणिभिः–पुत्रमित्रादिभिर्वर्त्तत इति साधिकरणी, कस्यापि जीवस्य पुत्रादीनामभावेऽपि तद्विषयविरतेरभावात्साधिकरणित्वमवसेयमत एव नो निरधिकरणीत्यपि मन्तव्यमिति ॥ अधिकरणाधिकारादेवेदमाह—'जीवे ण'मित्यादि, 'आयाहिगरणि'त्ति अधिकरणी–कृष्यादिमान् आत्मनाऽधिकरणी आत्माधिकरणी, ननु यस्य कृष्यादि नास्ति स कथमधिकरणीति ?; अत्रोच्यते, अविरत्यपेक्षयेति, अत एवाविरतिं प्रतीत्येति वक्ष्यति, 'पराहिगरणि'त्ति परतः–परेषामधिकरणे प्रवर्त्तनेनाधिकरणी पराधिकरणी, 'तदुभयाहिगरणि'त्ति तयोः–आत्मपरयोरुभयं तदुभयं ततोऽधिकरणी यः स तथेति ॥ अथाधिकरणस्यैव हेतुप्ररूपणार्थमाह—'जीवाण'मित्यादि, 'आयप्पओगनिव्वत्तिए'त्ति आत्मनः प्रयोगेण–मनःप्रभृतिव्यापारेण निर्वर्त्तितं–निष्पादितं यत्तत्तथा, एवमन्यदपि द्वयम् ॥ ननु यस्य वचनादि परप्रवर्त्तनं वस्तु नास्ति तस्य कथं परप्रयोगनिर्वर्त्तितादि भवि-

प्यतीत्याशङ्कामुपदर्श्य परिहरन्नाह—'से केण'मित्यादि, अविरत्यपेक्षया त्रिविधमप्यस्तीति भावनीयमिति ॥ अथ शरीराणामिन्द्रियाणां योगानां च निर्वर्त्तनायां जीवादेरधिकरणित्वादि प्ररूपयन्निदमाह—'कति णं भंते !' इत्यादि, 'अहिगरणीवि अहिगरणंपि'त्ति पूर्ववत् 'एवं चेव'त्ति अनेन जीवसूत्राभिलापः पृथिवीकायिकसूत्रे समस्तो वाच्य इति दर्शितम्, 'एवं वेउव्वि'इत्यादि व्यक्तं, नवरं 'जस्स अत्थि'त्ति इह तस्य जीवपदस्य वाच्यमिति शेषः, तत्र नारकदेवानां वायोः पञ्चेन्द्रियतिर्यङ्मनुष्याणां च तदस्तीति ज्ञेयं, 'पमायं पडुच्च'त्ति इहाहारकशरीरं संयमवतामेव भवति तत्र चाविरतेरभावेऽपि प्रमादादधिकरणित्वमवसेयं, दण्डकचिन्तायां चाहारकं मनुष्यस्यैव भवतीत्यत उक्तम्—'एवं मणुस्सेवि'त्ति, 'नवरं जस्स अत्थि सोइंदियं'ति तस्य वाच्यमिति शेषः, तच्चैकेन्द्रियविकलेन्द्रियवर्जानामन्येषां स्यादिति ॥ षोडशशते प्रथमः॥१६-१॥

---

प्रथमोद्देशके जीवानामधिकरणमुक्तं, द्वितीये तु तेषामेव जराशोकादिको धर्म उच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—जीवाणं भंते ! किं जरा सोगे ?, गोयमा ! जीवाणं जरावि सोगेवि, से केणट्ठेणं भंते ! एवं वु० जाव सोगेवि ?, गोयमा ! जे णं जीवा सारीरं वेदणं वेदेंति तेसि णं जीवाणं जरा जे णं जीवा माणसं वेदणं वेदेंति तेसि णं जीवाणं सोगे से तेणट्ठेणं जाव सोगेवि, एवं नेरइयाणवि, एवं जाव थणियकुमाराणं, पुढविकाइयाणं भंते ! किं जरा सोगे ?, गोयमा ! पुढविकाइयाणं जरा नो सोगे, से केणट्ठेणं जाव नो सोगे ?, गोयमा ! पुढविकाइयाणं सारीरं वेदणं वेदेंति नो माणसं वेदणं वेदेंति से तेणट्ठेणं

**जाव नो सोगे, एवं जाव चउरिंदियाणं, सेसाणं जहा जीवाणं जाव वेमाणियाणं, सेवं भंते ! २ त्ति जाव पज्जुवासति ( सूत्रं ५६६ ) ॥**

'रायगिहे'इत्यादि, 'जर'त्ति 'जॄ वयोहानौ' इति वचनात् जरणं जरा—वयोहानिः शारीरदुःखरूपा चेयमतो यदन्यदपि शारीरं दुःखं तदनयोपलक्षितं, ततश्च जीवानां किं जरा भवति ?, 'सोगे'त्ति शोचनं शोको—दैन्यम्, उपलक्षणत्वादेव चास्य सकलमानसदुःखपरिग्रहस्ततश्च उत शोको भवतीति, चतुर्विंशतिदण्डके च येषां शरीरं तेषां जरा येषां तु मनोऽप्यस्ति तेषामुभयमिति ॥ अनन्तरं वैमानिकानां जराशोका वुक्तौ अथ तेषामेव विशेषस्य शक्रस्य वक्तव्यतामभिधातुकाम आह—

**तेणं कालेणं २ सक्के देविंदे देवराया वज्जपाणी पुरंदरे जाव भुंजमाणे विहरइ, इमं च णं केवलकप्पं जंबुदीवं २ विपुलेणं ओहिणा आभोएमाणे २ पासति समणं भगवं महावीरं जंबुदीवे २ एवं जहा ईसाणे तइयसए तहेव सक्कोवि नवरं आभिओगे ण सद्दावेति हरी पायत्ताणियाहिवई सुघोसा घंटा पालओ विमाणकारी पालगं विमाणं उत्तरिल्ले निज्जाणमग्गे दाहिणपुरच्छिमिल्ले रतिकरपव्वए सेसं तं चेव जाव नामगं सावेत्ता पज्जुवासति धम्मकहा जाव परिसा पडिगया, तए णं से सक्के देविंदे देवराया समणस्स भगवओ महावीरस्स अंतियं धम्मं सोच्चा निसम्म हट्ठतुट्ठ० समणं भगवं महावीरं वंदति नमंसति २ एवं वयासी—कतिविहे णं भंते ! उग्गहे पन्नत्ते ?, सक्का ! पंचविहे उग्गहे पण्णत्ते, तंजहा—देविंदोग्गहे रायोग्गहे गाहावइउग्गहे सागारियउग्गहे साहम्मियउग्गहे ॥ जे इमे भंते ! अज्जत्ताए समणा निग्गंथा विहरंति एएसि णं अहं उग्गहं**

अणुजाणामीतिकट्टु समणं भगवं महावीरं वंदति नमंसति २ तमेव दिव्वं जाणविमाणं दुरूहति २ जामेव दिसं पाउब्भूए तामेव दिसं पडिगए । भंतेत्ति भगवं गोयमे समणं भगवं महा० वंदति न० २ एवं वयासी-जं णं भंते ! सक्के देविंदे देवराया तुज्झे णं एवं वदइ सच्चे णं एसमट्ठे ?, हंता सच्चे ( सूत्रं ५६७ ) ॥

'तेणं कालेणं'मित्यादि, 'एवं जहा ईसाणो तइयसए तहा सक्कोवि' त्ति यथेशानस्तृतीयशते प्रथमोद्देशके राजप्रश्नीयातिदेशेनाभिहितस्तथा शक्रोऽपीह वाच्यः, सर्वथा साम्यपरिहारार्थं त्वाह—'नवरमाभिओगे ण सद्दावेइ'इत्यादि तत्र किलेशानो महावीरमवधिनाऽवलोक्याभियोगिकान् देवान् शब्दयामास शक्रस्तु नैवं, तथा तत्र लघुपराक्रमः पदात्यनीकाधिपतिर्नन्दिघोषघण्टाताडनाय नियुक्त उक्तः इह तु सुघोषघण्टाताडनाय हरिणैगमेषी नियुक्त इति वाच्यं, तथा तत्र पुष्पको विमानकारी उक्त इह तु पालकोऽसौ वाच्यः, तथा तत्र पुष्पकं विमानमुक्तमिह तु पालकं वाच्यं, तथा तत्र दक्षिणो निर्याणमार्ग उक्त इह तूत्तरो वाच्यः, तथा तत्र नन्दीश्वरद्वीपे उत्तरपूर्वो रतिकरपर्वत ईशानेन्द्रस्यावतारायोक्त इह तु पूर्वदक्षिणोऽसौ वाच्यः 'नामगं सावेत्त'त्ति स्वकीयं नाम श्रावयित्वा यदुताहं भदन्त ! शक्रो देवराजो भवन्तं वन्दे नमस्यामि चेत्येवम्, 'उग्गहे'त्ति अवगृह्यते-स्वामिना स्वीक्रियते यः सोऽवग्रहः 'देविंदोग्गहे य'त्ति देवेन्द्रः-शक्र ईशानो वा तस्यावग्रहो-दक्षिणं लोकार्द्धमुत्तरं वेति देवेन्द्रावग्रहः 'राओग्गहे'त्ति राजा-चक्रवर्त्ती तस्यावग्रहः-षट्खण्डभरतादिक्षेत्रं राजावग्रहः 'गाहावइउग्गहे'त्ति गृहपतिः-माण्डलिको राजा तस्यावग्रहः-स्वकीयं मण्डलमिति गृहपत्यवग्रहः 'सागारियउग्गहे'त्ति सहागारेण-गेहेन वर्त्तत इति सागारः स एव सागारिकस्तस्यावग्रहो-गृहमेवेति सागारिकाव-

ग्रहः 'साहम्मियउग्गहे'त्ति समानेन धर्म्मेण चरन्तीति साधर्म्मिकाः साध्वपेक्षया साधव एव तेषामवग्रहः—तदाभाव्यं पञ्चक्रोशपरिमाणं क्षेत्रमृतुबद्धे मासमेकं वर्षासु चतुरो मासान् यावदिति साधर्म्मिकावग्रहः। एवमुपश्रुत्येन्द्रो यदाचख्यौ तदाह—'जे इमे' इत्यादि, 'एवं वयइ'त्ति एवं पूर्वोक्तम् 'अहं उग्गहं अणुजाणामि' इत्येवंरूपं 'वदति' अभिधत्ते सत्य एपोऽर्थ इति ॥ अथ भवत्वयमर्थः सत्यस्तथाऽप्ययं स्वरूपेण सम्यग्वादी उत न? इत्याशङ्क्याह—

सक्के णं भंते! देविंदे देवराया किं सम्मावादी मिच्छावादी?, गोयमा! सम्मावादी नो मिच्छावादी॥ सक्के णं भंते! देविंदे देवराया किं सच्चं भासं भासति मोसं भासं भासति सच्चामोसं भासं भासति असच्चामोसं भासं भासति?, गोयमा! सच्चंपि भासं भासति जाव असच्चामोसंपि भासं भासति॥ सक्के णं भंते! देविंदे देवराया किं सावज्जं भासं भासति अणवज्जं भासं भासति?, गोयमा! सावज्जंपि भासं भासति अणवज्जंपि भासं भासति, से केणट्ठेणं भंते! एवं वुच्चइ—सावज्जंपि जाव अणवज्जंपि भासं भासति?, गोयमा! जाहे णं सक्के देविंदे देवराया सुहुमकायं अणिजूहित्ताणं भासं भासति ताहे णं सक्के देविंदे देवराया सावज्जं भासं भासति जाहे णं सक्के देविंदे देवराया सुहुमकायं निजूहित्ता णं भासं भासति ताहे णं सक्के देविंदे देवराया अणवज्जं भासं भासति, से तेणट्ठेणं जाव भासति, सक्के णं भंते! देविंदे देवराया किं भवसिद्धीए अभवसि० सम्मदिट्ठीए एवं जहा मोउद्देसए सणंकुमारो जाव नो अचरिमे॥(सूत्रं ५६८)॥

'सक्के ण'मित्यादि, सम्यग् वदितुं शीलं—स्वभावो यस्य स सम्यग्वादी प्रायेणासौ सम्यगेव वदतीति। सम्यग्वादशी-

भापते न वा ? इति प्रश्नयन्नाह—'सक्के ण'मित्यादि, सत्याऽपि भाषा

लत्वेऽपि प्रमादादिना किमसौ चतुर्विधां भाषां भाषते न वा ? इति प्रश्नयन्नाह—'सक्के ण'मित्यादि, 'सावज्जं'ति सहावद्येन—गर्हितकर्म्मणेति साव-

कथञ्चिद्भाष्यमाणा सावद्या संभवतीति पुनः पृच्छति—'सक्के ण'मित्यादि, 'सावज्जं'ति सहावद्येन—गर्हितकर्म्मणेति साव-

द्या तां 'जाहे णं'ति यदा 'सुहुमकायं'ति सूक्ष्मकायं हस्तादिकं वस्त्विति वृद्धाः, अन्ये त्वाहुः—'सुहुमकायं'ति वस्त्रम्

'अनिज्जूहित्त'ति 'अपोह्य' अदत्त्वा, हस्ताद्यावृतमुखस्य हि भाषमाणस्य जीवसंरक्षणतोऽनवद्या भाषा भवति अन्या तु

सावद्येति ॥ शक्रमेवाधिकृत्याह—'सक्के ण'मित्यादि, 'मोउद्देसए'त्ति तृतीयशते प्रथमोद्देशके ॥

जीवाणं भंते ! किं चेयकडा कम्मा कज्जंति अचेयकडा कम्मा कज्जंति ?, गोयमा ! जीवाणं चेयकडा कम्मा कज्जंति नो अचेयकडा कम्मा कज्जंति, से केण० भंते ! एवं वुच्चइ जाव कज्जंति ?, गोयमा ! जीवाणं आहारोवचिया पोग्गला बोंदिचिया पोग्गला कलेवरचिया पोग्गला तहा २ णं ते पोग्गला परिणमंति नत्थि अचेयकडा कम्मा समणाउसो !, दुट्ठाणेसु दुसेज्जासु दुन्निसीहियासु तहा २ णं ते पोग्गला परि-णमंति नत्थि अचेयकडा कम्मा समणाउसो !, आयंके से वहाए होति संकप्पे से वहाए होति मरणंते से वहाए होति तहा २ णं ते पोग्गला परिणमंति नत्थि अचेयकडा कम्मा समणाउसो !, से तेणट्ठेणं जाव कम्मा कज्जंति, एवं नेरतियाणवि एवं जाव वेमाणियाणं। सेवं भंते ! सेवं भंते ! जाव विहरति (सूत्रं ५६९)॥१६-२॥

अनन्तरं शक्रस्वरूपमुक्तं, तच्च कर्म्मतो भवतीति सम्बन्धेन कर्म्मस्वरूपप्ररूपणायाह—'जीवाण'मित्यादि, 'चेयकड-कम्म'त्ति चेतः—चैतन्यं जीवस्वरूपभूता चेतनेत्यर्थः तेन कृतानि—बद्धानि चेतःकृतानि कर्म्माणि 'कज्जंति'त्ति भव

न्ति, कथम् ? इति चेदुच्यते—'जीवाणं'त्ति जीवानामेव नाजीवानाम् 'आहारोवचिया पोग्गल'त्ति आहाररूपतयोपचिताः-सञ्चिता ये पुद्गलाः 'बोंदिचिया पोग्गल'त्ति इह बोन्दिः—अव्यक्तावयवं शरीरं ततो बोन्दितया चिता ये पुद्गलाः, तथा 'कडेवरचिय'त्ति कडेवरतया चिता ये पुद्गलाः 'तहा तहा ते पुग्गला परिणमंति'त्ति तेन तेन प्रकारेण आहारादितयेत्यर्थः ते पुद्गलाः परिणमन्ति, एवं च कर्मपुद्गला अपि जीवानामेव तथा २ परिणमन्तीतिकृत्वा चैतन्यकृतानि कर्माणि, अतो निगम्यते—'नत्थि अचेयकडा कम्म'त्ति न भवन्ति 'अचेतःकृतानि' अचैतन्यकृतानि कर्म्माणि हे श्रमण ! हे आयुष्मन् ! इति, अथवा 'चेयकडा कम्मा कज्जंति'त्ति चेयं—चयनं चय इत्यर्थः भावे यप्रत्ययविधानात् तत्कृतानि सञ्चयकृतानि पुद्गलसञ्चयरूपाणि कर्माणि भवन्ति, कथम् ?, 'आहारोवचिया पोग्गला' इत्यादि, आहाररूपा उपचिताः सन्तः पुद्गला भवन्ति, तथा बोन्दिरूपाश्रिताः सन्तः पुद्गला भवन्ति, तथा कडेवररूपाश्रिताः सन्तः पुद्गला भवन्ति, किं बहुना ?, तथोच्छ्वासादिरूपतया ते पुद्गलाः परिणमन्ति चयादेवेति शेषः, एवं च न सन्ति 'अचेयकृतानि' असञ्चयकृतानि कर्म्माणि आहारबोन्दिकडेवरपुद्गलवदिति । तथा 'दुट्ठाणेसु'त्ति शीतातपदंशमशकादियुक्तेषु—कायोत्सर्गासनाद्याश्रयेषु 'दुसेज्जासु'त्ति दुःखोत्पादकवसतिषु 'दुन्निसीहियासु'त्ति दुःखहेतुस्वाध्यायभूमिषु 'तथा २' तेन २ प्रकारेण बहुविधासातोत्पादकतया 'ते पोग्गल'त्ति ते कार्म्मणपुद्गलाः परिणमन्ति, ततश्च जीवानामेवासातसम्भवात्तैरेवासातहेतुभूतकर्माणि कृतानि अन्यथाऽकृताभ्यागमदोषप्रसङ्गः, जीवकृतत्वे च तेषां चेतःकृतत्वं सिद्धमतो निगम्यते 'नत्थि अचेयकडा कम्म'त्ति, चेयव्याख्यानं त्वेवं नीयते—यतो दुःस्थानादिष्वसातहेतुतया

नमन्यासां प्रकृतीनां यत्रोद्देशकेऽभिधीयते स वेदावेदः स एवोद्देशकः—प्रज्ञापनायाः सप्तविंशतितमं पदं वेदावेदोद्देशकः, दीर्घता चेह सञ्ज्ञात्वात्, स चैवमर्थतः—गौतम ! अष्ट कर्म्मप्रकृतीर्वेदयति सप्त वा मोहस्य क्षये उपशमे वा ( शेपघातिक्षये चतस्रो वा ), एवं मनुष्योऽपि, नारकादिस्तु वैमानिकान्तोऽष्टावेवेत्येवमादिरिति । 'वेदावंधोवि तहेव'त्ति एकस्याः कर्म्मप्रकृतेर्वेदे-वेदने अन्यासां कियतीनां वन्धो भवतीति प्रतिपाद्यते यत्रासौ वेदावन्ध उच्यते, सोऽपि तथैव प्रज्ञापनायामिवेत्यर्थः, स च प्रज्ञापनायां षड्विंशतितमपदरूपः, एवं चासौ— कइ णं भंते ! कम्मप्पगडीओ पण्णत्ताओ ?, गोयमा ! अट्ठ कम्मपगडीओ पण्णत्ताओ, तंजहा —णाणावरणं जाव अंतराइयं, एवं नेरइयाणं जाव वेमाणियाणं । जीवे णं भंते ! णाणावरणिज्जं कम्मं वेदेमाणे कइ कम्मपगडीओ वंधइ ?, गोयमा ! सत्तविहवंधए वा अट्ठविहवंधए वा छव्विहवंधए वा एगविहवंधए वा' इत्यादि, तत्राष्टविधवन्धकः प्रतीतः, सप्तविधवन्धकस्त्वायुर्वन्धकालादन्यत्र, षड्विधवन्धक आयुर्मोहवर्जानां सूक्ष्मसम्परायः, एकविधवन्धको वेदनीयापेक्षयोपशान्तमोहादिः, 'वंधावेदोवि तहेव'त्ति एकस्याः कर्म्मप्रकृतेर्वन्धे सत्यन्यासां कियतीनां वेदो भवति ? इत्येवमर्थो वन्धावेद उद्देशक उच्यते, सोऽपि तथैव-प्रज्ञापनायामिवेत्यर्थः, स च प्रज्ञापनायां पञ्चविंशतितमपदरूपः, एवं चासौ—'कइ णं भंते !' इत्यादि प्रागिव, विशेषस्त्वयं—'जीवे णं भंते ! णाणावरणिज्जं कम्मं वंधेमाणे कइ कम्मपगडीओ वेएइ ?, गोयमा ! नियमा अट्ठ कम्मप्पगडीओ वेएइ' इत्यादि, 'वंधावंधो'त्ति एकस्या वन्धेऽन्यासां कियतीनां वन्धः ? इति यत्रोच्यतेऽसौ वन्धावन्ध इत्युच्यते, स च प्रज्ञापनायां चतुर्विंशतितमं पदं, स चैवं-'कइ णं'मित्यादि तथैव, विशेषः पुनरयं—'जीवे णं भंते ! णाणावरणिज्जं कम्मं वंधेमाणे कइ कम्मप्पगडीओ

बंधइ ?, गोयमा ! सत्तविहबंधए वा अट्ठविहबंधए वा छव्विहबंधए वा' इत्यादि, इह सङ्ग्रहगाथा क्वचिद् दृश्यते—"वेयावेओ पढमो १ वेयाबंधो य वीयओ होइ २। बंधावेओ तइओ ३ चउत्थओ बंधबंधो उ ४ ॥ १ ॥" इति ॥ अनन्तरं बन्धक्रिया उक्तेति क्रियाविशेषाभिधानाय प्रस्तावनापूर्वकमिदमाह—

तए णं समणे भगवं महावीरे अन्नदा कदायि रायगिहाओ नगराओ गुणसिलाओ चेइयाओ पडिनिक्खमति २ बहिया जणवयविहारं विहरति, तेणं कालेणं तेणं समएणं उल्लुयतीरे नामं नगरे होत्था वन्नओ, तस्स णं उल्लुयतीरस्स नगरस्स बहिया उत्तरपुरच्छिमे दिसिभाए एत्थ णं एगजंबूए नामं चेइए होत्था वन्नओ, तए णं समणे भगवं महावीरे अन्नदा कदायि पुव्वाणुपुव्विं चरमाणे जाव एगजंबूए समोसढे जाव परिसा पडिगया, भंतेत्ति भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी—अणगारस्स णं भंते ! भावियप्पणो छट्ठंछट्ठेणं अणिक्खित्तेणं जाव आयावेमाणस्स तस्स णं पुरच्छिमेणं अवड्ढं दिवसं नो कप्पति हत्थं वा पादं वा बाहं वा ऊरुं वा आउट्टावेत्तए वा पसारेत्तए वा, पच्चच्छिमेणं से अवड्ढं दिवसं कप्पति हत्थं वा पादं वा जाव ऊरुं वा आउंटावेत्तए वा पसारेत्तए वा, तस्स णं अंसियाओ लंबंति तं च वेज्जे अदक्खु ईसिं पाडेति ईसिं २ अंसियाओ छिंदेज्जा से नूणं भंते ! जे छिंदति तस्स किरिया कज्जति जस्स छिज्जति नो तस्स किरिया कज्जइ णण्णत्थेगेणं धम्मंतराइएणं ?, हंता गोयमा ! जे छिंदति जाव धम्मंतराएणं। सेवं भंते ! सेवं भंतेति ॥ ( सूत्रं ५७१ ) ॥ १६-३ ॥

'तए ण'मित्यादि ॥ 'पुरच्छिमेणं'ति पूर्वभागे—पूर्वाह्ने इत्यर्थः 'अवड्ढं'ति अपगतार्द्धमर्द्धदिवसं यावत् न कल्पते हस्ताद्याकुण्टयितुं कायोत्सर्गव्यवस्थितत्वात् 'पच्चच्छिमेणं'ति पश्चिमभागे 'अवड्ढं दिवसं'ति दिनार्द्धं यावत् कल्पते हस्ताद्याकुण्टयितुं कायोत्सर्गाभावात्, एतच्च चूर्ण्यनुसारितया व्याख्यातं, 'तस्स य'त्ति तस्य पुनः साधोरेवं कायोत्सर्गाभिग्रहवतः 'अंसियाओ'त्ति अर्शांसि तानि च नासिकासत्कानीति चूर्णिकारः, 'तं च'त्ति तं चानगारं कृतकायोत्सर्गं लम्बमानार्शसम् 'अद्दक्खु'त्ति अद्राक्षीत्, ततश्चार्शसां छेदार्थं 'ईसिं पाडेइ'त्ति तमनगारं भूम्यां पातयति, नापातितस्यार्शश्छेदः कर्त्तुं शक्यत इति, 'तस्स'त्ति वैद्यस्य 'क्रिया' व्यापाररूपा सा च शुभा धर्मबुद्ध्या छिन्दानस्य लोभादिना त्वशुभा 'क्रियते' भवति 'जस्स छिज्जइ'त्ति यस्य साधोरर्शांसि छिद्यन्ते नो तस्य क्रिया भवति निर्व्यापारत्वात्, किं सर्वथा क्रियाया अभावः ?, नैवमत आह—'नन्नत्थे'त्यादि, नेति योऽयं निषेधः सोऽन्यत्रैकस्माद्धर्म्मान्तरायाद्, धर्म्मान्तरायलक्षणक्रिया तस्यापि भवतीति भावः, धर्मान्तरायश्च शुभध्यानविच्छेदादर्शश्छेदानुमोदनाद्वेति ॥ षोडशशते तृतीयः ॥ १६—३ ॥

अनन्तरोद्देशकेऽनगारवक्तव्यतोक्ता, चतुर्थेऽप्यसावेवोच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव-एवं वयासी—जावतियन्नं भंते ! अन्नइलायए समणे निग्गंथे कम्मं निज्जरेति एवतियं कम्मं नरएसु नेरतियाणं वासेण वा वासेहिं वा वाससएहिं वा खवति ?, णो तिणट्ठे समट्ठे, जावतियण्णं भंते ! चउत्थभत्तिए समणे निग्गंथे कम्मं निज्जरेति एवतियं कम्मं नरएसु नेरइया वाससएणं वा वाससएहिं वा

वाससहस्सेहिं वा वाससयसहस्सेहिं (ण) वा खवियंति ?, णो तिणट्ठे समट्ठे, जावतियन्नं भंते! छट्ठभत्तिए समणे
निग्गंथे कम्मं निज्जरेति एवतियं कम्मं नरएसु नेरइया वाससहस्सेण वा वाससहस्सेहिं वा वाससयसहस्सेण (हिं)
वा खवयंति ?, णो तिणट्ठे समट्ठे, जावतियन्नं भंते ! अट्ठमभत्तिए समणे निग्गंथे कम्मं निज्जरेति एवतियं
कम्मं नरएसु नेरतिया वाससयसहस्सेण वा वाससयसहस्सेहिं वा वासकोडीए वा खवयंति ?, नो तिणट्ठे
समट्ठे, जावतियन्नं भंते ! दसमभत्तिए समणे निग्गंथे कम्मं निज्जरेति एवतियं कम्मं नरएसु नेरतिया वास-
कोडीए वा वासकोडीहिं वा वासकोडाकोडीए वा खवयंति ?, नो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ
जावतियं अन्नइलातए समणे निग्गंथे कम्मं निज्जरेति एवतियं कम्मं नरएसु नेरतिया वासेण वा वासेहिं वा
वाससएण वा (जाव) वास(सय)सहस्सेण वा नो खवयंति जावतियं चउत्थभत्तिए, एवं तं चेव पुव्वभणियं उच्चारे-
यव्वं जाव वासकोडाकोडीए वा नो खवयंति ?, गोयमा ! से जहानामए—केइ पुरिसे जुन्ने जराजज्जरियदेहे सिढि-
लतयावलितरंगसंपिणद्धगत्ते पविरलपरिसडियदंतसेढी उण्हाभिहए तण्हाभिहए आउरे झुंझिए पिवासिए
दुब्बले किलंते एगं महं कोसंबगंडियं सुक्कं जडिलं गंठिल्लं चिक्कणं वाइद्धं अपत्तियं मुंडेण परसुणा अवक्कमेज्जा,
तए णं से पुरिसे महंताइं २ सद्दाइं करेइ नो महंताइं २ दलाइं अवद्दालेइ, एवामेव गोयमा ! नेरइयाणं
पावाइं कम्माइं गाढीकयाइं चिक्कणीकयाइं एवं जहा छट्ठसए जाव नो महापज्जवसाणा भवंति, से जहाना-
मए—केई पुरिसे अहिकरणिं आउडेमाणे महया जाव नो महापज्जवसाणा भवंति, से जहानामए—केई पुरिसे

तरुणे बलवं जाव मेहावी निउणसिप्पोवगए एगं महं सामलिगंडियं उल्लं अजडिलं अगंठिल्लं अचिक्कणं अवाइद्धं सपत्तियं तिक्खेण परसुणा अक्कमेज्जा, तए णं से णं पुरिसे नो महंताइं २ सद्दाइं करेति महंताइं २ दलाइं अवद्दालेति, एवामेव गोयमा! समणाणं निग्गंथाणं अहाबादराइं कम्माइं सिढिलीकयाइं णिट्ठियाइं कयाइं जाव खिप्पामेव परिविद्धत्थाइं भवंति जावतियं तावतियं जाव महापज्जवसाणा भवंति, से जहा वा केइ पुरिसे सुक्कतणहत्थगं जायतेयंसि पक्खिवेज्जा एवं जहा छट्ठसए तहा अयोकवल्लेवि जाव महाप० भवंति, से तेणट्ठेणं गोयमा! एवं वुच्चइ जावतियं अन्नइलायए समणे निग्गंथे कम्मं नि०तं चेव जाव वासकोडाकोडीए वा नो खवयंति॥ सेवं भंते! सेवं भंते! जाव विहरइ॥ ( सूत्रं ५७२ )॥ १६-४॥

'रायगिहे'इत्यादि, 'अन्नगिलायते'त्ति अन्नं विना ग्लायति-ग्लानो भवतीत्यन्नग्लायकः प्रत्यग्रकूरादिनिष्पत्तिं यावद् बुभुक्षातुरतया प्रतीक्षितुमशक्नुवन् यः पर्युषितकूरादि प्रातरेव भुङ्क्ते कूरगडुकप्राय इत्यर्थः, चूर्णिकारेण तु निःस्पृहत्वात् 'सीयकूरभोई अंतपंताहारो'त्ति व्याख्यातं, अथ कथमिदं प्रत्याय्यं यदुत नारको महाकष्टापन्नो महताऽपि कालेन तावत्कर्म्म न क्षपयति यावत्साधुरल्पकष्टापन्नोऽल्पकालेनेति ?, उच्यते, दृष्टान्ततः, स चायं—'से जहानामए केइ पुरिसे'त्ति यथेति दृष्टान्ते नाम-सम्भावने ए इत्यलङ्कारे 'से'त्ति स कश्चित्पुरुषः 'जुन्ने'त्ति जीर्णः-हानिगतदेहः, स च कारणवशादवृद्धभावेऽपि स्यादत आह-'जराजज्जरियदेहे'त्ति व्यक्तं, अत एव 'सिढिल(त्त)तयावलितरंगसंपिणद्धगत्ते'त्ति शिथिलतया त्वचावलीतरङ्गैश्च संपिनद्धं-परिगतं गात्रं-देहो यस्य स तथा 'पविरलपरिसडियदंतसेढि'त्ति प्रविरलाः-केचित् क्वचिच्च

पोग्गला परिणया नो अपरिणया, तं मायिमिच्छदिट्ठीउववन्नगं एवं पडिहणइ २ ओहिं पउंजइ ओहिं २ ममं
ओहिणा आभोएइ ममं २ अयमेयारूवे जाव समुप्पज्जित्था-एवं खलु समणे भगवं महावीरे जंबुद्दीवे २
जेणेव भारहे वासे जेणेव उल्लुयतीरे नगरे जेणेव एगजंबुए चेइए अहापडिरूवं जाव विहरति, तं सेयं खलु मे
समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्ता इमं एयारूवं वागरणं पुच्छित्तएत्तिकट्टु एवं संपेहेइ एवं
संपेहित्ता चउहिवि सामाणियसाहस्सीहिं परियारो जहा सूरियाभस्स जाव निग्घोसनाइयरवेणं जेणेव जंबु-
दीवे २ जेणेव भारहे वासे जेणेव उल्लुयातीरे नगरे जेणेव एगजंबुए चेइए जेणेव ममं अंतियं तेणेव पहारेत्थ
गमणाए, तए णं से सक्के देविंदे देवराया तस्स देवस्स तं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं देवाणुभागं दिव्वं
तेयलेस्सं असहमाणे ममं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ संभंतिय जाव पडिगए (सूत्रं ५७४) जावं च
णं समणे भगवं महावीरे भगवओ गोयमस्स एयमट्ठं परिकहेति तावं च णं से देवे तं देसं हव्वमागए, तए
णं से देवे समणं भगवं महावीरं तिक्खुत्तो वंदति नमंसति २ एवं वयासी-एवं खलु भंते ! महासुक्के कप्पे
महासामाणे विमाणे एगे मायिमिच्छदिट्ठिउववन्नए देवे ममं एवं वयासी-परिणममाणा पोग्गला नो परि-
णया अपरिणया परिणमंतीति पोग्गला नो परिणया अपरिणया, तए णं अहं तं मायिमिच्छदिट्ठिउववन्नगं
देवं एवं वयासी-परिणममाणा पोग्गला परिणया नो अपरिणया परिणमंतीति पोग्गला परिणया णो अपरि-
णया, से कहमेयं भंते ! एवं ?, गंगदत्तादिसमणे भगवं महावीरे गंगदत्तं एवं वयासी-अहंपि णं गंगदत्ता !

एवमाइक्खामि ४ परिणममाणा पोग्गला जाव नो अपरिणया सच्चमेसे अट्ठे, तए णं से गंगदत्ते देवे समणस्स भगवओ महावीरस्स अंतियं एयमट्ठं सोचा निसम्म हट्ठतुट्ठे समणं भगवं महावीरं वंदति नमं० २ नच्चासन्ने जाव पज्जुवासति, तए णं समणे भ० महावीरे गंगदत्तस्स देवस्स तीसे य जाव धम्मं परिकहेइ जाव आराहए भवति, तए णं से गंगदत्ते देवे समणस्स भगवओ० अंतिए धम्मं सोचा निसम्म हट्ठतुट्ठे उट्ठाए उट्ठेति उ० २ समणं भगवं महावीरं वंदति नमंसति २ एवं वयासी—अहण्हं भंते! गंगदत्ते देवे किं भवसिद्धिए अभवसिद्धिए? एवं जहा सूरियाभो जाव बत्तीसतिविहं नट्टविहं उवदंसेति उव० २ जाव तामेव दिसं पडिगए ( सूत्रं ५७५ ) ॥

'तेण'मित्यादि, इह सर्वोऽपि संसारी बाह्यान् पुद्गलाननुपादाय न काञ्चित् क्रियां करोतीति सिद्धमेव, किन्तु देवः किल महर्द्धिकः, महर्द्धिकत्वादेव च गमनादिक्रियां मा कदाचित् करिष्यतीति सम्भावनायां शक्रः प्रश्नं चकार—'देवे णं भंते!' इत्यादि, 'भासित्तए वा वागरित्तए व'त्ति भाषितुं—वक्तुं व्याकर्त्तुम्—उत्तरं दातुमित्यनयोर्विशेषः, प्रश्नश्चायं तृतीयः, उन्मेषादिश्चतुर्थः, आकुण्टनादिः पञ्चमः, स्थानादिः षष्ठः, विकुर्वितुमिति सप्तमः, परिचारयितुमष्टमः ८ 'उक्खित्तपसिण-वागरणाइं'ति उत्क्षिप्तानीवोत्क्षिप्तानि—अविस्तारितस्वरूपाणि प्रच्छनीयत्वात्प्रश्नाः व्याक्रियमाणत्वाच्च व्याकरणानि यानि तानि तथा 'संभंतियवंदणएणं'ति सम्भ्रान्तिः—सम्भ्रमः औत्सुक्यं तया निर्वृत्तं साम्भ्रान्तिकं यद्वन्दनं तत्तथा तेन। 'परिणममाणा पोग्गला नो परिणय'त्ति वर्त्तमानातीतकालयोर्विरोधादत एवाह—'अपरिणय'त्ति, इहैवोपपत्तिमाह

परिणमन्तीति कृत्वा नो परिणतास्ते व्यपदिश्यन्त इति मिथ्यादृष्टिवचनं, सम्यग्दृष्टिः पुनराह—'परिणममाणा पोग्गला परिणया नो अपरिणय'त्ति, कुतः ? इत्याह–परिणमन्तीतिकृत्वा पुद्गलाः परिणता नो अपरिणताः, परिणमन्तीति हि यदुच्यते तत्परिणामसद्भावे नान्यथाऽतिप्रसङ्गात्, परिणामसद्भावे तु परिणमन्तीति व्यपदेशे परिणतत्वमवश्यंभावि, यदि हि परिणामे सत्यपि परिणतत्वं न स्यात्तदा सर्वदा तदभावप्रसङ्ग इति । 'परिवारो जहा सूरियाभस्से'त्यनेनेदं सूचितं–'तिहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य बहूहिं महासामाणविमाणवासीहिं वेमाणिएहिं देवेहिं सद्धिं संपरिवुडे' इत्यादि ।

भंतेत्ति भगवं गोयमे समणं भगवं महावीरं जाव एवं वयासी–गंगदत्तस्स णं भंते ! देवस्स सा दिव्वा देवड्ढी दिव्वा देवजुती जाव अणुप्पविट्ठा ?, गोयमा ! सरीरं गया सरीरं अणुप्पविट्ठा कूडागारसालादिट्ठंतो जाव सरीरं अणुप्पविट्ठा । अहो णं भंते ! गंगदत्ते देवे महड्ढिए जाव महेसक्खे ?, गंगदत्तेणं भंते ! देवेणं सा दिव्वा देवड्ढी दिव्वा देवजुत्ती किण्णा लद्धा जाव गंगदत्तेणं देवेणं सा दिव्वा देवड्ढी जाव अभिसमन्नागया ?, गोयमादी समणे भगवं महावीरे भगवं गोयमं एवं वयासी–एवं खलु गोयमा ! तेणं कालेणं २ इहेव जंबुद्दीवे २ भारहे वासे हत्थिणापुरे नामं नगरे होत्था वन्नओ, सहसंबवणे उज्जाणे वन्नओ, तत्थ णं हत्थिणापुरे नगरे गंगदत्ते नामं गाहावती परिवसति अड्ढे जाव अपरिभूए, तेणं कालेणं २ मुणिसुव्वए अरहा आदिगरे जाव सव्वन्नू सव्वदरिसी आगासगएणं चक्केणं जाव पकड्ढिज्जमाणेणं प० सीसगणसंपरिवुडे पुव्वाणुपुव्विं

चरमाणे गामाणुगामं जाव जेणेव सहसंबवणे उज्जाणे जाव विहरति परिसा निग्गया जाव पज्जुवासति, तए णं से गंगदत्ते गाहावती इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठ जाव कयबलिजाव सरीरे साओ गिहाओ पडिनिक्खमति २ पायविहारचारेणं हत्थिणागपुरं नगरं मज्झंमज्झेणं निग्गच्छति २ जेणेव सहसंबवणे उज्जाणे जेणेव मुणिसुव्वए अरहा तेणेव उवागच्छइ २ मुणिसुव्वयं अरहं तिक्खुत्तो आ० २ जाव तिविहाए पज्जुवासणाए पज्जुवासति, तए णं मुणिसुव्वए अरहा गंगदत्तस्स गाहावतिस्स तीसे य महतिजाव परिसा पडिगया, तए णं से गंगदत्ते गाहावती मुणिसुव्वयस्स अरहओ अंतियं धम्मं सोच्चा निसम्म हट्ठतुट्ठ० उट्ठाए उट्ठेति २ मुणिसुव्वयं अरहं वंदति नमंसति वंदित्ता नमंसित्ता एवं वयासी—सद्दहामि णं भंते ! निग्गंथं पावयणं जाव से जहेयं तुज्झे वदह, जं नवरं देवाणुप्पिया! जेट्ठपुत्तं कुडुंबे ठावेमि तए णं अहं देवाणुप्पियाणं अंतियं मुंडे जाव पव्वयामि, अहासुहं देवाणुप्पिया ! मा पडिबंधं, तए णं से गंगदत्ते गाहावई मुणिसुव्वएणं अरहया एवं वुत्ते समाणे हट्ठतुट्ठ० मुणिसुव्वयं अरिहं वंदति न० २ मुणिसुव्वयस्स अरहओ अंतियाओ सहसंबवणाओ उज्जाणाओ पडिनिक्खमति प० २ जेणेव हत्थिणापुरे नगरे जेणेव सए गिहे तेणेव उवा० २ विउलं असणं पाणं जाव उवक्खडावेति उ० २ मित्तणातिणियगजाव आमंतेति आमंतेत्ता तओ पच्छा ण्हाए जहा पूरणे जाव जेट्ठपुत्तं कुटुंबे ठावेति तं मित्तणाति जाव जेट्ठपुत्तं च आपुच्छति आ० २ पुरिससहस्सवाहिणिं सीयं दुरूहति पुरिससह० २ मित्तणातिनियगजाव परिजणेणं जेट्ठपुत्तेण य समणुगम्ममाणमग्गे सवि-

ड्डीए जावणादितरवेणं हत्थिणागपुरं मज्झंमज्झेणं निग्गच्छइ नि० २ जेणेव सहसंबवणे उज्जाणे तेणेव उवा० २ छत्तादिते तित्थगरातिसए पासति एवं जहा उदायणो जाव सयमेव आभरणं मुयइ स० २ सयमेव पंचमुट्ठियं लोयं करेति स० २ जेणेव मुणिसुव्वए अरहा एवं जहेव उदायणो तहेव पव्वइए, तहेव एक्कारस अंगाइं अहिज्जइ जाव मासियाए संलेहणाए सट्ठिं भत्ताइं अणसणाए जाव छेदेति सट्ठिं भत्ताइं० २ आलोइयपडिक्कंते समाहिपत्ते कालमासे कालं किच्चा महासुक्के कप्पे महासामाणे विमाणे उववायसभाए देवसयणिज्जंसि जाव गंगदत्तदेवत्ताए उववन्ने, तए णं से गंगदत्ते देवे अहुणोववन्नमेत्तए समाणे पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छति, तंजहा—आहारपज्जत्तीए जाव भासामणपज्जत्तीए, एवं खलु गोयमा ! गंगदत्तेणं देवेणं सा दिव्वा देवड्ढी जाव अभिसम०। गंगदत्तस्स णं भंते ! केवतियं कालं ठिती पन्नत्ता ?, गोयमा ! सत्तरससागरोवमाइं ठिती, गंगदत्ते णं भंते ! देवे ताओ देवलोगाओ आउक्खएणं जाव महावि० वासे सिज्झिहिति जाव अंतं काहिति ॥ सेवं भंते ! २ त्ति ॥ ( सूत्रं ५७६ ) ॥ १६-५ ॥

'दिव्वं तेयलेस्सं असहमाणे'त्ति इह किल शक्रः पूर्वभवे कार्त्तिकाभिधानोऽभिनवश्रेष्ठी बभूव गङ्गदत्तस्तु जीर्णः श्रेष्ठीति, तयोश्च प्रायो मत्सरो भवतीत्यसावसहनकारणं संभाव्यत इति, 'एवं जहा सूरियाभो'त्ति अनेनेदं सूचितं—'सम्मादिट्ठी मिच्छादिट्ठी परित्तसंसारिए अणंतसंसारिए सुलभबोहिए दुल्लभबोहिए आराहए विराहए चरिमे अचरिमे' इत्यादीति ॥ षोडशशतस्य पञ्चमोद्देशः परिपूर्णतां प्राप्तः ॥ १६-५ ॥

पञ्चमोद्देशके गङ्गदत्तस्य सिद्धिरुक्ता, सा च भव्यानां केषाञ्चित् स्वप्नेनापि सूचिता भवतीति स्वप्नस्वरूपं षष्ठेनोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

कतिविहे णं भंते ! सुविणदंसणे पण्णत्ते ?, गोयमा ! पंचविहे सुविणदंसणे पण्णत्ते, तंजहा—अहातच्चे पयाणे चिंतासुविणे तव्विवरीए अवत्तदंसणे ॥ सुत्ते णं भंते ! सुविणं पासति जागरे सुविणं पासति सुत्तजागरे सुविणं पासति ?, गोयमा ! नो सुत्ते सुविणं पासइ नो जागरे सुविणं पासइ सुत्तजागरे सुविणं पासइ ॥ जीवा णं भंते ! किं सुत्ता जागरा सुत्तजागरा ?, गोयमा ! जीवा सुत्तावि जागरावि सुत्तजागरावि, नेरइया णं भंते ! किं सुत्ता० ? पुच्छा, गोयमा ! नेरइया सुत्ता नो जागरा नो सुत्तजागरा, एवं जाव चउरिंदिया, पंचिंदियतिरिक्खजोणिया णं भंते ! किं सुत्ता० पुच्छा, गोयमा ! सुत्ता नो जागरा सुत्तजागरावि, मणुस्सा जहा जीवा, वाणमंतरजोइसियवेमाणिया जहा नेरइया ॥ ( सूत्रं ५७७ ) ॥ संवुडे णं भंते ! सुविणं पासइ असंवुडे सुविणं पासइ संवुडासंवुडे सुविणं पासइ ?, गोयमा ! संवुडेवि सुविणं पासइ असंवुडेवि सुविणं पासइ संवुडासंवुडेवि सुविणं पासइ, संवुडे सुविणं पासति अहातच्चं पासति, असंवुडे सुविणं पासति तहावि तं होज्जा अन्नहा वा तं होज्जा, संवुडासंवुडे सुविणं पासति एवं चेव ॥ जीवा णं भंते ! किं संवुडा असंवुडा संवुडासंवुडा ?, गोयमा ! जीवा संवुडावि असंवुडावि संवुडासंवुडावि, एवं जहेव सुत्ताणं दंडओ तहेव भाणियव्वो ॥ कति णं भंते ! सुविणा पण्णत्ता ?, गोयमा ! बायालीसं सुविणा पन्नत्ता, कइ णं

भंते ! महासुविणा पण्णत्ता ?, गोयमा ! तीसं महासुविणा पण्णत्ता, कति णं भंते ! सव्वसुविणा पण्णत्ता ?, गोयमा ! बावत्तरिं सव्वसुविणा पण्णत्ता । तित्थयरमायरो णं भंते ! तित्थगरंसि गब्भं वक्कममाणंसि कति महासुविणे पासित्ताणं पडिबुज्झंति ?, गोयमा ! तित्थयरमायरो णं तित्थयरंसि गब्भं वक्कममाणंसि एएसिं तीसाए महासुविणाणं इमे चोद्दस महासुविणे पासित्ताणं पडिबुज्झंति, तं०–गयउसभसीहअभिसेयजाव सिहिं च । चक्कवट्टिमायरो णं भंते ! चक्कवट्टिंसि गब्भं वक्कममाणंसि कति महासुमिणे पासित्ता णं पडिबुज्झंति ?, गोयमा ! चक्कवट्टिमायरो चक्कवट्टिंसि जाव वक्कममाणंसि एएसिं तीसाए महासु० एवं जहा तित्थगरमायरो जाव सिहिं च । वासुदेवमायरो णं पुच्छा, गोयमा ! वासुदेवमायरो जाव वक्कममाणंसि एएसिं चोद्दसण्हं महासुविणाणं अन्नयरे सत्त महासुविणे पासित्ताणं पडिबु० । बलदेवमायरो वा णं पुच्छा, गोयमा ! बलदेवमायरो जाव एएसिं चोद्दसण्हं महासुविणाणं अन्नयरे चत्तारि महासुविणे पासित्ता णं पडि० । मंडलियमायरो णं भंते ! पुच्छा०, गोयमा ! मंडलियमायरो जाव एएसिं चोद्दसण्हं महासु० अन्नयरं एगं महं सुविणं जाव पडिबु० ( सूत्रं ५७८ ) ॥ समणे भ० महावीरे छउमत्थकालियाए अंतिमराइयंसि इमे दस महासुविणे पासित्ताणं पडिबुद्धे, तं०–एगं च णं महं घोररूवदित्तधरं तालपिसायं सुविणे पराजियं पासित्ताणं पडिबुद्धे १ एगं च णं महं सुक्किलपक्खगं पुंसकोइलं सुविणे पासि० २ एगं च णं महं चित्तविचित्तपक्खगं पुंसकोइलगं सुविणे पासित्ता णं पडिबुद्धे ३ एगं च णं महं दामदुगं सव्वरयणामयं सुविणे

पासित्ता० ४ एगं च णं महं सेयगोवग्गं सुविणे पा० ५ एगं च णं महं पउमसरं सवओ समंता कुसुमिय० सुविणे० ६ एगं च णं महं सागरं उम्मीवीयीसहस्सकलियं भुयाहिं तिन्नं सुविणे पासित्ता० ७ एगं च णं महं दिणयरं तेयसा जलंतं सुविणे पासइ० ८ एगं च णं महं हरिवेरुलियवन्नाभेणं नियगेणं अंतेणं माणुसुत्तरं पव्वयं सवओ समंता आवेढियं परिवेढियं सुविणे पासित्ताणं पडिवुद्धे ९ एगं च णं महं मंदरे पव्वए मंदरचूलियाए उवरिं सीहासणवरगयं अप्पाणं सुविणे पासित्ता णं पडिवुद्धे १० । जण्णं समणं भगवं म० एगं घोररूवदित्तधरं तालपिसायं सुविणे पराजियं पा० जाव पडिवुद्धे तण्णं समणेणं भगवया महा० मोहणिज्जे कम्मे मूलाओ उग्घायिए १ जन्नं समणे भ० म० एगं महं सुक्किलजाव पडिवुद्धे तण्णं समणे भ० म० सुक्कज्झाणोवगए विहरति, जण्णं समणे भ० म० एगं महं चित्तविचित्तजाव पडिवुद्धे तण्णं समणे भ० म० विचित्तं ससमयपरसमइयं दुवालसंगं गणिपिडगं आघवेति पन्नवेति परूवेति दंसेति निदंसेति उवदंसेति, तंजहा–आयारं सूयगडं जाव दिट्ठिवायं ३, जण्णं समणे भ० म० एगं महं दामदुगं सवरयणामयं सुविणे पासित्ताणं पडिवुद्धे तण्णं समणे भ० म० दुविहं धम्मं पन्नवेति, तं०–आगारधम्मं वा अणागारधम्मं वा ४, जण्णं समणे भ० म० एगं महं सेयगोवग्गं जाव पडिवुद्धे तण्णं समणस्स भ० म० चाउवण्णाइन्ने समणसंघे, तं०–समणा समणीओ सावया सावियाओ ५, जण्णं समणे भ० म० एगं महं पउमसरं जाव पडिवुद्धे तण्णं समणे जाव वीरे चउविहे देवे पन्नवेति, तं०–भवणवासी वाणमंतरे जोतिसिए वेमाणिए ६, जन्नं समणे भग० म० एगं

महं सागरं जाव पडिबुद्धे तन्नं समणेणं भगवया महावीरेणं अणादीए अणवदग्गे जाव संसारकंतारे तिन्ने ७, जन्नं समणे भगवं म० एगं महं दिणयरं जाव पडिबुद्धे तन्नं समणस्स भ० म० अणंते अणुत्तरे नि० नि० क० पडि० केवल० दंस० समुप्पन्ने ८, जण्णं समणे जाव वीरे एगं महं हरिवेरुलिय जाव पडिबु० तण्णं समणस्स भ० म० ओराला कित्तिवन्नसद्दसिलोया सदेवमणुयासुरे लोए परिभमंति-इति खलु समणे भगवं महावीरे इति० ९, जन्नं समणे भगवं महावीरे मंदरे पव्वए मंदरचूलियाए जाव पडिबुद्धे तण्णं समणे भगवं महावीरे सदेवमणुआसुराए परिसाए मज्झगए केवली धम्मं आघवेति जाव उवदंसेति ॥ (५७९) ॥

'कइविहे'इत्यादि, 'सुविणदंसणे'त्ति स्वप्नस्य-स्वापक्रियानुगतार्थविकल्पस्य दर्शनं-अनुभवनं, तच्च स्वप्नभेदात्पञ्चवि-धमिति, 'अहातच्चे'ति यथा-येन प्रकारेण तथ्यं-सत्यं तत्त्वं वा तेन यो वर्त्ततेऽसौ यथातथ्यो यथातत्त्वो वा, स च दृष्टा-र्थाविसंवादी फलाविसंवादी वा, तत्र दृष्टार्थाविसंवादी स्वप्नः किल कोऽपि स्वप्नं पश्यति यथा मह्यं फलं हस्ते दत्तं जागरि-तस्तथैव पश्यतीति, फलाविसंवादी तु किल कोऽपि गोवृषकुञ्जराद्यारूढमात्मानं पश्यति बुद्धश्च कालान्तरे सम्पदं लभत इति, 'पयाणे'त्ति प्रतननं प्रतानो-विस्तारस्तद्रूपः स्वप्नो यथातथ्यः तदन्यो वा प्रतान इत्युच्यते, विशेषणकृत एव चानयोर्भेदः, एवमुत्तरत्रापि, 'चिंतासुमिणे'त्ति जाग्रदवस्थस्य या चिन्ता-अर्थचिन्तनं तत्संदर्शनात्मकः स्वप्नश्चिन्तास्वप्नः, 'तव्विवरीए'त्ति यादृशं वस्तु स्वप्ने दृष्टं तद्विपरीतस्यार्थस्य जागरणे यत्र प्राप्तिः स तद्विपरीतस्वप्नो यथा कश्चिदात्मानं मेध्यविलिप्तं स्वप्ने पश्यति जागरितस्तु मेध्यमर्थं कंचन प्राप्नोतीति, अन्ये तु तद्विपरीतमेवमाहुः—कश्चित् स्वरूपेण मृत्तिकास्थलमारूढः स्वप्ने

च पश्यत्यात्मानमश्वारूढमिति, 'अवत्तदंसणे'त्ति अव्यक्तं–अस्पष्टं दर्शनं–अनुभवः स्वप्नार्थस्य यत्रासावव्यक्तदर्शनः ॥ स्वप्नाधिकारादेवेदमभिधातुमाह—'सुत्ते ण'मित्यादि, 'सुत्तजागरे'त्ति नातिसुप्तो नातिजाग्रदित्यर्थः, इह सुप्तो जागरश्च द्रव्यभावाभ्यां स्यात्तत्र द्रव्यतो निद्रापेक्षया भावतश्च विरत्यपेक्षया, तत्र च स्वप्नव्यतिकरो निद्रापेक्ष उक्तः, अथ विरत्यपेक्षया जीवादीनां पञ्चविंशतेः पदानां सुप्तत्वजागरत्वे प्ररूपयन्नाह—'जीवा ण'मित्यादि, तत्र 'सुत्त'त्ति सर्वविरतिरूपनैश्चयिकप्रबोधभावात् 'जागर'त्ति सर्वविरतिरूपप्रवरजागरणसद्भावात् 'सुत्तजागर'त्ति अविरतिरूपसुप्तप्रवुद्धतासद्भावादिति ॥ पूर्वं स्वप्नद्रष्टार उक्ताः, अथ स्वप्नस्यैव तथ्यातथ्यविभागदर्शनार्थं तानेवाह—'संवुडे ण'मित्यादि, 'संवृतः' निरुद्धाश्रवद्वारः सर्वविरत इत्यर्थः, अस्य च जागरस्य च शब्दकृत एव विशेषः, द्वयोरपि सर्वविरताभिधायकत्वात् किन्तु जागरः सर्वविरतियुक्तो वोधापेक्षयोच्यते संवृतस्तु तथाविधवोधोपेतसर्वविरत्यपेक्षयेति, 'संवुडे णं सुविणं पासइ अहातच्चं पासइ'त्ति सत्यमित्यर्थः, संवृतश्चेह विशिष्टतरसंवृतत्वयुक्तो ग्राह्यः स च प्रायः क्षीणमलत्वात् देवताऽनुग्रहयुक्तत्वाच्च सत्यं स्वप्नं पश्यतीति ॥ अनन्तरं संवृतादिः स्वप्नं पश्यतीत्युक्तमथ संवृतत्वाद्येव जीवादिषु दर्शयन्नाह—'जीवा ण'मित्यादि ॥ स्वप्नाधिकारादेवेदमाह—'कइ ण'मित्यादि, 'बायालीसं सुविण'त्ति विशिष्टफलसूचकस्वप्नापेक्षया द्विचत्वारिंशदन्यथाऽसङ्ख्येयास्ते संभवन्तीति, 'महासुविण'त्ति महत्तमफलसूचकाः 'बावत्तरि'त्ति एतेषामेव मीलनात् । 'अंतिमराइयंसि'त्ति रात्रेरन्तिमे भागे 'घोररूवदित्तधरं'ति घोरं यद्रूपं दीप्तं च दृप्तं वा तद्धारयति यः स तथा तं 'तालपिसायं'ति तालो–वृक्षविशेषः स च स्वभावाद्दीर्घो भवति ततश्च ताल इव पिशाचस्तालपिशाचस्तम्, एषां च पिशाचाद्य-

र्थानां मोहनीयादिभिः स्वप्नफलविषयभूतैः सह साधर्म्यं स्वयमभ्यूह्यं, 'पुंसकोइलगं'ति पुंस्कोकिलं—कोकिलपुरुषमित्यर्थः, 'दामदुगं'ति मालाद्वयम् 'उंम्मीवीइसहस्सकलियं'ति इहोर्म्मयो—महाकल्लोलाः वीचयस्तु ह्रस्वाः, अथवोर्म्मीणां वीचयो-विविक्तव्यानि तत्सहस्रकलितं, 'हरिवेरुलियवण्णाभेणं'ति हरिच्च—तन्नीलं वैडूर्यवर्णाभं चेति समासस्तेन 'आवेढियं'ति अभिविधिना वेष्टितं सर्वत इत्यर्थः 'परिवेढियं'ति पुनः पुनरित्यर्थः 'उवरिं'त्ति उपरि 'गणिपिडगं'ति गणीनां—अर्थपरिच्छेदानां पिटकमिव पिटकं—आश्रयो गणिपिटकं गणिनो वा—आचार्यस्य पिटकमिव—सर्वस्वभाजनमिव गणिपिटकम् 'आघवेइ'त्ति आख्यापयति सामान्यविशेषरूपतः 'पन्नवेति'त्ति सामान्यतः 'परूवेइ'त्ति प्रतिसूत्रमर्थकथनेन 'दंसेइ'त्ति तदभिधेयप्रत्युपेक्षणादिक्रियादर्शनेन 'निदंसेइ'त्ति कथञ्चिदगृह्णतोऽनुकम्पया निश्चयेन पुनः पुनर्दर्शयति 'उवदंसेइ'त्ति सकलनययुक्तिभिरिति, 'चाउवण्णाइन्ने'त्ति चातुर्वर्णश्चासावाकीर्णश्च ज्ञानादिगुणैरिति चातुर्वर्णाकीर्णः 'चउव्विहे देवे पन्नवेइ'त्ति प्रज्ञापयति—प्रतिबोधयति शिष्यीकरोतीत्यर्थः, 'अणंते'ति विषयानन्तत्वात् 'अणुत्तरे'त्ति सर्वप्रधानत्वात्, यावत्करणादिदं दृश्यं—'निव्वाघाए'कटकुड्यादिनाऽप्रतिहतत्वात् 'निरावरणे' क्षायिकत्वात् 'कसिणे' सकलार्थग्राहकत्वात् 'पडिपुन्ने' अंशेनापि स्वकीयेनान्यूनत्वादिति ।

इत्थी वा पुरिसे वा सुविणंते एगं महं हयपंतिं वा गयपंतिं वा जाव वसभपंतिं वा पासमाणे पासति दुरूहमाणे दुरूहति दुरूढमिति अप्पाणं मन्नति तक्खणामेव बुज्झति तेणेव भवग्गहणेणं सिज्झति जाव अंतं करेति । इत्थी वा पुरिसे वा सुविणंते एगं महं दामिणिं पाईणपडिणायतं दुहओ समुद्दे पुट्ठं पासमाणे

पासति संवेल्लेमाणे संवेल्लेइ संवेल्लियमिति अप्पाणं मन्नति तक्खणामेव अप्पाणं वुज्झति तेणेव भवग्गहणेणं जाव अंतं करेति। इत्थी वा पुरिसे वा एगं महं रज्जुं पाईणपडिणायतं दुहओ लोगंते पुट्ठं पासमाणे पासति छिंदमाणे छिंदति छिन्नमिति अप्पाणं मन्नति तक्खणामेव जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं किण्हसुत्तगं वा जाव सुक्किलसुत्तगं वा पासमाणे पासति उग्गोवेमाणे उग्गोवेइ उग्गोवितमिति अप्पाणं मन्नति तक्खणामेव जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं अयरासिं वा तंब-रासिं तउयरासिं वा सीसगरासिं वा पासमाणे पासति दुरूहमाणे दुरूहति दुरूढमिति अप्पाणं मन्नति तक्ख-णामेव वुज्झति दोच्चे भवग्गहणे सिज्झति जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं हिरन्न-रासिं वा सुवन्नरासिं वा रयणरासिं वा वइररासिं वा पासमाणे पासइ दुरूहमाणे दुरूहइ दुरूढमिति अप्पाणं मन्नति तक्खणामेव वुज्झति तेणेव भवग्गहणेणं सिज्झति जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं तणरासिं वा जहा तेयनिसग्गे जाव अवकररासिं वा पासमाणे पासति विक्खिरमाणे विक्खिरइ विकिण्णमिति अप्पाणं मन्नति तक्खणामेव वुज्झति तेणेव जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं सरथंभं वा वीरिणथंभं वा वंसीमूलथंभं वा वल्लीमूलथंभं वा पासमाणे पासइ उम्मूले-माणे उम्मूलेइ उम्मूलितमिति अप्पाणं मन्नइ तक्खणामेव वुज्झति तेणेव जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं खीरकुंभं वा दधिकुंभं वा घयकुंभं वा मधुकुंभं वा पासमाणे पासति उप्पाडेमाणे

उप्पाडेइ उप्पाडितमिति अप्पाणं मन्नति तक्खणामेव बुज्झति तेणेव जाव अंतं करेइ। इत्थी वा पुरिसे वा सुविणंते एगं महं सुरावियडकुंभं वा सोवीरवियडकुंभं वा तेल्लकुंभं वा वसाकुंभं वा पासमाणे पासति भिंदमाणे भिंदति भिन्नमिति अप्पाणं मन्नति तक्खणामेव बुज्झति दोच्चेणं भव० जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं पउमसरं कुसुमियं पासमाणे पासति ओगाहमाणे ओगाहति ओगाढमिति अप्पाणं मन्नति तक्खणामेव० तेणेव जाव अंतं करेति। इत्थी वा जाव सुविणंते एगं महं सागरं उम्मीवीयी-जाव कलियं पासमाणे पासति तरमाणे तरति तिन्नमिति अप्पाणं मन्नति तक्खणामेव जाव अंतं करेति। इत्थी वा जाव सुविणंते एगं महं भवणं सव्वरयणामयं पासमाणे पासति [दुरूहमाणे दुरूहति दुरूढमिति०] अणुप्पविसमाणे अणुप्पविसति अणुप्पविट्ठमिति अप्पाणं मन्नति तक्खणामेव बुज्झति तेणेव जाव अंतं करेति। इत्थी वा पुरिसे वा सुविणंते एगं महं विमाणं सव्वरयणामयं पासमाणे पासइ दुरूहमाणे दुरूहति दुरूढमिति अप्पाणं मन्नति तक्खणामेव बुज्झति तेणेव जाव अंतं करेंति ॥ ( सूत्रं ५८० ) ॥

'सुविणंते'त्ति 'स्वप्नान्ते' स्वप्नस्य विभागे अवसाने वा 'गयपंतिं वा' इह यावत्करणादिदं दृश्यं—'नरपंतिं वा एवं किन्नरकिंपुरिसमहोरगगंधव'त्ति 'पासमाणे पासइ'ति पश्यन् पश्यत्तागुणयुक्तः सन् 'पश्यति' अवलोकयति, 'दामिणि'न्ति गवादीनां वन्धनविशेषभूतां रज्जुं 'दुहओ'त्ति द्वयोरपि पार्श्वयोरित्यर्थः 'संवेल्लेमाणे'त्ति संवेल्लयन् संवर्त्तयन् 'संवेल्लिय-मिति अप्पाणं मन्नइ'त्ति संवेल्लितान्तामित्यात्मना मन्यते विभक्तिपरिणामादिति 'उग्गोवेमाणे'त्ति उद्गोपयन् विमोहय-

न्नित्यर्थः 'जहा तेयनिसग्ग'त्ति यथा गोशालके, अनेन चेदं सूचितं-'पत्तरासीति वा तयारासीति वा भुसरासीति वा तुसरासीति वा गोमयरासीति व'त्ति 'सुरावियडकुंभ'ति सुरारूपं यद् विकटं-जलं तस्य कुम्भो यः स तथा 'सोवीरगवियडकुंभं व'त्ति इह सौवीरकं-काञ्जिकमिति ॥ अनन्तरं स्वप्ना उक्तास्ते चाचक्षुर्विषया इत्यचक्षुर्विषयितासाधर्म्येण गन्धपुद्गलवक्तव्यतामभिधातुमाह—

अह भंते ! कोट्ठपुडाण वा जाव केयतीपुडाण वा अणुवायंसि उब्भिज्जमाणाण वा जाव ठाणाओ वा ठाणं संकामिज्जमाणाणं किं कोट्ठे वाति जाव केयई वाइ ?, गोयमा ! नो कोट्ठे वाति जाव नो केयई वाती घाणसहगया पोग्गला वाति । सेवं भंते २ त्ति ( सूत्रं ५८१ ) ॥ १६-६ ॥

'अहे'त्यादि, 'कोट्ठपुडाण व'त्ति कोष्ठे यः पच्यते वाससमुदायः स कोष्ठ एव तस्य पुटाः-पुटिकाः कोष्ठपुटास्तेषां, यावत्करणादिदं दृश्यं-'पत्तपुडाण वा चोयपुडाण वा तगरपुडाण वे'त्यादि, तत्र पत्राणि-तमालपत्राणि 'चोय'त्ति त्वक् तगरं च-गन्धद्रव्यविशेषः 'अणुवायंसि' अनुकूलो वातो यत्र देशे सोऽनुवातोऽतस्तत्र यस्माद्देशाद्वायुरागच्छति तत्रेत्यर्थः 'उब्भिज्जमाणाण व'त्ति प्राबल्येनोर्द्ध्वं वा दीर्यमाणानाम्, इह यावत्करणादिदं दृश्यं-'निब्भिज्जमाणाण वा' प्राबल्याभावेनाधो वा दीर्यमाणानाम् 'उक्किरिज्जमाणाण वा विक्किरिज्जमाणाण वा'इत्यादि प्रतीतार्थाश्चैते शब्दाः, 'किं कोट्ठे वाइ'त्ति कोष्ठो-वाससमुदायो वाति-दूरादागच्छति, आगत्य घ्राणग्राह्यो भवतीति भावः, 'घाणसहगय'त्ति घ्रायत इति घ्राणो-गन्धो गन्धोपलम्भक्रिया वा तेन सह गताः-प्रवृत्ता ये पुद्गलास्ते घ्राणसहगताः गन्धगुणोपेता इत्यर्थः ॥ षोडशशते षष्ठः ॥१६-६॥

षष्ठोद्देशकान्ते गन्धपुद्गला वान्तीत्युक्तं, ते चोपयोगेनावसीयन्त इत्युपयोगस्तद्विशेषभूता पश्यत्ता च सप्तमे प्ररूप्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

कतिविहे णं भंते! उवओगे पन्नत्ते?, गोयमा! दुविहे उवओगे पन्नत्ते एवं जहा उवयोगपदं पन्नवणाए तहेव निरवसेसं भाणियव्वं, पासणयापदं च निरवसेसं नेयव्वं। सेवं भंते! सेवं भंतेत्ति ॥ (सूत्रं ५८२) ॥ १६-७ ॥

'कइविहे ण'मित्यादि, 'एवं जहे'त्यादि, उपयोगपदं प्रज्ञापनायामेकोनत्रिंशत्तमं, तच्चैवं—'तंजहा—सागारोवओगे य अणागारोवओगे य। सागारोवओगे णं भंते! कतिविहे पण्णत्ते?, गोयमा! अट्ठविहे पण्णत्ते, तंजहा—आभिणिबोहिय-णाणसागारोवओगे सुयणाणसागारोवओगे एवं ओहिणाण० मणपज्जवनाण० केवलनाण० मतिअन्नाणसागारोवओगे सुयअन्नाणसागारोवओगे विभंगनाणसागारोवओगे। अणागारोवओगे णं भंते! कतिविहे पण्णत्ते?, गोयमा! चउविहे पण्णत्ते, तंजहा—चक्खुदंसणअणागारोवओगे अचक्खुदंसणअणागारोवओगे ओहिदंसणअणागारोवओगे केवलदंसणअ-णागारोवओगे'इत्यादि, एतच्च व्यक्तमेव, 'पासणयापयं च णेयव्वं'ति पश्यत्तापदमिह स्थानेऽध्येतव्यमित्यर्थः, तच्च प्रज्ञा-पनायां त्रिंशत्तमं, तच्चैवं—'कतिविहा णं भंते! पासणया पण्णत्ता?, गोयमा! दुविहा पासणया पण्णत्ता, तंजहा—सागा-रपासणया अणागारपासणया, सागारपासणया णं भंते! कतिविहा पण्णत्ता?, गोयमा! छव्विहा प०, तं०—सुयणाणसागार-पासणया एवं ओहिनाण० मणनाण० केवलनाण० सुयअन्नाण० विभंगनाणसागारपासणया, अणागारपासणया णं भंते! कतिविहा प०?, गोयमा! तिविहा पण्णत्ता, तंजहा—चक्खुदंसणअणागारपासणया ओहिदंसणअणागारपासणया केवलदं-

सणअणागारपासणया'इत्यादि, अस्य चायमर्थः—'पासणय'त्ति पश्यतो भावः पश्यत्ता—बोधपरिणामविशेषः, ननु पश्यत्तोपयोगयोस्तुल्ये साकारानाकारभेदत्वे कः प्रतिविशेषः ?, उच्यते, यत्र त्रैकालिकोऽवबोधोऽस्ति तत्र पश्यत्ता यत्र पुनर्वर्त्तमानकालस्त्रैकालिकश्च तत्रोपयोग इत्ययं विशेषः, अत एव मतिज्ञानं मत्यज्ञानं च साकारपश्यत्तायां नोक्तं, तस्योत्पन्नाविनष्टार्थग्राहकत्वेन साम्प्रतकालविषयत्वात्, अथ कस्मादनाकारपश्यत्तायां चक्षुर्दर्शनमधीतं न शेषेन्द्रियदर्शनं, उच्यते, पश्यत्ता प्रकृष्टमीक्षणमुच्यते 'दृशिर् प्रेक्षणे' इति वचनात्, प्रेक्षणं च चक्षुर्दर्शनस्यैवास्ति न शेषाणां, चक्षुरिन्द्रियोपयोगस्य शेषेन्द्रियोपयोगापेक्षयाऽल्पकालत्वात्, यत्र चोपयोगोऽल्पकालस्तत्रेक्षणस्य प्रकर्षो झटित्यर्थपरिच्छेदात्, तदेवं चक्षुर्दर्शनस्यैव पश्यत्ता नेतरस्येति, अयं चार्थः प्रज्ञापनातो विशेषेणावगम्य इति ॥ षोडशशते सप्तमः ॥ १६—७ ॥

---

सप्तमे उपयोग उक्तः, स च लोकविषयोऽपीतिसम्बन्धादष्टमे लोकोऽभिधीयते, तस्य चेदमादिसूत्रम्—

**किंमहालए णं भंते ! लोए पन्नत्ते ?, गोयमा ! महतिमहालए जहा बारसमसए तहेव जाव असंखेज्जाओ जोयणकोडाकोडीओ परिक्खेवेणं, लोयस्स णं भंते ! पुरच्छिमिल्ले चरिमंते किं जीवा जीवदेसा जीवपएसा अजीवा अजीवदेसा अजीवपएसा ?, गोयमा ! नो जीवा जीवदेसावि जीवपएसावि अजीवावि अजीवदेसावि अजीवपएसावि ॥ जे जीवदेसा ते नियमं एगिंदियदेसा य अहवा एगिंदियदेसा य बेइंदियस्स य देसे एवं जहा दसमसए अग्गेयीदिसा तहेव नवरं देसेसु अणिंदियाणं आइल्लविरहिओ। जे अरूवी अजीवा ते**

छविहा, अद्धासमयो नत्थि, सेसं तं चेव सव्वं निरवसेसं। लोगस्स णं भंते! दाहिणिल्ले चरिमंते किं जीवा० ?, एवं चेव, एवं पचच्छिमिल्लेवि, उत्तरिल्लेवि, लोगस्स णं भंते! उवरिल्ले चरिमंते किं जीवा० ? पुच्छा, गोयमा! नो जीवा जीवदेसावि जाव अजीवपएसावि। जे जीवदेसा ते नियमं एगिंदियदेसा य अणिंदियदेसा य अहवा एगिंदियदेसा य अणिंदिय० बेंदियस्स य देसे, अहवा एगिंदियदेसा य अणिंदियदेसा य बेंदियाण य देसा, एवं मज्झिल्लविरहिओ जाव पंचिंदि०, जे जीवप्पएसा ते नियमं एगिंदियप्पएसा य अणिंदियप्पएसा य अहवा एगिंदियप्पएसा य अणिंदियप्पएसा य बेंदियस्सप्पदेसा य अहवा एगिंदियपएसा य अणिंदियप्पएसा य बेइंदियाण य पएसा, एवं आदिल्लविरहिओ जाव पंचिंदियाणं, अजीवा जहा दसमसए तमाए तहेव निरवसेसं॥ लोगस्स णं भंते! हेट्ठिल्ले चरिमंते किं जीवा० पुच्छा ?, गोयमा! नो जीवा जीवदेसावि जाव अजीवप्पएसावि, जे जीवदेसा ते नियमं एगिंदियदेसा अहवा एगिंदियदेसा य बेइंदियस्स देसे अहवा एगिंदियदेसा य बेंदियाण य देसा एवं मज्झिल्लविरहिओ जाव अणिंदियाणं पदेसा आइल्लविरहिया सव्वेसिं जहा पुरच्छिमिल्ले चरिमंते तहेव, अजीवा जहेव उवरिल्ले चरिमंते तहेव॥ इमीसे णं भंते! रयणप्पभाए पुढवीए पुरच्छिमिल्ले चरिमंते किं जीवा० ? पुच्छा, गोयमा! नो जीवा एवं जहेव लोगस्स तहेव चत्तारिवि चरिमंता जाव उत्तरिल्ले, उवरिल्ले तहेव जहा दसमसए विमला दिसा तहेव निरवसेसं, हेट्ठिल्ले चरिमंते तहेव नवरं देसे पंचिंदिएसु तियभंगोत्ति सेसं तं चेव, एवं जहा रयणप्पभाए चत्तारि चरमंता भणिया एवं सक्करप्पभाएवि उवरि-

महेट्ठिल्ला जहा रयणप्पभाए हेट्ठिल्ले। एवं जाव अहे सत्तमाए, एवं सोहम्मस्सवि जाव अच्चुयस्स गेविज्जविमाणाणं एवं चेव, नवरं उवरिमहेट्ठिल्लेसु चरमंतेसु देसेसु पंचिंदियाणवि मज्झिल्लविरहिओ चेव एवं जहा गेवेज्जविमाणा तहा अणुत्तरविमाणावि ईसिपब्भारावि ॥ (सूत्रं ५८३) परमाणुपोग्गले णं भंते ! लोगस्स पुरच्छिमिल्लाओ चरिमंताओ पच्चच्छिमिल्लं चरिमंतं एगसमएणं गच्छति पच्चच्छिमिल्लाओ चरिमंताओ पुरच्छिमिल्लं चरिमंतं एगसमएणं गच्छति दाहिणिल्लाओ चरिमंताओ उत्तरिल्लं० उत्तरिल्लाओ० दाहिणिल्लं० उवरिल्लाओ चरमंताओ हेट्ठिल्लं चरिमंतं एवं जाव गच्छति हेट्ठिल्लाओ चरिमंताओ उवरिल्लं चरिमंतं एगसमएणं गच्छति?, हंता गोयमा ! परमाणुपोग्गले णं लोगस्स पुरच्छिमिल्लं तं चेव जाव उवरिल्लं चरिमंतं गच्छति ( सूत्रं ५८४ ) ॥

'किंमहालए ण'मित्यादि, 'चरमंते'त्ति चरमरूपोऽन्तश्चरमान्तः, तत्र चासङ्ख्यातप्रदेशावगाहित्वाज्जीवस्यासम्भव इत्यत आह—'नोजीवे'त्ति, जीवदेशादीनां त्वेकप्रदेशेऽप्यवगाहः संभवतीत्युक्तं 'जीवदेसावी'त्यादि, 'अजीवावि'त्ति पुद्गलस्कन्धाः 'अजीवदेसावि'त्ति धर्मास्तिकायादिदेशाः स्कन्धदेशाश्च तत्र संभवन्ति, एवमजीवप्रदेशा अपि ॥ अथ जीवादिदेशादिषु विशेषमाह—'जे जीवे'त्यादि, ये जीवदेशास्ते पृथिव्याद्येकेन्द्रियजीवानां देशास्तेषां लोकान्तेऽवश्यं भावादित्येको विकल्पः, 'अहव'त्ति प्रकारान्तरदर्शनार्थः, एकेन्द्रियाणां बहुत्वाद्बहवस्तत्र तद्देशा भवन्ति, द्वीन्द्रियस्य च कादाचित्कत्वात्कदाचिद्देशः स्यादित्येको द्विकयोगविकल्पः, यद्यपि हि लोकान्ते द्वीन्द्रियो नास्ति तथाऽपि यो द्वीन्द्रिय एकेन्द्रियेषूत्पित्सुर्मारणान्तिकसमुद्घातं गतस्तमाश्रित्यायं विकल्प इति। 'एवं जहे'त्यादि, यथा दशमशते आग्नेयीं दिशमा-

श्रित्योक्तं तथेह पूर्वचरमान्तमाश्रित्य वाच्यं, तच्चेदम्—'अहवा एगिंदियदेसा य बेइंदियस्स य देसा अहवा एगिंदियदेसा य बेइंदियाण य देसा अहवा एगिंदियदेसा य तेइंदियस्स य देसे' इत्यादि, यः पुनरिह विशेषस्तद्दर्शनायाह—'नवरं अणिंदियाण'मित्यादि, अनिन्द्रियसम्बन्धिनि देशविषये भङ्गकत्रये 'अहवा एगिंदियदेसा य अणिंदियस्स देसे' इत्येवंरूपः प्रथमभङ्गको दशमशते आग्नेयीप्रकरणेऽभिहितोऽपीह न वाच्यो, यतः केवलिसमुद्घाते कपाटाद्यवस्थायां लोकस्य पूर्वचरमान्ते प्रदेशवृद्धिहानिकृतलोकदन्तकसद्भावेनानिन्द्रियस्य बहूनां देशानां सम्भवो न त्वेकस्येति, तथाऽऽग्नेय्यां दशविधेष्वरूपिद्रव्येषु धर्म्माधर्म्माकाशास्तिकायद्रव्याणां तस्यामभावात्सप्तविधा अरूपिण उक्ताः लोकस्य पूर्वचरमान्तेष्वद्धासमयस्याप्यभावात् षड्विधास्ते वाच्याः, अद्धासमयस्य तु तत्राभावः समयक्षेत्र एव तद्भावात्, अत एवाह—'जे अरूवी अजीवा ते छव्विहा अद्धासमयो नत्थि'त्ति, 'उवरिल्ले चरिमंते'त्ति, अनेन सिद्धोपलक्षित उपरितनचरिमान्तो विवक्षितस्तत्र चैकेन्द्रियदेशा अनिन्द्रियदेशाश्च सन्तीतिकृत्वाऽऽह—'जे जीवे'त्यादि, इहायमेको द्विकसंयोगः, त्रिकसंयोगेषु च द्वौ द्वौ कार्यौ, तेषु हि मध्यमभङ्गः 'अहवा एगिंदियदेसा य अणिंदियदेसा य बेइंदियस्स य देसा' इत्येवंरूपो नास्ति, द्वीन्द्रियस्य च देशा इत्यस्यासम्भवाद्, यतो द्वीन्द्रियस्योपरितनचरिमान्ते मारणान्तिकसमुद्घातेन गतस्यापि देश एव तत्र संभवति न पुनः प्रदेशवृद्धिहानिकृतलोकदन्तकवशादनेकप्रतरात्मकपूर्वचरमान्तवद्देशाः, उपरितनचरिमान्तस्यैकप्रतररूपतया लोकदन्तकाभावेन देशानेकत्वाहेतुत्वादिति, अत एवाह—'एवं मज्झिल्लविरहिओ'त्ति त्रिकभङ्गक इति प्रक्रमः, उपरितनचरिमान्तापेक्षया जीवप्रदेशप्ररूपणायामेवं 'आइल्लविरहिओ'त्ति यदुक्तं तस्यायमर्थः—इह पूर्वोक्ते भङ्गकत्रये प्रदेशापेक्षया 'अहवा

एगिंदियपएसा य अणिंदियप्पएसा य वेइंदियस्सप्पएसे' इत्ययं प्रथमभङ्गको न वाच्यो,द्वीन्द्रियस्य च प्रदेश इत्यस्यासम्भवात्, तदसम्भवश्च लोकव्यापकावस्थानिन्द्रियवर्ज्जजीवानां यत्रैकप्रदेशस्तत्रासङ्ख्यातानामेव तेषां भावादिति, 'अजीवा जहा दसमसए तमाए'त्ति अजीवानाश्रित्य यथा दशमशते 'तमाए'त्ति तमाभिधानां दिशमाश्रित्य सूत्रमधीतं तथेहोपरितन-चरमान्तमाश्रित्य वाच्यं, तच्चैवं-जे अजीवा ते दुविहा पण्णत्ता, तंजहा-रूवीअजीवा य अरूविअजीवा य, जे रूविअजीवा ते चउव्विहा पण्णत्ता, तंजहा-खंधा ४, जे अरूविअजीवा ते छव्विहा पण्णत्ता, तंजहा-नो धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्सप्पएसा' एवमधर्म्माकाशास्तिकाययोरपीति ॥ 'लोगस्स णं भंते ! हिट्ठिल्ले'इत्यादि, इह पूर्वचरमान्त-वद्भङ्गाः कार्याः, नवरं तदीयस्य भङ्गकत्रयस्य मध्यात् 'अहवा एगिंदियदेसा य वेइंदियस्स य देसा' इत्येवंरूपो मध्यमभङ्गकोऽत्र वर्जनीयः, उपरितनचरिमान्तप्रकरणोक्तयुक्तेस्तस्यासम्भवाद्, अत एवाह-'एवं मज्झिल्लविरहिओ'त्ति, देशभङ्गका दर्शिताः अथ प्रदेशभङ्गकदर्शनायाह-'पएसा आइल्लविरहिया सव्वेसिं जहा पुरच्छिमिल्ले चरिमंते'त्ति, प्रदेशचिन्तायामाद्यभङ्गकरहिताः प्रदेशा वाच्या इत्यर्थः आद्यश्च भङ्गक एकवचनान्तप्रदेशशब्दोपेतः स च प्रदेशानामधश्चर-मान्तेऽपि बहुत्वान्न संभवति संभवति च 'अहवा एगिंदियपएसा य वेइंदियस्स पएसा अहवा एगिंदियप्पएसा य बेइंदियाण य पएसा'इत्येतद्वयं, 'सव्वेसिं'ति द्वीन्द्रियादीनामनिन्द्रियान्तानाम् 'अजीवे'त्यादि व्यक्तमेव ॥ चरमान्ताधिकारादेवेदमाह—'इमीसे ण'मित्यादि ॥ 'उवरिल्ले जहा दसमसए विमला दिसा तहेव निरवसेसं'ति दशमशते यथा विमला दिगुक्ता तथैव रत्नप्रभोपरितनचरमान्तो वाच्यो निरवशेषं यथा भवतीति, स चैवम्-'इमीसे णं भंते ! रयणप्पभाए पुढवीए उवरिल्ले

चरिमन्ते किं जीवा० ६?, गोयमा ! नो जीवा' एकप्रदेशप्रतरात्मकत्वेन तत्र तेपामनवस्थानात् 'जीवदेसावि ५, जे जीवदेसा ते नियमा एगिंदियदेसा' सर्वत्र तेषां भावात् 'अहवा एगिंदियदेसा य बेइंदियस्स य देसे १ अहवा एगिंदियदेसा य बेइंदियस्स य देसा २ अहवा एगिंदियदेसा य बेइंदियाण य देसा ३, रत्नप्रभा हि द्वीन्द्रियाणामाश्रयः, ते चैकेन्द्रियापेक्षयाऽतिस्तोकास्ततश्च तदुपरितनचरिमान्ते तेपां कदाचिद्देशः स्याद्देशा वेति, एवं त्रीन्द्रियादिष्वप्यनिन्द्रियान्तेषु, तथा 'जे जीवप्पएसा ते नियमा एगिंदियपएसा अहवा एगिंदियपएसावि बेइंदियस्स पएसा १ अहवा एगिंदियपएसा बेइंदियाण य पएसा २' एवं त्रीन्द्रियादिष्वप्यनीन्द्रियान्तेषु, तथा 'जे अजीवा ते दुविहा पन्नत्ता, तंजहा—रूविअजीवा य अरूविअजीवा य, जे रूविअजीवा ते चउव्विहा पन्नत्ता, तंजहा—खंधा जाव परमाणुपोग्गला, जे अरूवी अजीवा ते सत्तविहा पन्नत्ता, तंजहा—नो धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पएसा एवमधम्मत्थिकायस्सवि आगासत्थिकायस्सवि अद्धासमए'त्ति अद्धासमयो हि मनुष्यक्षेत्रान्तर्वर्त्तिनि रत्नप्रभोपरितनचरिमान्तेऽस्त्येवेति, 'हेट्ठिले चरिमंते' इति यथाऽधश्चरमान्तो लोकस्योक्तः एवं रत्नप्रभापृथिव्या अप्यसाविति स चानन्तरोक्त एव, विशेपस्त्वयं—लोकाधस्तनचरमान्ते द्वीन्द्रियादीनां देशभङ्गकत्रयं मध्यमरहितमुक्तं इह तु रत्नप्रभाऽधस्तनचरमान्ते पञ्चेन्द्रियाणां परिपूर्णमेव तद्वाच्यं, शेपाणां तु द्वीन्द्रियादीनां मध्यमरहितमेव, यतो रत्नप्रभाऽधस्तनचरमान्ते देवपञ्चेन्द्रियाणां गमागमद्वारेण देशो देशाश्च संभवन्त्यतः पञ्चेन्द्रियाणां तत्तत्र परिपूर्णमेवास्ति, द्वीन्द्रियाणां तु रत्नप्रभाऽधस्तनचरिमान्ते मारणान्तिकसमुद्घातेन गतानामेव तत्र देश एव संभवति न देशाः तस्यैकप्रतररूपत्वेन देशानेकत्वाहेतुत्वादिति तेपां तत्तत्र मध्यमरहितमेवेति, अत एवाह—'नवरं देसे' इत्यादि, 'चत्तारि चरमंत'-

त्ति पूर्वपश्चिमदक्षिणोत्तररूपाः 'उवरिमहेट्ठिल्ला जहा रयणप्पभाए हेट्ठिल्ले'त्ति शर्कराप्रभाया उपरितनाधस्तनचरमान्तौ रत्नप्रभाया उपरितनाधस्तनचरमान्तवद्वाच्यौ, द्वीन्द्रियादिषु पूर्वोक्तयुक्तेर्मध्यमभङ्गरहितं पञ्चेन्द्रियेषु तु परिपूर्णं देशभङ्गकत्रयं, प्रदेशचिन्तायां तु द्वीन्द्रियादिषु सर्वेष्वाद्यभङ्गकरहितत्वेन शेषभङ्गकद्वयं, अजीवचिन्तायां तु रूपिणां चतुष्कमरूपिणां त्वद्धासमयस्य तत्राभावेन षट्कं वाच्यमिति भावः । अथ शर्कराप्रभातिदेशेन शेषपृथिवीनां सौधर्मादिदेवलोकानां ग्रैवेयकविमानानां च प्रस्तुतवक्तव्यतामाह—'एवं जाव अहेसत्तमाए' इत्यादि, ग्रैवेयकविमानेषु तु यो विशेषस्तं दर्शयितुमाह—'नवर'मित्यादि, अच्युतान्तदेवलोकेषु हि देवपञ्चेन्द्रियाणां गमागमसद्भावात् उपरितनाधस्तनचरमान्तयोः पञ्चेन्द्रियेषु देशानाश्रित्य भङ्गकत्रयं संभवति, ग्रैवेयकेषु विमानेषु तु देवपञ्चेन्द्रियगमागमाभावाद् द्वीन्द्रियादिष्विव पञ्चेन्द्रियेष्वपि मध्यमभङ्गकरहितं शेषभङ्गकद्वयं तयोर्भवतीति ॥ चरमाधिकारादेवेदमपरमाह—'परमाणु'इत्यादि, इदं च गमनसामर्थ्यं परमाणोस्तथास्वभावत्वादिति मन्तव्यमिति ॥ अनन्तरं परमाणोः क्रियाविशेष उक्त इति क्रियाधिकारादिदमाह—

पुरिसे णं भंते ! वासं वासति नो वासतीति हत्थं वा पायं वा बाहुं वा उरुं वा आउट्टावेमाणे वा पसारेमाणे वा कतिकिरिए ?, गोयमा ! जावं च णं से पुरिसे वासं वासति वासं नो वासतीति हत्थं वा जाव ऊरुं वा आउट्टावेति वा पसारेति वा तावं च णं से पुरिसे काइयाए जाव पंचहिं किरियाहिं पुट्ठे ॥ ( सूत्रं ५८९ ) ॥

'पुरिसे ण'मित्यादि, 'वासं वासइ' वर्षो—मेघो वर्षति नो वा वर्षो वर्षतीति ज्ञापनार्थमिति शेषः, अचक्षुरालोके

हि वृष्टिराकाशे हस्तादिप्रसारणादेव गम्यते इतिकृत्वा हस्तादिकं आकुण्टयेद्वा प्रसारयेद्वाऽऽदित एवेति ॥ आकुण्टनादिप्रस्तावादिदमाह—

**देवे णं भंते ! महड्ढिए जाव महेसक्खे लोगंते ठिच्चा पभू अलोगंसि हत्थं वा जाव ऊरुं वा आउंटावेत्तए वा पसारेत्तए वा ?, णो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ देवे णं महड्ढीए जाव लोगंते ठिच्चा णो पभू अलोगंसि हत्थं वा जाव पसारेत्तए वा ?, जीवाणं आहारोवचिया पोग्गला बोंदिचिया पोग्गला कलेवरचिया पोग्गला पोग्गलामेव पप्प जीवाण य अजीवाण य गतिपरियाए आहिज्जइ, अलोए णं नेवत्थि जीवा नेवत्थि पोग्गला से तेणट्ठे णं जाव पसारेत्तए वा ॥ सेवं भंते ! २ त्ति ॥ ( सूत्रं ५८६ ) ॥ १६–८ ॥**

'देवे ण'मित्यादि, 'जीवाणं आहारोवचिया पोग्गल'त्ति जीवानां जीवानुगता इत्यर्थः आहारोपचिता–आहाररूपतयोपचिताः 'बोंदिचिया पोग्गल'त्ति अव्यक्तावयवशरीररूपतया चिताः 'कडेवरचिया पोग्गल'त्ति शरीररूपतया चिताः, उपलक्षणत्वाच्चास्य उच्छ्वासचिताः पुद्गला इत्याद्यपि द्रष्टव्यं, अनेन चेदमुक्तं–जीवानुगामिस्वभावाः पुद्गला भवन्ति, ततश्च यत्रैव क्षेत्रे जीवास्तत्रैव पुद्गलानां गतिः स्यात्, तथा 'पुग्गलामेव पप्प'त्ति पुद्गलानेव 'प्राप्य' आश्रित्य जीवानां च 'अजीवाण य' पुद्गलानां च गतिपर्यायो–गतिधर्मः 'आहिज्जइ'त्ति आख्यायते, इदमुक्तं भवति–यत्र क्षेत्रे पुद्गलास्तत्रैव जीवानां पुद्गलानां च गतिर्भवति, एवं चालोके नैव सन्ति जीवा नैव च सन्ति पुद्गला इति तत्र जीवपुद्गलानां गतिर्नास्ति, तदभावाच्चालोके देवो हस्ताद्याकुण्टयितुं प्रसारयितुं वा न प्रभुरिति ॥ षोडशशतेऽष्टमः ॥ १६–८ ॥

---

अष्टमोद्देशके देववक्तव्यतोक्ता, नवमे तु बलेर्देवविशेषस्य सोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

कहिन्नं भंते ! बलिस्स वइरोयणिंदस्स वइरोयणरन्नो सभा सुहम्मा पन्नत्ता ?, गोयमा ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरेणं तिरियमसंखेज्जे जहेव चमरस्स जाव बायालीसं जोयणसहस्साइं ओगाहित्ता एत्थ णं बलिस्स वइरोयणिंदस्स वइ० २ रुयगिंदे नामं उप्पायपव्वए पन्नत्ते सत्तरस एक्कवीसे जोयणसए एवं पमाणं जहेव तिगिच्छिकूडस्स पासायवडेंसगस्सवि तं चेव पमाणं सीहासणं सपरिवारं बलिस्स परियारेणं अट्ठो तहेव नवरं रुयगिंदप्पभाइं ३ सेसं तं चेव जाव बलिचंचाए रायहाणीए अन्नेसिं च जाव रुयगिंदस्स णं उप्पायपव्वयस्स उत्तरेणं छक्कोडिसए तहेव जाव चत्तालीसं जोयणसहस्साइं ओगाहित्ता एत्थ णं बलिस्स वइरोयणिंदस्स वइरोयणरन्नो बलिचंचा नामं रायहाणी पन्नत्ता एगं जोयणसयसहस्सं पमाणं तहेव जाव बलिपेढस्स उववाओ जाव आयरक्खा सव्वं तहेव निरवसेसं नवरं सातिरेगं सागरोवमं ठिती पन्नत्ता सेसं तं चेव जाव बली वइरोयणिंदे बली २ ॥ सेवं भंते २ जाव विहरति ॥ ( सूत्रं ५८७ ) ॥ १६–९ ॥

'कहि ण'मित्यादि, 'जहेव चमरस्स'त्ति यथा चमरस्य द्वितीयशताष्टमोद्देशकाभिहितस्य सुधर्म्मसभास्वरूपाभिधायकं सूत्रं तथा बलेरपि वाच्यं, तच्च तत एवावसेयम्, 'एवं पमाणं जहेव तिगिच्छिकूडस्स'त्ति यथा चमरसत्कस्य द्वितीयशताष्टमोद्देशकाभिहितस्यैव तिगिच्छिकूटाभिधानस्योत्पातपर्वतस्य प्रमाणमभिहितं तथाऽस्यापि रुचकेन्द्रस्य वाच्यं, एतदपि तत एवावसेयं, 'पासायवडेंसगस्सवि तं चेव पमाणं'ति यत्प्रमाणं चमरसम्बन्धिनस्तिगिच्छिकूटाभिधानोत्पातपर्वतो-

परिवर्त्तिनः प्रासादावतंसकस्य तदेव बलिसत्कस्यापि रुचकेन्द्राभिधानोत्पातपर्वतोपरिवर्त्तिनस्तस्य, तदपि द्वितीयशतादेवा-वसेयं, 'सिंहासणं सपरिवारं बलिस्स परिवारेणं'ति प्रासादावतंसकमध्यभागे सिंहासनं बलिसत्कं बलिसत्कपरिवार-सिंहासनोपेतं वाच्यमित्यर्थः तदपि द्वितीयशताष्टमोद्देशकविवरणोक्तचमरसिंहासनन्यायेन वाच्यं, केवलं तत्र चमरस्य सामानिकासनानां चतुःषष्टिः सहस्राणि आत्मरक्षासनानां तु तान्येव चतुर्गुणान्युक्तानि बलेस्तु सामानिकासनानां षष्टिः सहस्राणि आत्मरक्षासनानां तु तान्येव चतुर्गुणानीत्येतावान् विशेषः, "अट्ठो तहेव नवरं रुयगिंदप्पभाइं'ति यथा तिगिच्छिकूटस्य नामान्वर्थाभिधायकं वाक्यं तथाऽस्यापि वाच्यं, केवलं तिगिच्छिकूटान्वर्थप्रश्नस्योत्तरे यस्मात्तिगिच्छिप्रभा-ण्युत्पलादीनि तत्र सन्ति तेन तिगिच्छिकूट इत्युच्यत इत्युक्तं इह तु रुचकेन्द्रप्रभाणि तानि सन्तीति वाच्यं, रुचकेन्द्रस्तु रत्नविशेष इति, तत्पुनरर्थतः सूत्रमेवमध्येयं–'से केणट्ठेणं भंते ! एवं वुच्चइ रुयगिंदे २ उप्पायपव्वए ?, गोयमा ! रुयगिंदे णं बहूणि उप्पलाणि पउमाइं कुमुयाइं जाव रुयगिंदवण्णाइं रुयगिंदलेसाइं रुयगिंदप्पभाइं, से तेणट्ठेणं रुयगिंदे २ उप्पायप-व्वए'त्ति 'तहेव जाव'त्ति यथा चमरचञ्चाव्यतिकरे सूत्रमुक्तमिहापि तथैव वाच्यं, तच्चेदं–'पणपन्नं कोडीओ पन्नासं च सयसहस्साइं पन्नासं च सहस्साइं वीइवइत्ता इमं च रयणप्पभं पुढविं'ति 'पमाणं तहेव'त्ति यथा चमरचञ्चायाः, तच्चेदम्–'एगं जोयणसयसहस्सं आयामविक्खंभेणं तिन्नि जोयणसयसहस्साइं सोलस य सहस्साइं दोन्नि य सत्तावीसे जोयणसए तिन्नि य कोसे अट्ठावीसं च धणुसयं तेरस य अंगुलाइं अद्धंगुलयं च किंचिविसेसाहियं परिक्खेवेणं पण्णत्तं' 'जाव बलिपेढस्स'त्ति नगरीप्रमाणाभिधानानन्तरं प्राकारतद्द्वारोपकारिकालयनप्रासादावतंसकसुधर्मसभाचैत्यभवनोपपातसभा-

ह्रदाभिषेकसभाऽलङ्कारिकसभाव्यवसायसभादीनां प्रमाणं स्वरूपं च तावद्वाच्यं यावद्वलिपीठस्य, तच्च स्थानान्तरादवसेयं, 'उववाओ'त्ति उपपातसभायां वलेरुपपातवक्तव्यता वाच्या, सा चैवं-'तेणं कालेणं तेणं समएणं वली वइरोयणिंदे २ अहुणोववन्नमेत्तए समाणे पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छइ'इत्यादि, 'जाव आयरक्ख'त्ति इह यावत्करणादभिषेकोऽलङ्कारग्रहणं पुस्तकवाचनं सिद्धायतनप्रतिमाद्यर्चनं सुधर्म्मसभागमनं तत्रस्थस्य च तस्य सामानिका अग्रमहिष्यः पर्षदोऽनीकाधिपतयः आत्मरक्षाश्च पार्श्वतो निषीदन्तीति वाच्यं। एतद्वक्तव्यताप्रतिवद्धसमस्तसूत्रातिदेशायाह—'सव्वं तहेव निरवसेसं'ति, सर्वथा साम्यपरिहारार्थमाह-'नवर'मित्यादि, अयमर्थः-चमरस्य सागरोपमं स्थितिः प्रज्ञप्तेत्युक्तं वलेस्तु सातिरेकं सागरोपमं स्थितिः प्रज्ञप्तेति वाच्यमिति ॥ षोडशशते नवमः ॥ १६-९ ॥

नवमोद्देशके वलेर्वक्तव्यतोक्ता, वलिश्चावधिमानित्यवधेः स्वरूपं दशमे उच्यत इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

**कतिविहे णं भंते ! ओही पन्नत्ते ?, गोयमा ! दुविहा ओही प०, ओहीपदं निरवसेसं भाणियव्वं ॥ सेवं भंते ! सेवं भंते ! जाव विहरति ॥ ( सूत्रं ५८८ ) ॥ १६-१० ॥**

'कइविहे ण'मित्यादि, 'ओहीपयं'ति प्रज्ञापनायास्त्रयस्त्रिंशत्तमं, तच्चैवं-'तंजहा-भवपच्चइया खओवसमिया य, दोण्हं भवपच्चइया, तंजहा-देवाण य नेरइयाण य, दोण्हं खओवसमिया, तंजहा-माणुस्साणं पंचिंदियतिरिक्खजोणियाण य, इत्यादीति ॥ षोडशशते दशमः ॥ १६-१० ॥

दशमेऽवधिरुक्तः, एकादशे त्ववधिमद्विशेष उच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

दीवकुमारा णं भंते ! सव्वे समाहारा सव्वे समुस्सासनिस्सासा ?, णो तिणट्ठे समट्ठे, एवं जहा पढमसए बितियउद्देसए दीवकुमाराणं वत्तव्वया तहेव जाव समाउया समुस्सासनिस्सासा । दीवकुमाराणं भंते ! कति लेस्साओ पन्नत्ताओ ?, गोयमा ! चत्तारि लेस्साओ पन्नत्ताओ, तंजहा—कण्हलेस्सा जाव तेउलेस्सा । एएसि णं भंते ! दीवकुमाराणं कण्हलेस्साणं जाव तेउलेस्साण य कयरे २ हिंतो जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा दीवकुमारा तेउलेस्सा काउलेस्सा असंखेज्जगुणा नीललेस्सा विसेसाहिया कण्हलेस्सा विसेसाहिया । एएसि णं भंते ! दीवकुमाराणं कण्हलेसाणं जाव तेऊलेस्साण य कयरे २ हिंतो अप्पड्ढिया वा महड्ढिया वा ?, गोयमा ! कण्हलेस्साहिंतो नीललेस्सा महड्ढिया जाव सव्वमहड्ढीया तेउलेस्सा । सेवं भंते ! सेवं भंते ! जाव विहरति ॥ उदहिकुमारा णं भंते ! सव्वे समाहारा० एवं चेव, सेवं० ॥ १६–१२ ॥ एवं दिसाकुमारावि ॥ १६–१३ ॥ एवं थणियकुमाराऽवि, सेवं भंते सेवं भंते ! जाव विहरइ ॥ १६–१४ ॥ सोलसमं सयं समत्तं ॥ ( सूत्रं ५८९ ) ॥ १६–१४ ॥

'दीवे'त्यादि ॥ एवमन्यदप्युद्देशकत्रयं पाठयितव्यमिति ॥ षोडशशतं वृत्तितः परिसमाप्तमिति ॥

सम्यक्श्रुताचारविवर्जितोऽप्यहं, यदप्रकोपात्कृतवान् विचारणाम् ।
अविघ्नमेतां प्रति षोडशं शतं, वाग्देवता सा भवताद्वरप्रदा ॥ १ ॥

व्याख्यातं षोडशं शतं अथ क्रमायातं सप्तदशमारभ्यते, तस्य चादावेवोद्देशकसङ्ग्रहाय गाथा—

नमो सुयदेवयाए भगवईए ॥ कुंजर १ संजय २ सेलेसि ३ किरिय ४ ईसाण ५ पुढवि ६–७ दग ८–९ वाऊ १०–११ । एगिंदिय १२ नाग १३ सुवन्न १४ विज्जु १५ वायु १६ ऽग्गि १७ सत्तरसे ॥ १ ॥ रायगिहे जाव एवं वयासी–उदायी णं भंते ! हत्थिराया कओहिंतो अणंतरं उव्वट्टित्ता उदायिहत्थिरायत्ताए उववन्ने ?, गोयमा ! असुरकुमारेहिंतो देवेहिंतो अणंतरं उव्वट्टित्ता उदायिहत्थिरायत्ताए उववन्ने, उदायी णं भंते ! हत्थिराया कालमासे कालं किच्चा कहिं गच्छिहिति कहिं उववज्जिहिति ?, गोयमा ! इमी सेणं रयणप्पभाए पुढवीए उक्कोससागरोवमट्ठितीयंसि निरयावासंसि नेरइयत्ताए उववज्जिहिति, से णं भंते ! तओहिंतो अणंतरं उव्वट्टित्ता कहिं ग० कहि उ० ?, गोयमा ! महाविदेहे वासे सिज्झिहिति जाव अंतं काहिति ॥ भूयाणंदे णं भंते ! हत्थिराया कओहिंतो अणंतरं उव्वट्टित्ता भूयाणंदे हत्थिरायत्ताए एवं जहेव उदायी जाव अंतं काहिति ॥ (सूत्र ५९०)॥

'कुंजरे'त्यादि, तत्र 'कुंजर'त्ति श्रेणिकसूनोः कूणिकराजस्य सत्क उदायिनामा हस्तिराजस्तत्प्रमुखार्थाभिधायकत्वात् कुञ्जर एव प्रथमोद्देशक उच्यते, एवं सर्वत्र १, 'संजय'त्ति संयताद्यर्थप्रतिपादको द्वितीयः २ 'सेलेसि'त्ति शैलेश्यादिवक्तव्यतार्थस्तृतीयः ३ 'किरिय'त्ति क्रियाद्यर्थाभिधायकश्चतुर्थः ४ 'ईसाण'त्ति ईशानेन्द्रवक्तव्यतार्थः पञ्चमः ५ 'पुढवि'त्ति पृथिव्यर्थः षष्ठः ६ सप्तमश्च ७ 'दग'त्ति अप्कायार्थोऽष्टमो नवमश्च ९ 'वाउ'त्ति वायुकायार्थो दशम एकादशश्च ११ 'एगिंदिय'त्ति एकेन्द्रियस्वरूपार्थो द्वादशः १२ 'णाग'त्ति नागकुमारवक्तव्यतार्थस्त्रयोदशः १३ 'सुवन्न'त्ति सुवर्णकुमा-

रार्थानुगतश्चतुर्दशः १४ 'विज्जु'त्ति विद्युत्कुमाराभिधायकः पञ्चदशः १५ 'वाउ'त्ति वायुकुमारवक्तव्यतार्थः षोडश १६
'अग्गि'त्ति अग्निकुमारवक्तव्यतार्थः सप्तदशः १७ 'सत्तरसे'त्ति सप्तदशशते एते उद्देशका भवन्ति । तत्र प्रथमोद्देशकार्थ-
प्रतिपादनार्थमाह—'रायगिहे' इत्यादि ॥ 'भूयाणंदे'त्ति भूतानन्दाभिधानः कूणिकराजस्य प्रधानहस्ती ॥ अनन्तरं
भूतानन्दस्योद्वर्त्तनादिका क्रियोक्तेति क्रियाऽधिकारादेवेदमाह—

पुरिसे णं भंते ! तालमारुहइ ता० २ तालाओ तालफलं पचालेमाणे वा पवाडेमाणे वा कतिकिरिए ?,
गोयमा ! जावं च णं से पुरिसे तालमारुहइ तालमा० २ तालाओ तालफलं पयालेइ वा पवाडेइ वा तावं च णं
से पुरिसे काइयाए जाव पंचहिं किरियाहिं पुट्ठे, जेसिंपिय णं जीवाणं सरीरेहिंतो तले निव्वत्तिए तलफले निव-
त्तिए तेऽवि णं जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा ॥ अहे णं भंते ! से तालप्फले अप्पणो गरुयत्ताए
जाव पचोवयमाणे जाइं तत्थ पाणाइं जाव जीवियाओ ववरोवेति तए णं भंते ! से पुरिसे कतिकिरिए ?,
गोयमा ! जावं च णं से पुरिसे तलप्फले अप्पणो गरुयत्ताए जाव जीवियाओ ववरोवेति तावं च णं से पुरिसे
काइयाए जाव चउहिं किरियाहिं पुट्ठे, जेसिंपि णं जीवाणं सरीरेहिंतो तले निव्वत्तिए तेवि णं जीवा काइ-
याए जाव चउहिं किरियाहिं पुट्ठा, जेसिंपि णं जीवाणं सरीरेहिंतो तालप्फले निव्वत्तिए तेवि णं जीवा काइयाए
जाव पंचहिं किरियाहिं पुट्ठा, जेविय से जीवा अहे वीससाए पचोवयमाणस्स उवग्गहे वट्टंति तेऽविय णं जीवा
काइयाए जाव पंचहिं किरियाहिं पुट्ठा ॥ पुरिसे णं भंते ! रुक्खस्स मूलं पचालेमाणे वा पवाडेमाणे वा कति

किरिए ?, गोयमा ! जावं च णं से पुरिसे रुक्खस्स मूलं पचालेमाणे वा पवाडेमाणे वा तावं च णं से पुरिसे काइयाए जाव पंचहिं किरियाहिं पुट्ठे, जेसिंपिय णं जीवाणं सरीरेहिंतो मूले निव्वत्तिए जाव बीए निव्वत्तिए तेविय णं जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा, अहे णं भंते ! से मूले अप्पणो गरुयत्ताए जाव जीवियाओ ववरोवेइ तओ णं भंते ! से पुरिसे कतिकिरिए ?, गोयमा ! जावं च णं से मूले अप्पणो जाव ववरोवेइ तावं च णं से पुरिसे काइयाए जाव चउहिं किरियाहिं पुट्ठे, जेसिंपिय णं जीवाणं सरीरेहिंतो कंदे निव्वत्तिए जाव बीए निव्वत्तिए तेवि णं जीवा काइयाए जाव चउहिं पुट्ठा, जेसिंपिय णं जीवाणं सरीरेहिंतो मूले निव्वत्तिए तेवि णं जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा, जेविय णं से जीवा अहे वीससाए पच्चोवयमाणस्स उवग्गहे वट्टंति तेवि णं जीवा काइयाए जाव पंचहिं किरियाहिं पुट्ठा ॥ पुरिसे णं भंते ! रुक्खस्स कंदं पचालेइ०, गो० ! तावं च णं से पुरिसे जाव पंचहिं किरियाहिं पुट्ठे, जेसिंपि णं जीवाणं सरीरेहिंतो मूले निव्वत्तिए जाव बीए निव्वत्तिए तेवि णं जीवा जाव पंचहिं किरियाहिं पुट्ठा, अहे णं भंते ! से कंदे अप्पणो जाव चउहिं पुट्ठे, जेसिंपि णं जीवाणं सरीरेहिंतो मूले निव्वत्तिए खंधे नि० जाव चउहिं पुट्ठा, जेसिंपि णं जीवाणं सरीरेहिंतो कंदे निव्वत्तिए तेवि य णं जीवा जाव पंचहिं पुट्ठा, जेवि य से जीवा अहे वीससाए पच्चोवयमाणस्स जाव पंचहिं पुट्ठा जहा खंधो एवं जाव बीयं ( सूत्रं ५९१ ) ॥

'पुरिसे ण'मित्यादि, 'तालं'ति तालवृक्षं 'पचालेमाणे व'त्ति प्रचलयन् वा 'पवाडेमाणे व'त्ति अधःप्रपातयन् वा

'पंचहिं किरियाहिं पुट्ठे'त्ति तालफलानां तालफलाश्रितजीवानां च पुरुषः प्राणातिपातक्रियाकारी, यश्च प्राणातिपातक्रियाकारकोऽसावाद्यानामपीतिकृत्वा पञ्चभिः क्रियाभिः स्पृष्ट इत्युक्तं १, येऽपि च तालफलनिर्वर्त्तकजीवास्तेऽपि च पञ्चक्रियास्तदन्यजीवान् सङ्घट्टनादिभिरपद्रावयन्तीतिकृत्वा २, 'अहे णं'मित्यादि, अथ पुरुषकृततालफलप्रचलनादेरनन्तरं तत्तालफलमात्मनो गुरुकतया यावत्करणात् सम्भारिकतया गुरुकसम्भारिकतयेति दृश्यं 'पच्चोवयमाणे'त्ति प्रत्यवपतत् यांस्तत्राकाशादौ प्राणादीन् जीविताद् व्यपरोपयति 'तओ णं'ति तेभ्यः सकाशात् कतिक्रियोऽसौ पुरुषः ?, उच्यते, चतुष्क्रियो, वधनिमित्तभावस्याल्पत्वेन तासां चतसृणामेव विवक्षणात्, तदल्पत्वं च यथा पुरुषस्य तालफलप्रचलनादौ साक्षाद्वधनिमित्तभावोऽस्ति न तथा तालफलव्यापादितजीवेष्वितिकृत्वा ३, एवं तालनिर्वर्त्तकजीवा अपि ४, फलनिर्वर्त्तकास्तु पञ्चक्रिया एव, साक्षात्तेषां वधनिमित्तत्वात् ५, ये चाधोनिपततस्तालफलस्योपग्रहे–उपकारे वर्त्तन्ते जीवास्तेऽपि पञ्चक्रियाः, वधे तेषां निमित्तभावस्य बहुतरत्वात् ६, एतेषां च सूत्राणां विशेषतो व्याख्यानं पञ्चमशतोक्तकाण्डक्षेप्तृपुरुषसूत्रादवसेयम्, एतानि च फलद्वारेण षट् क्रियास्थानान्युक्तानि, मूलादिष्वपि षडेव भावनीयानि, 'एवं जाव बीयं'ति अनेन कन्दसूत्राणीव स्कन्धत्वक्शालप्रवालपत्रपुष्पफलबीजसूत्राण्यध्येयानीति सूचितम् ॥ क्रियाधिकारादेव शरीरेन्द्रिययोगेषु क्रियाप्ररूपणार्थमिदमाह—

कति णं भंते ! सरीरगा पण्णत्ता ?, गोयमा ! पंच सरीरगा पन्नत्ता, तंजहा–ओरालियजावकम्मए । कति णं भंते ! इंदिया पं० ?, गोयमा ! पंच इंदिया पं०, तं०–सोइंदिए जाव फासिंदिए । कतिविहे णं भंते ! जोए

प० ?, गोयमा ! तिविहे जोए प०, तं०—मणजोए वयजोए कायजोए । जीवे णं भंते ! ओरालियसरीरं निव्वत्तेमाणे कतिकिरिए ?, गोयमा ! सिय तिकिरिए सिय चउकिरिए सिय पंचकिरिए, एवं पुढविक्काइएवि एवं जाव मणुस्से । जीवा णं भंते ! ओरालियसरीरं निव्वत्तेमाणा कतिकिरिया ?, गोयमा ! तिकिरियावि चउकिरियावि पंचकिरियावि, एवं पुढविकाइया एवं जाव मणुस्सा, एवं वेउव्वियसरीरेणवि दो दंडगा नवरं जस्स अत्थि वेउव्वियं एवं जाव कम्मगसरीरं, एवं सोइंदियं जाव फासिंदियं, एवं मणजोगं वयजोगं कायजोगं जस्स जं अत्थि तं भाणियव्वं, एए एगत्तपुहुत्तेणं छव्वीसं दंडगा ( सूत्रं ५९२ ) ॥

'कति णं भंते !' इत्यादि, तत्र 'जीवे णं भंते !' इत्यादौ 'सिय तिकिरिए सिय चउकिरिए सिय पंचकिरिए'त्ति यदा औदारिकशरीरं परपरितापाद्यभावेन निर्वर्त्तयति तदा त्रिक्रियः यदा तु परपरितापं कुर्वंस्तन्निर्वर्त्तयति तदा चतुष्क्रियः, यदा तु परमतिपातयंस्तन्निर्वर्त्तयति तदा पञ्चक्रिय इति । पृथक्त्वदण्डके स्याच्छब्दप्रयोगो नास्ति, एकदाऽपि सर्वविकल्पसद्भावादिति । 'छव्वीसं दंडग'त्ति पञ्चशरीराणीन्द्रियाणि च त्रयश्च योगाः एते च मीलितास्त्रयोदश, एते चैकत्वपृथक्त्वाभ्यां गुणिताः षड्विंशतिरिति ॥ अनन्तरं क्रिया उक्तास्ताश्च जीवधर्म्मा इति जीवधर्म्माधिकाराज्जीवधर्म्मरूपान् भावानभिधातुमाह—

कतिविहे णं भंते ! भावे पण्णत्ते ?, गोयमा ! छव्विहे भावे प०, तं०—उदइए उवसमिए जाव सन्निवाइए, से किं तं उदइए ?, उदइए भावे दुविहे पण्णत्ते, तंजहा—उदइए उदयनिप्फन्ने य, एवं एएणं अभिलावेणं जहा

अणुओगदारे छन्नामं तहेव निरवसेसं भाणियवं जाव से तं सन्निवाइए भावे ॥ सेवं भंते ! सेवं भंतेत्ति ( सूत्रं ५९३ ) ॥ १७-१ ॥

'कतिविहे णं भंते ! भावे'इत्यादि, औदयिकादीनां च स्वरूपं प्राग् व्याख्यातमेव, 'एवं एएणं अभिलावेणं जहा अणुओगदारे'इत्यादि, अनेन चेदं सूचितं—'से किं तं उदइए?, २ अट्ठ कम्मपगडीणं उदएणं, से तं उदइए'इत्यादीति ॥ सप्तदशशते प्रथमः ॥ १७-१ ॥

---

प्रथमोद्देशकान्ते भावा उक्तास्तद्वन्तश्च संयतादयो भवन्तीति द्वितीये ते उच्यन्त इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

से नूणं भंते! संयतविरतपडिहयपच्चक्खायपावकम्मे धम्मे ठिए अस्संजयअविरयअपडिहयपच्चक्खायपावकम्मे अधम्मे ठिते संजयासंजए धम्माधम्मे ठिते ?, हंता गोयमा ! संजयविरयजाव धम्माधम्मे ठिए, एएसि णं भंते ! धम्मंसि वा अहम्मंसि वा धम्माधम्मंसि वा चक्किया केइ आसइत्तए वा जाव तुयट्टित्तए वा ?, गोयमा ! णो तिणट्ठे समट्ठे, से केणं खाइ अट्ठेणं भंते ! एवं वुच्चइ जाव धम्माधम्मे ठिते ?, गोयमा ! संजयविरयजाव पावकम्मे धम्मे ठिते धम्मं चेव उवसंपज्जित्ताणं विहरति, असंयतजाव पावकम्मे अधम्मे ठिए अधम्मं चेव उवसंपज्जित्ताणं विहरइ, संजयासंजए धम्माधम्मे ठिते धम्माधम्मं उवसंपज्जित्ताणं विहरति, से तेणट्ठेणं जाव ठिए ॥ जीवा णं भंते ! किं धम्मे ठिया अधम्मे ठिया धम्माधम्मे ठिया ?, गोयमा ! जीवा

धम्मेवि ठिता अधम्मेवि ठिता धम्माधम्मेवि ठिता, नेरइ० पु० ?, गोयमा ! णेरइया णो धम्मे ठिता अधम्मे ठिता णो धम्माधम्मे ठिता, एवं जाव चउरिंदियाणं, पंचिंदियतिरिक्खजो० पुच्छा, गोयमा ! पंचिंदियतिरिक्ख जोणि० नो धम्मे ठिया अधम्मे ठिया धम्माधम्मेवि ठिया, मणुस्सा जहा जीवा, वाणमंतरजोइ० वेमाणि० जहा नेर० ( सूत्रं ६९४ ) ॥

'से नूणं भंते !'इत्यादि, 'धम्मे'त्ति संयमे 'चक्किया केइ आसइत्तए व'त्ति धर्म्मादौ शक्नुयात् कश्चिदासयितुं ?, नायमर्थः समर्थो, धर्मादेरमूर्त्तत्वात् मूर्त्ते एव चासनादिकरणस्य शक्यत्वादिति ॥ अथ धर्म्मस्थितत्वादिकं दण्डके निरूपयन्नाह—'जीवा ण'मित्यादि व्यक्तं, संयतादयः प्रागुपदर्शितास्ते च पण्डितादयो व्यपदिश्यन्ते, अत्र चार्थेऽन्ययूथिकमतमुपदर्शयन्नाह—

अन्नउत्थिया णं भंते ! एवमाइक्खंति जाव परूवेंति–एवं खलु समणा पंडिया समणोवासया बालपंडिया जस्स णं एगपाणाएवि दंडे अणिक्खित्ते से णं एगंतबालेत्ति वत्तव्वं सिया, से कहमेयं भंते ! एवं ?, गोयमा ! जण्णं ते अन्नउत्थिया एवमाइक्खंति जाव वत्तव्वं सिया, जे ते एवमाहंसु मिच्छं ते एवमा०, अहं पुण गोयमा ! एवमाइक्खामि जाव परूवेमि एवं खलु समणा पंडिया समणोवासगा बालपंडिया जस्स णं एगपाणाएवि दंडे निक्खित्ते से णं नो एगंतबालेति वत्तव्वं सिया ॥ जीवा णं भंते ! किं बाला पंडिया बालपंडिया ?, गोयमा ! जीवा बालावि पंडियावि बालपंडियावि, नेरइयाणं पुच्छा, गोयमा ! नेरइया बाला नो पंडिया

नो बालपंडिया, एवं जाव चउरिंदियाणं । पंचिंदियतिरिक्ख० पुच्छा, गोयमा ! पंचिंदियतिरिक्खजोणिया बाला नो पंडिया बालपंडियावि, मणुस्सा जहा जीवा, वाणमंतरजोइसियवेमाणिया जहा नेरइया (सूत्रं ५९५)॥

'अन्न'इत्यादि, 'समणा पंडिया समणोवासया बालपंडिय'त्ति एतत् किल पक्षद्वयं जिनाभिमतमेवानुवादपरतयोक्त्वा द्वितीयपक्षं दूषयन्तस्ते इदं प्रज्ञापयन्ति—'जस्स णं एगपाणाएवि दंडे'इत्यादि, 'जस्स'त्ति येन देहिना 'एकप्राणिन्यपि' एकत्रापि जीवे सापराधादौ पृथ्वीकायिकादौ वा, किं पुनर्बहुषु?, दण्डो–वधः 'अणिक्खित्त'त्ति 'अनिक्षिप्तः' अनुज्झितोऽप्रत्याख्यातो भवति स एकान्तबाल इति वक्तव्यः स्यात्, एवं च श्रमणोपासका एकान्तबाला एव न बालपण्डिताः, एकान्तबालव्यपदेशनिबन्धनस्यासर्वप्राणिदण्डत्यागस्य भावादिति परमतं, स्वमतं त्वेकप्राणिन्यपि येन दण्डपरिहारः कृतोऽसौ नैकान्तेन बालः, किं तर्हि?, बालपण्डितो, विरत्यंशसद्भावेन मिश्रत्वात्तस्य, एतदेवाह—'जस्स ण'मित्यादि ॥ एतदेव बालत्वादि जीवादिषु निरूपयन्नाह—'जीवा ण'मित्यादि, प्रागुक्तानां संयतादीनामिहोक्तानां च पण्डितादीनां यद्यपि शब्दत एव भेदो नार्थतस्तथाऽपि संयतत्वादिव्यपदेशः क्रियाव्यपेक्षः पण्डितत्वादिव्यपदेशस्तु बोधविशेषापेक्ष इति ॥ अन्ययूथिकप्रक्रमादेवेदमाह—

अन्नउत्थिया णं भंते ! एवमाइक्खंति जाव परूवेंति–एवं खलु पाणातिवाए मुसावाए जाव मिच्छादंसणसल्ले वट्टमाणस्स अन्ने जीवे अन्ने जीवाया पाणाइवायवेरमणे जाव परिग्गहवेरमणे कोहविवेगे जाव मिच्छादंसणसल्लविवेगे वट्टमाणस्स अन्ने जीवे अन्ने जीवाया, उप्पत्तियाए जाव परिणामियाए वट्टमाणस्स

अन्ने जीवे अन्ने जीवाया, उप्पत्तियाए उग्गहे ईहा अवाए धारणाए वट्टमाणस्स जाव जीवाया, उट्ठाणे जाव परक्कमे वट्टमाणस्स जाव जीवाया, नेरइयत्ते तिरिक्खमणुस्सदेवत्ते वट्टमाणस्स जावजीवाया, नाणावरणिज्जे जाव अंतराइए वट्टमाणस्स जाव जीवाया, एवं कण्हलेस्साए जाव सुक्कलेस्साए सम्मदिट्ठीए ३ एवं चक्खुदंसणे ४ आभिणिबोहियनाणे ५ मतिअन्नाणे ३ आहारसन्नाए ४ एवं ओरालियसरीरे ५ एवं मणजोए ३ सागारोवओगे अणागारोवओगे वट्टमाणस्स अण्णे जीवे अन्ने जीवाया, से कहमेयं भंते ! एवं ?, गोयमा ! जण्णं ते अन्नउत्थिया एवमाइक्खंति जाव मिच्छं ते एवमाहंसु, अहं पुण गोयमा ! एवमाइक्खामि जाव परूवेमि— एवं खलु पाणातिवाए जाव मिच्छादंसणसल्ले वट्टमाणस्स सच्चेव जीवे सच्चेव जीवाया जाव अणागारोवओगे वट्टमाणस्स सच्चेव जीवे सच्चेव जीवाया (सूत्रं५९६) ॥ देवे णं भंते ! महड्ढीए जाव महेस० पुव्वामेव रूवी भवित्ता पभू अरूविं विउव्वित्ताणं चिट्ठित्तए ?, णो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ देवे णं जाव नो पभू अरूविं विउव्वित्ताणं चिट्ठित्तए ?, गोयमा ! अहमेयं जाणामि अहमेयं पासामि अहमेयं बुज्झामि अहमेयं अभिसमन्नागच्छामि, मए एयं नायं मए एयं दिट्ठं मए एयं बुद्धं मए एयं अभिसमन्नागयं जण्णं तहागयस्स जीवस्स सरूविस्स सकम्मस्स सरागस्स सवेदणस्स समोहस्स सलेसस्स ससरीरस्स ताओ सरीराओ अविप्पमुक्कस्स एवं पन्नायति, तंजहा—कालत्ते वा जाव सुक्किल्लत्ते वा सुब्भिगंधत्ते वा दुब्भिगंधत्ते वा तित्ते वा जाव महुर० कक्खडत्ते जाव लुक्खत्ते, से तेणट्ठेणं गोयमा ! जाव चिट्ठित्तए ॥ सच्चेव णं भंते ! से जीवे

पुव्वामेव अरूवी भवित्ता पभू रूविं विउव्वित्ताणं चिट्ठित्तए ?, णो तिणट्ठे० जाव चि०, गो० ! अहमेयं जाणामि जाव जन्नं तहागयस्स जीवस्स अरूवस्स अकम्म० अराग० अवेदस्स अमोहस्स अलेसस्स असरीरस्स ताओ सरीराओ विप्पमुक्कस्स णो एवं पन्नायति, तं०—कालत्ते वा जाव लुक्खत्ते वा, से तेणट्ठेणं जाव चिट्ठित्तए वा ॥ सेवं भंते ! २ त्ति ( सूत्रं ५९७ ) ॥ १७-२ ॥

'अन्नउत्थिया ण'मित्यादि, प्राणातिपातादिषु वर्त्तमानस्य देहिनः 'अन्ने जीवे'त्ति जीवति—प्राणान् धारयतीति जीवः—शरीरं प्रकृतिरित्यर्थः स चान्यो—व्यतिरिक्तः अन्यो जीवस्य—देहस्य सम्बन्धी अधिष्ठातृत्वादात्मा—जीवात्मा पुरुष इत्यर्थः, अन्यत्वं च तयोः पुद्गलापुद्गलस्वभावत्वात्, ततश्च शरीरस्य प्राणातिपातादिषु वर्त्तमानस्य दृश्यत्वाच्छरीरमेव तत्कर्तृ न पुनरात्मेत्येके, अन्ये त्वाहुः—जीवतीति जीवो—नारकादिपर्यायः जीवात्मा तु सर्वभेदानुगामि जीवद्रव्यं, द्रव्यपर्याययोश्चान्यत्वं तथाविधप्रतिभासभेदनिबन्धनत्वात् घटपटादिवत्, तथाहि—द्रव्यमनुगताकारां बुद्धिं जनयति पर्यायास्त्वननुगताकारामिति, अन्ये त्वाहुः—अन्यो जीवोऽन्यश्च जीवात्मा—जीवस्यैव स्वरूपमिति, प्राणातिपातादिविचित्रक्रियाभिधानं चेह सर्वावस्थासु जीवजीवात्मनोर्भेदख्यापनार्थमिति परमतं, स्वमतं तु 'सच्चेव जीवे सच्चेव जीवाय'त्ति स एव जीवः—शरीरं स एव जीवात्मा जीव इत्यर्थः कथञ्चिदिति गम्यं, न ह्यनयोरत्यन्तं भेदः, अत्यन्तभेदे देहेन स्पृष्टस्यासंवेदनप्रसङ्गो देहकृतस्य च कर्म्मणो जन्मान्तरे वेदनाभावप्रसङ्गः, अन्यकृतस्यान्यसंवेदने चाकृताभ्यागमप्रसङ्गः, अत्यन्तमभेदे च परलोकाभाव इति, द्रव्यपर्यायव्याख्यानेऽपि न द्रव्यपर्याययोरत्यन्तं भेदस्तथाऽनुपलब्धेः, यश्च प्रतिभासभेदो नासावात्यन्तिकतद्भे-

दकृतः किन्तु पदार्थानामेव तुल्यातुल्यरूपकृत इति, जीवात्मा–जीवस्वरूपं, इह तु व्याख्याने स्वरूपवतो न स्वरूपमत्यन्तं भिन्नं, भेदे हि निःस्वरूपता तस्य प्राप्नोति, न च शब्दभेदे वस्तुनो भेदोऽस्ति, शिलापुत्रकस्य वपुरित्यादाविवेति ॥ पूर्वं जीवद्रव्यस्य तत्पर्यायस्य वा भेद उक्तः, अथ जीवद्रव्यविशेषस्य पर्यायान्तरापत्तिवक्तव्यतामभिधातुमिदमाह—'देवे ण'मित्यादि, 'पुव्वामेव रूवी भवित्त'त्ति पूर्वं–विवक्षितकालात् शरीरादिपुद्गलसम्बन्धात् मूर्त्तो भूत्वा मूर्त्तः सन्नित्यर्थः प्रभुः 'अरूविं'ति अरूपिणं–रूपातीतममूर्त्तमात्मानमिति गम्यते, 'गोयमा'इत्यादिना स्वकीयस्य वचनस्याव्यभिचारित्वोपदर्शनाय सद्बोधपूर्वकतां दर्शयन्नुत्तरमाह—'अहमेयं जाणामि'त्ति अहम् 'एतत्' वक्ष्यमाणमधिकृतप्रश्ननिर्णयभूतं वस्तु जानामि विशेषपरिच्छेदेनेत्यर्थः 'पासामि'त्ति सामान्यपरिच्छेदतो दर्शनेनेत्यर्थः 'बुज्झामि'त्ति बुद्ध्ये–श्रद्दधे, बोधेः सम्यग्दर्शनपर्यायत्वात्, किमुक्तं भवति ?—'अभिसमागच्छामि'त्ति अभिविधिना साङ्गत्येन चावगच्छामि—सर्वैः परिच्छित्तिप्रकारैः परिच्छिनद्मि, अनेनात्मनो वर्त्तमानकालेऽर्थपरिच्छेदकत्वमुक्तमथातीतकाले एभिरेव धातुभिस्तद्दर्शयन्नाह—'मए'इत्यादि, किं तदभिसमन्वागतम् ? इत्याह—'जन्न'मित्यादि, 'तहागयस्स'त्ति तथागतस्य–तं देवत्वादिकं प्रकारमापन्नस्य 'सरूविस्स'त्ति वर्णगन्धादिगुणवतः, अथ स्वरूपेणामूर्त्तस्य सतो जीवस्य कथमेतत् ? इत्याह—'सकम्मस्स'त्ति कर्म्मपुद्गलसम्बन्धादिति भावः, एतदेव कथमित्यत आह—'सरागस्स'त्ति रागसम्बन्धात् कर्म्मसम्बन्ध इति भावः, रागश्चेह मायालोभलक्षणो ग्राह्यः, तथा 'सवेयस्स'त्ति स्त्र्यादिवेदयुक्तस्य, तथा 'समोहस्स'त्ति इह मोहः–कलत्रादिषु स्नेहो मिथ्यात्वं चारित्रमोहो वा 'सलेसस्स ससरीरस्स'त्ति व्यक्तं 'ताओ सरीराओ अविप्पमुक्कस्स'त्ति येन शरीरेण

तद्यथा–कालत्वं वेत्यादि, यतस्तस्य काल-
सशरीरस्तस्माच्छरीरादविप्रमुक्तस्य 'एवं'ति वक्ष्यमाणं प्रज्ञायते सामान्यजनेनापि तद्यथा–कालत्वं वेत्यादि, यतस्तस्य काल-
सशरीरस्तस्माच्छरीरादविप्रमुक्तस्य 'एवं'ति वक्ष्यमाणं प्रज्ञायते सामान्यजनेनापि ॥ एतदेव विपर्ययेण दर्शयन्नाह–
त्वादि प्रज्ञायतेऽतो नासौ तथागतो जीवो रूपी सन्नरूपमात्मानं विकुर्व्य प्रभुः स्थातुमिति ॥ एतदेव विपर्ययेण दर्शयन्नाह–
'सच्चेव णं भंते !'इत्यादि, 'सच्चेव णं भंते ! से जीवे'त्ति यो देवादिरभूत् स एवासौ भदन्त ! जीवः 'पूर्वमेव' विव-
क्षितकालात् 'अरूवि'त्ति अवर्णादिः 'रूविं'ति वर्णादिमत्त्वं 'नो एवं पन्नायति'त्ति नैवं केवलिनाऽपि प्रज्ञायतेऽसत्त्वात्,
असत्त्वं च मुक्तस्य कर्म्मबन्धहेत्वभावेन कर्म्माभावात्, तदभावे च शरीराभावाद्वर्णाद्यभाव इति नारूपीभूत्वा रूपीभव-
तीति ॥ सप्तदशशते द्वितीयः ॥ १७–२ ॥

---

द्वितीयोद्देशकान्ते रूपिताभवनलक्षणो जीवस्य धर्मो निरूपितः, तृतीये त्वेजनादिलक्षणोऽसौ निरूप्यत इत्येवंसम्ब-
द्धस्यास्येदमादिसूत्रम्—

सेलेसिं पडिवन्नए णं भंते ! अणगारे सया समियं एयति वेयति जाव तं तं भावं परिणमति ?, णो तिणट्ठे
समट्ठे, णण्णत्थेगेणं परप्पयोगेणं ॥ कतिविहा णं भंते ! एयणा पण्णत्ता ?, गोयमा ! पंचविहा एयणा पण्ण-
त्ता, तंजहा–दव्वेयणा खेत्तेयणा कालेयणा भवेयणा भावेयणा, दव्वेयणा णं भंते ! कतिविहा प० ?, गोयमा ! चउ-
व्विहा प०, तंजहा–नेरइयदव्वेयणा तिरिक्ख० मणुस्स० देवदव्वेयणा, से केण० एवं वुच्चइ–नेरइयदव्वेयणा २ ?,
गोयमा ! जन्नं नेरइया नेरइयदव्वे वट्टिंसु वा वट्टंति वा वट्टिस्संति वा ते णं तत्थ नेरतिया नेरतियदव्वे वट्ट-

माणा नेरइयदव्वेयणं एइंसु वा एयंति वा एइस्संति वा, से तेणट्ठेणं जाव दव्वेयणा, से केणट्ठेणं भंते ! एवं वुच्चइ तिरिक्खजोणियदव्वेयणा एवं चेव, नवरं तिरिक्खजोणियदव्वे० भाणियव्वं, सेसं तं चेव, एवं जाव देवदव्वेयणा। खेत्तेयणा णं भंते ! कतिविहा पण्णत्ता ?, गोयमा ! चउव्विहा प०, तं०—नेरइयखेत्तेयणा जाव देवखेत्तेयणा, से केणट्ठेणं भंते ! एवं वुच्चइ नेरइयखेत्तेयणा णे० २ ?, एवं चेव नवरं नेरइयखेत्तेयणा भाणियव्वा, एवं जाव देवखेत्तेयणा, एवं कालेयणावि, एवं भवेयणावि, भावेयणावि जाव देवभावेयणा (सूत्रं ५९८)॥

'सेलेसि'मित्यादि, 'नन्नत्थेगेणं परप्पओगेणं'ति न इति 'नो इणट्ठे समट्ठे'त्ति योऽयं निषेधः सोऽन्यत्रैकस्मात् परप्रयोगाद्, एजनादिकारणेषु मध्ये परप्रयोगेणैवैकेन शैलेश्यामेजनादि भवति न कारणान्तरेणेति भावः॥ एजनाधिकारादेवेदमाह—'कई'त्यादि, 'दव्वेयण'त्ति द्रव्याणां—नारकादिजीवसंपृक्तपुद्गलद्रव्याणां नारकादिजीवद्रव्याणां वा एजना—चलना द्रव्यैजना 'खेत्तेयण'त्ति क्षेत्रे—नारकादिक्षेत्रे वर्त्तमानानामेजना क्षेत्रैजना 'कालेयण'त्ति काले—नारकादिकाले वर्त्तमानानामेजना कालैजना 'भवेयण'त्ति भवे—नारकादिभवे वर्त्तमानानामेजना भवैजना 'भावेयण'त्ति भावे—औदयिकादिरूपे वर्त्तमानानां नारकादीनां तद्गतपुद्गलद्रव्याणां वैजना भावैजना, 'नेरइयदव्वे वट्टिंसु'त्ति नैरयिकलक्षणं यज्जीवद्रव्यं द्रव्यपर्याययोः कथञ्चिदभेदान्नारकत्वमेवेत्यर्थः तत्र 'वट्टिंसु'त्ति वृत्तवन्तः 'नेरइयदव्वेयण'त्ति नैरयिकजीवसंपृक्तपुद्गलद्रव्याणां नैरयिकजीवद्रव्याणां वैजना नैरयिकद्रव्यैजना ताम् 'एइंसु'त्ति ज्ञातवन्तोऽनुभूतवन्तो वेत्यर्थः॥ एजनाया एव विशेषमधिकृत्याह—

कतिविहा णं भंते ! चलणा पण्णत्ता ?, गोयमा ! तिविहा चलणा प०, तं०—सरीरचलणा इंदियचलणा

जोगचलणा, सरीरचलणा णं भंते ! कतिविहा प० ?, गोयमा ! पंचविहा प०, तं०—ओरालियसरीरचलणा जाव कम्मगसरीरचलणा, इंदियचलणा णं भंते ! कतिविहा प० ?, गोयमा ! पंचविहा पण्णत्ता, तंजहा—सोइंदियचलणा जाव फासिंदियचलणा, जोगचलणा णं भंते ! कतिविहा प० ?, गो० ! तिविहा प०, तं०—मणजोगचलणा वइजोगचलणा कायजोगचलणा, से केणट्ठेणं भंते ! एवं वुच्चइ ओरालियसरीरचलणा ओ० २ ?, गोयमा ! जे णं जीवा ओरालियसरीरे वट्टमाणा ओरालियसरीरपयोगाइं दव्वाइं ओरालियसरीरत्ताए परिणामेमाणा ओरालियसरीरचलणं चलिंसु वा चलंति वा चलिस्संति वा से तेणट्ठेणं जाव ओरालियसरीरचलणा०ओ० २, से केणट्ठेणं भंते ! एवं वु० वेउव्वियसरीरचलणा वेउ०, एवं चेव नवरं वेउव्वियसरीरे वट्टमाणा एवं जाव कम्मगसरीरचलणा, से केणट्ठेणं भंते ! एवं वु० सोइंदियचलणा २ ?, गोयमा ! जन्नं जीवा सोइंदिए वट्टमाणा सोइंदियपाओगाइं दव्वाइं सोइंदियत्ताए परिणामेमाणा सोइंदियचलणं चलिंसु वा चलंति वा चलिस्संति वा से तेणट्ठेणं जाव सोतिंदियचलणा सो० २, एवं जाव फासिंदियचलणा, से केणट्ठेणं एवं वुच्चइ मणोजोगचलणा २ ?, गोयमा ! जण्णं जीवा मणजोए वट्टमाणा मणजोगप्पाओगाइं दव्वाइं मणजोगत्ताए परिणामेमाणा मणजोगचलणं चलिंसु वा चलिंति वा चलिस्संति वा से तेणट्ठेणं जाव मणजोगचलणा मण० २, एवं वइजोगचलणावि, एवं कायजोगचलणावि ॥ (सू० ६९९) अह भंते ! संवेगे निव्वेए गुरुसाहम्मियसुस्सूसणया आलोयणया निंदणया गरहणया खमावणया सुयसहायता विउसमणया भावे अप्पडिबद्धया

विणिवट्टणया विवित्तसयणासणसेवणया सोइंदियसंवरे जाव फासिंदियसंवरे जोगपच्चक्खाणे सरीरपच्चक्खाणे कसायपच्चक्खाणे संभोगपच्चक्खाणे उवहिपच्चक्खाणे भत्तपच्चक्खाणे खमा विरागया भावसच्चे जोगसच्चे करणसच्चे मणसमण्णाहरणया वयसमन्नाहरणया कायसमन्नाहरणया कोहविवेगे जावमिच्छादंसणसल्लविवेगे णाणसंपन्नया दंसणसं० चरित्तसं० वेदणअहियासणया मारणंतियअहियासणया एए णं भन्ते ! पया किंपज्जवसणफला पण्णत्ता ?, समणाउसो ! गोयमा ! संवेगे निव्वेगे जाव मारणंतियअहियास० एए णं सिद्धिपज्जवसाणफला पं० समणाउसो ! ॥ सेवं भंते ! २ जाव विहरंति ॥ ( सूत्रं ६०० ) ॥ १७–३ ॥

'कई'त्यादि, 'चलण'त्ति एजना एव स्फुटतरस्वभावा 'सरीरचलण'त्ति शरीरस्य–औदारिकादेश्चलना–तत्प्रायोग्यपुद्गलानां तद्रूपतया परिणमने व्यापारः शरीरचलना, एवमिन्द्रिययोगचलने अपि, 'ओरालियसरीरचलणं चलिंसु'त्ति औदारिकशरीरचलनां कृतवन्तः ॥ अनन्तरं चलनाधर्मो भेदत उक्तः, अथ संवेगादिधर्मान् फलतोऽभिधित्सुरिदमाह— 'अहे'त्यादि, अथेति परिप्रश्नार्थः 'संवेए'त्ति संवेजनं संवेगो–मोक्षाभिलाषः 'निव्वेए'त्ति निर्वेदः–संसारविरक्तता 'गुरुसाहम्मियसुस्सूसणय'त्ति गुरूणां–दीक्षाद्याचार्याणां साधर्मिकाणां च–सामान्यसाधूनां या शुश्रूषणता–सेवा सा तथा 'आलोयण'त्ति आ–अभिविधिना सकलदोषाणां लोचना–गुरुपुरतः प्रकाशना आलोचना सैवालोचनता 'निंदणय'त्ति निन्दनं–आत्मनैवात्मदोषपरिकुत्सनं 'गरहणय'त्ति गर्हणं–परसमक्षमात्मदोषोद्भावनं 'खमावणय'त्ति परस्यासन्तोषवतः क्षमोत्पादनं 'विउसमणय'त्ति व्यवशमनता–परस्मिन् क्रोधान्निवर्त्तयति सति क्रोधोज्झनं, एतच्च क्वचिन्न दृश्यते, 'सुयस

हायय'त्ति श्रुतमेव सहायो यस्यासौ श्रुतसहायस्तद्भावस्तत्ता, 'भावे अप्पडिबद्धय'त्ति भावे—हासादावप्रतिबद्धता—अनुबन्धवर्जनं 'विणिवट्टणय'त्ति विनिवर्त्तनं—विरमणमसंयमस्थानेभ्यः 'विवित्तसयणासणसेवणय'त्ति विविक्तानि—स्त्र्याद्यसंसक्तानि यानि शयनासनानि उपलक्षणत्वादुपाश्रयश्च तेषां या सेवना सा तथा श्रोत्रेन्द्रियसंवरादयः प्रतीताः 'जोगपच्चक्खाणे'त्ति कृतकारितानुमतिलक्षणानां मनःप्रभृतिव्यापाराणां प्राणातिपातादिषु प्रत्याख्यानं—निरोधप्रतिज्ञानं योगप्रत्याख्यानं, 'सरीरपच्चक्खाणे'त्ति शरीरस्य प्रत्याख्यानं—अभिष्वङ्गप्रतिवर्जनपरिज्ञानं शरीरप्रत्याख्यानं 'कसायपच्चक्खाणे'त्ति क्रोधादिप्रत्याख्यानं—तान् न करोमीति प्रतिज्ञानं 'संभोगपच्चक्खाणे'त्ति समिति—संकरेण स्वपरलाभमीलनात्मकेन भोगः सम्भोगः—एकमण्डलीभोक्तृकत्वमित्येकोऽर्थः तस्य यत् प्रत्याख्यानं—जिनकल्पादिप्रतिपत्त्या परिहारस्तत्तथा, 'उवहिपच्चक्खाणे'त्ति उपधेरधिकस्य नियमः भक्तप्रत्याख्यानं व्यक्तं 'खम'त्ति क्षान्तिः 'विरागय'त्ति वीतरागता—रागद्वेषापगमरूपा 'भावसच्चे'त्ति भावसत्यं—शुद्धान्तरात्मतारूपं पारमार्थिकावितथत्वमित्यर्थः 'जोगसच्चे'त्ति योगाः—मनोवाक्कायास्तेषां सत्यं—अवितथत्वं योगसत्यं 'करणसच्चे'त्ति करणे—प्रतिलेखनादौ सत्यं—यथोक्तत्वं करणसत्यं 'मणसमन्नाहरणय'त्ति मनसः समिति—सम्यक् अन्विति—स्वावस्थानुरूपेण आङिति—मर्यादया आगमाभिहितभावाभिव्याप्त्या वा हरणं—सङ्क्षेपणं मनःसमन्वाहरणं तदेव मनःसमन्वाहरणता, एवमितरे अपि, 'कोहविवेगे'त्ति क्रोधविवेकः—कोपत्यागः तस्य दुरन्ततादिपरिभावनेनोदयनिरोधः 'वेयणअहियासणय'त्ति क्षुधादिपीडासहनं 'मारणंतियअहियासणय'त्ति कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमिति ॥ सप्तदशशते तृतीयः ॥ १७-३ ॥

तृतीयोद्देशके एजनादिका क्रियोक्ता, चतुर्थेऽपि क्रियैवोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

तेणं कालेणं २ रायगिहे नगरे जाव एवं वयासी—अत्थि णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ ?, हंता अत्थि, सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ ?, गोयमा ! पुट्ठा कज्जइ नो अपुट्ठा कज्जइ, एवं जहा पढमसए छट्ठुद्देसए जाव नो अणाणुपुव्विकडाति वत्तव्वं सिया, एवं जाव वेमाणियाणं, नवरं जीवाणं एगिंदियाण य निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं सेसाणं नियमं छद्दिसिं। अत्थि णं भंते ! जीवाणं मुसावाएणं किरिया कज्जइ ?, हंता अत्थि, सा भंते ! किं पुट्ठा कज्जइ जहा पाणाइवाएणं दंडओ एवं मुसावाएणवि, एवं अदिन्नादाणेणवि मेहुणेणवि परिग्गहेणवि, एवं एए पंच दंडगा ५। जंसमयन्नं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ, एवं तहेव जाव वत्तव्वं सिया जाव वेमाणियाणं, एवं जाव परिग्गहेणं, एवं एतेवि पंच दंडगा १०। जंदेसेणं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जति एवं चेव जाव परिग्गहेणं, एवं एतेवि पंच दंडगा १५। जंपएसन्नं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ सा भंते ! किं पुट्ठा कज्जति एवं तहेव दण्डओ एवं जाव परिग्गहेणं २०, एवं एए वीसं दंडगा। ( सूत्रं ६०१ ) जीवाणं भंते ! किं अत्तकडे दुक्खे परकडे दुक्खे तदुभयकडे दुक्खे ?, गोयमा ! अत्तकडे दुक्खे नो परकडे दुक्खे नो तदुभयकडे दुक्खे, एवं जाव वेमाणियाणं, जीवा णं भंते ! किं अत्तकडं दुक्खं वेदेंति परकडं दुक्खं वेदेंति तदुभयकडं दुक्खं वेदेंति ?, गोयमा ! अत्तकडं दुक्खं वेदेंति नो

परकडं दुक्खं वेदेंति नो तदुभयकडं दुक्खं वेदेंति, एवं जाव वेमाणियाणं। जीवाणं भंते! किं अत्तकडा वेयणा परकडा वेयणा पुच्छा, गोयमा! अत्तकडा वेयणा णो परकडा वेयणा णो तदुभयकडावेयणा एवं जाव वेमाणियाणं, जीवा णं भंते! किं अत्तकडं वेदणं वेदेंति परक० वे० वे० तदुभयक० वे० वे०?, गोयमा! जीवा अत्तकडं वेय० वे० नो परक० नो तदुभय० एवं जाव वेमाणियाणं। सेवं भंते! सेवं भंतेत्ति॥ (सूत्रं ६०२)॥ १७-४॥

'तेण'मित्यादि, 'एवं जहा पढमसए छट्ठुद्देसए'त्ति अनेनेदं सूचितं-'सा भंते! किं ओगाढा कज्जइ अणोगाढा कज्जइ?, गोयमा! ओगाढा कज्जइ नो अणोगाढा कज्जइ' इत्यादि, व्याख्या चास्य पूर्ववत्। 'जंसमयं'ति यस्मिन् समये प्राणातिपातेन क्रिया-कर्म्म क्रियते इह स्थाने तस्मिन्निति वाक्यशेषो दृश्यः, 'जंदेसं'ति यस्मिन् देशे-क्षेत्रविभागे प्राणातिपातेन क्रिया क्रियते तस्मिन्निति वाक्यशेषोऽत्रापि दृश्यः, 'जंपएसं'ति यस्मिन् प्रदेशे लघुतमे क्षेत्रविभागे॥ क्रिया प्रागुक्ता सा च कर्म्म कर्म्म च दुःखहेतुत्वाद्दुःखमिति तन्निरूपणायाह—'जीवाण'मित्यादि दण्डकद्वयम्। कर्म्मजन्या च वेदना भवतीति तन्निरूपणाय दण्डकद्वयमाह—'जीवाण'मित्यादि॥ सप्तदशशते चतुर्थः॥ १७-४॥

---

चतुर्थोद्देशकान्ते वैमानिकानां वक्तव्यतोक्ता, अथ पञ्चमोद्देशके वैमानिकविशेषस्य सोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

कहि णं भंते! ईसाणस्स देविंदस्स देवरन्नो सभा सुहम्मा पण्णत्ता?, गोयमा! जंबुद्दीवे २ मंदरस्स पव-

यस्स उत्तरेणं इमीसे रयणप्प० पुढ० बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरियजहा ठाणपदे जाव मज्झे ईसाणवडेंसए महाविमाणे से णं ईसाणवडेंसए महाविमाणे अद्धतेरस जोयणसयसहस्साइं एवं जहा दसमसए सक्कविमाणवत्तव्वया सा इहवि ईसाणस्स निरवसेसा भाणियव्वा जाव आयरक्खा, ठिती सातिरेगाइं दो सागरोवमाइं, सेसं तंचेव जाव ईसाणे देविंदे देवराया ई० २, सेवं भंते! सेवं भंतेत्ति॥ (सूत्रं ६०३) ॥ १७-५ ॥

'कहि ण'मित्यादि, 'जहा ठाणपए'त्ति प्रज्ञापनाया द्वितीयपदे, तत्र चेदमेवम्—'उड्ढं चंदिमसूरियगहगणणक्खत्ततारारूवाणं बहूइं जोयणसयाइं बहूइं जोयणसहस्साइं बहूइं जोयणसयसहस्साइं जाव उप्पइत्ता एत्थ णं ईसाणे णामं कप्पे पन्नत्ते' इत्यादि, 'एवं जहा दसमसए सक्कविमाणवत्तव्वया'इत्यादि, अनेन च यत्सूचितं तदित्थमवगन्तव्यम्—'अद्धतेरसजोयणसयसहस्साइं आयामविक्खंभेणं ऊयालीसं च सयसहस्साइं बावन्नं च सहस्साइं अठ्ठ य अडयाले जोयणसए परिक्खेवेण'मित्यादि ॥ सप्तदशशते पञ्चमः ॥ १७-५ ॥

---

पञ्चमोद्देशके ईशानकल्प उक्तः, षष्ठे तु कल्पादिषु पृथिवीकायिकोत्पत्तिरुच्यत इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

पुढविकाइए णं भंते! इमीसे रय० पुढ० समोहए २ जे भविए सोहम्मे कप्पे पुढविकाइयत्ताए उववज्जित्तए से भंते! किं पुव्विं उववज्जित्ता पच्छा संपाउणेज्जा पुव्विं वा संपाउणित्ता पच्छा उवव० ?, गोयमा! पुव्विं वा उववज्जित्ता पच्छा संपाउणेज्जा पुव्विं वा संपाउणित्ता पच्छा उववज्जेज्जा, से केणट्ठेणं जाव पच्छा उवव-

ज्जेज्जा ?, गोयमा ! पुढविक्काइयाणं तओ समुग्घाया पं०, तं०—वेदणासमुग्घाए कसायसमुग्घाए मारणंतिय-
समुग्घाए, मारणंतियसमुग्घाएणं समोहणमाणे देसेण वा समोहणति सव्वेण वा समोहणंति देसेणं समोहन्न-
माणे पुव्विं संपाउणित्ता पच्छा उववज्जिज्जा, सव्वेणं समोहणमाणे पुव्विं उववज्जेत्ता पच्छा संपाउणेज्जा, से तेणट्ठेणं
जाव उववज्जिज्जा । पुढविक्काइए णं भंते ! इमीसे रयणप्पभाए पुढवीए जाव समोहए स० २ जे भविए ईसाणे
कप्पे पुढवि एवं चेव ईसाणेवि, एवं जाव अच्चुयगेविज्जविमाणे, अणुत्तरविमाणे ईसिपब्भाराए य एवं चेव ।
पुढविकाइए णं भंते ! सक्करप्पभाए पुढवीए समोहए २ स० जे भविए सोहम्मे कप्पे पुढवि० एवं जहा रयण-
प्पभाए पुढविकाइए उववाइओ एवं सक्करप्पभाएवि पुढविकाइओ उववाएयव्वो जाव ईसिपब्भाराए, एवं
जहा रयणप्पभाए वत्तव्वया भणिया एवं जाव अहेसत्तमाए समोहए ईसीपब्भाराए उववाएयव्वो । सेवं
भंते ! २ त्ति ॥ ( सूत्रं ६०४ ) ॥ १७–६ ॥ पुढविकाइए णं भंते ! सोहम्मे कप्पे समोहए समोहणित्ता जे
भविए इमीसे रयणप्पभाए पुढवीए पुढवीकाइयत्ताए उववज्जित्तए से णं भंते ! किं पुव्विं सेसं तं चेव जहा
रयणप्पभापुढविकाइए सव्वकप्पेसु जाव ईसिपब्भाराए ताव उववाइओ एवं सोहम्मपुढविकाइओवि सत्त-
सुवि पुढवीसु उववाएयव्वो जाव अहेसत्तमाए, एवं जहा सोहम्मपुढविकाइओ सव्वपुढवीसु उववाइओ एवं
जाव ईसिपब्भारापुढविकाइओ सव्वपुढवीसु उववाएयव्वो जाव अहेसत्तमाए, सेवं भंते ! २ ॥ ( सूत्रं ६०५ )
॥ १७–७ ॥ आउक्काइए णं भंते ! इमीसे रयणप्पभाए पुढवीए समोह० २ जे भविए सोहम्मे कप्पे आउकाइ-

पढाए उववज्जित्तए एवं जहा पुढविकाइओ तहा आउकाइओवि सव्वकप्पेसु जाव ईसिपब्भाराए तहेव उववाएयव्वो एवं जहा रयणप्पभाआउकाइओ उववाइओ तहा जाव अहेसत्तमापुढविआउकाइओ उववाएयव्वो जाव ईसिपब्भाराए, सेवं भंते ! २॥ ( सूत्रं ६०६ )॥ १७-८ ॥ आउकाइए णं भंते ! सोहम्मे कप्पे समोहए समोह० जे भविए इमीसे रयणप्पभाए पुढवीए घणोदधिवलएसु आउकाइयत्ताए उववज्जित्तए से णं भंते ! सेसं तं चेव एवं जाव अहेसत्तमाए जहा सोहम्मआउकाइओ एवं जाव ईसिपब्भाराआउकाइओ जाव अहेसत्तमाए उववाएयव्वो, सेवं भंते ! २ ॥ ( सूत्रं ६०७ ) ॥ १७-९ ॥ वाउकाइए णं भंते ! इमीसे रयणप्पभाए जाव जे भविए सोहम्मे कप्पे वाउकाइयत्ताए उववज्जित्तए से णं जहा पुढविकाइओ तहा वाउकाइओवि नवरं वाउकाइयाणं चत्तारि समुग्घाया पं०, तं०-वेदणासमुग्घाए जाव वेउव्वियसमुग्घाए, मारणंतियसमुग्घाएणं समोहणमाणे देसेण वा समो० सेसं तं चेव जाव अहेसत्तमाए समोहओ ईसिपब्भाराए उववाएयव्वो, सेवं भंते ! २ ॥ ( सूत्रं ६०८ ) ॥ १७-१० ॥ वाउकाइए णं भंते ! सोहम्मे कप्पे समोहए स० २ जे भविए इमीसे रयणप्पभाए पुढवीए घणवाए तणुवाए घणवायवलएसु तणुवायवलएसु वाउकाइयत्ताए उववज्जित्तए से णं भंते ! सेसं तं चेव एवं जहा सोहम्मे वाउकाइओ सत्तसुवि पुढवीसु उववाइओ एवं जाव ईसिपब्भाराए वाउकाइओ अहेसत्तमाए जाव उववाएयव्वो, सेवं भंते ! २ ॥ ( सूत्रं ६०९ ) ॥ १७-११ ॥ एगिंदियाणं भंते ! सव्वे समाहरा सव्वे समसरीरा एवं जहा पढमसए वितियउद्देसए पुढविकाइयाणं वत्त-

व्वया भणिया सा चेव एगिंदियाणं इह भाणियव्वा जाव समाउया समोववन्नगा । एगिंदिया णं भंते ! कति
लेस्साओ प० ?, गोयमा ! चत्तारि लेस्साओ पं०, तं-कण्हलेस्सा जाव तेउलेस्सा । एएसि णं भंते ! एगिंदि-
याणं कण्हलेस्साणं जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा एगिंदियाणं तेउलेस्सा काउलेस्सा अणंत-
गुणा णीललेस्सा विसेसाहिया कण्हलेसा विसेसाहिया । एएसि णं भंते ! एगिंदिया णं कण्हलेस्सा इड्ढी जहेव
दीवकुमाराणं, सेवं भंते ! २ ॥ ( सूत्रं ६१० ) ॥ १७-१२ ॥ नागकुमारा णं भंते ! सव्वे समाहारा जहा सोल-
समसए दीवकुमारुद्देसे तहेव निरवसेसं भाणियव्वं जाव इड्ढीति, सेवं भंते ! सेवं भंते ! जाव विहरति ॥
( सूत्रं ६११ ) ॥ १७-१३ ॥ सुवन्नकुमारा णं भंते ! सव्वे समाहारा एवं चेव सेवं भंते ! २ ॥ ( सूत्रं ६१२ ) ॥
॥ १७-१४ ॥ विज्जुकुमारा णं भंते ! सव्वे समाहारा एवं चेव, सेवं भंते ! २ ॥ ( सूत्रं ६१३ ) ॥ १७-१५ ॥
वायुकुमारा णं भंते ! सव्वे समाहारा एवं चेव, सेवं भंते ! २ ॥ ( सूत्रं ६१४ ) ॥ १७-१६ ॥ अग्गिकुमारा णं
भंते ! सव्वे समाहारा एवं चेव, सेवं भंते ! २ ॥ ( सूत्रं ६१५ ) ॥ १७-१७ ॥ सत्तरसमं सयं समत्तं ॥ १७ ॥

'पुढविकाइए ण'मित्यादि, 'समोहए'त्ति समवहतः-कृतमारणान्तिकसमुद्घातः 'उववज्जित्त'त्ति उत्पादक्षेत्रं गत्वा 'संपाउणेज्ज'त्ति पुद्गलग्रहणं कुर्यात् उत व्यत्ययः ? इति प्रश्नः, 'गोयमा ! पुव्विं वा उववज्जित्ता पच्छा संपाउणेज्ज'त्ति मारणान्तिकसमुद्घातान्निवृत्य यदा प्राक्तनशरीरस्य सर्वथात्यागाद् गेन्दुकगत्योत्पत्तिदेशं गच्छति तदोच्यते पूर्वमुत्पद्य पश्चात्संप्राप्नुयात्-पुद्गलान् गृह्णीयात आहारयेदित्यर्थः, 'पुव्विं वा संपाउणित्ता पच्छा उववज्जेज्ज'त्ति यदा मारणान्तिकसमु-

घातगत एव म्रियते ईलिकागत्योत्पादस्थानं याति तदोच्यते पूर्वं सम्प्राप्य–पुद्गलान् गृहीत्वा पश्चादुत्पद्येत, प्राक्तनशरीरस्थ-जीवप्रदेशसंहरणतः समस्तजीवप्रदेशैरुत्पत्तिक्षेत्रगतो भवेदिति भावः, 'देसेण वा समोहन्नइ सव्वेण वा समोहन्नइ'त्ति यदा मारणान्तिकसमुद्घातगतो म्रियते तदा ईलिकागत्योत्पत्तिदेशं प्राप्नोति तत्र च जीवदेशस्य पूर्वदेहे एव स्थितत्वाद् देशस्य चोत्पत्तिदेशे प्राप्तत्वात् देशेन समवहन्तीत्युच्यते, यदा तु मारणान्तिकसमुद्घातात् प्रतिनिवृत्तः सन् म्रियते तदा सर्वप्रदेशसंहरणतो गेन्दुकगत्योत्पत्तिदेशं प्राप्तौ सर्वेण समवहत इत्युच्यते, तत्र च देशेन समवहन्यमानः–ईलिकागत्या गच्छन्नित्यर्थः पूर्वं सम्प्राप्य–पुद्गलान् गृहीत्वा पश्चादुत्पद्यते–सर्वात्मनोत्पादक्षेत्रे आगच्छति, 'सव्वेणं समोहणमाणे'त्ति गेन्दुकगत्या गच्छन्नित्यर्थः, पूर्वमुत्पद्य–सर्वात्मनोत्पाददेशमासाद्य पश्चात् 'संपाउणेज्ज'त्ति पुद्गलग्रहणं कुर्यादिति ॥ सप्तदशशते षष्ठः ॥१७–६॥ शेषास्तु सुगमा एव ॥ १७–७–८–९–१०–११–१२–१३–१४–१५–१६–१७ ॥ तदेवं सप्तदशशतं वृत्तितः परिसमाप्तम् ॥

शते सप्तदशे वृत्तिः, कृतेयं गुर्वनुग्रहात् । यदन्धो याति मार्गेण, सोऽनुभावोऽनुकर्षिणः ॥ १ ॥

इति श्रीमदभयदेवाचार्यविहितवृत्तियुतं सप्तदशं शतं समाप्तम् ॥

व्याख्यातं सप्तदशं शतम्, अथावसरायातमष्टादशं व्याख्यायते, तस्य च तावदादावेवेयमुद्देशकसङ्ग्रहणी गाथा—

पढमे १ विसाह २ मायंदिए य ३ पाणाइवाय ४ असुरे य ५। गुल ६ केवलि ७ अणगारे ८ भविए ९ तह सोमिलऽट्ठारसे १० ॥ ७ ॥ तेणं कालेणं तेणं समएणं रायगिहे जाव एवं वयासी–जीवे णं भंते ! जीवभावेणं किं पढमे अपढमे ?, गोयमा ! नो पढमे अपढमे, एवं नेरइए जाव वे०। सिद्धे णं भंते ! सिद्धभावेणं किं पढमे अपढमे ?, गोयमा ! पढमे नो अपढमे, जीवा णं भंते ! जीवभावेणं किं पढमा अपढमा ?, गोयमा ! नो पढमा अपढमा, एवं जाव वेमाणिया १। सिद्धा णं पुच्छा, गोयमा ! पढमा नो अपढमा ॥ आहारए णं भंते ! जीवे आहारभावेणं किं पढमे अपढमे ?, गोयमा ! नो पढमे अपढमे, एवं जाव वेमाणिए, पोहत्तिए एवं चेव। अणाहारए णं भंते ! जीवे अणाहारभावेणं पुच्छा, गोयमा ! सिय पढमे सिय अपढमे। नेरइए णं भंते ! एवं नेरतिए जाव वेमाणिए नो पढमे अपढमे, सिद्धे पढमे नो अपढमे। अणाहारगा णं भंते ! जीवा अणाहारभावेणं पुच्छा, गोयमा ! पढमावि अपढमावि, नेरइया जाव वेमाणिया णो पढमा अपढमा, सिद्धा पढमा नो अपढमा, एक्केक्के पुच्छा भाणियव्वा २॥ भवसिद्धीए एगत्तपुहुत्तेणं जहा आहारए, एवं अभवसिद्धीएवि, नोभवसिद्धीयनोअभवसिद्धीए णं भंते ! जीवे नोभव० पुच्छा, गोयमा ! पढमे नो अपढमे, णोभवसिद्धीनोअभवसिद्धीया णं भंते ! सिद्धा नोभ० अभव०, एवं चेव पुहुत्तेणवि दोण्हवि ॥

सन्नी णं भंते ! जीवे सन्नीभावेणं किं पढमे पुच्छा, गोयमा ! नो पढमे अपढमे, एवं विगलिंदियवज्जं जाव वेमाणिए, एवं पुहुत्तेणवि ३ । असन्नी एवं चेव एगत्तपुहुत्तेणं नवरं जाव वाणमंतरा, नोसन्नीनोअसन्नी जीवे मणुस्से सिद्धे पढमे नो अपढमे, एवं पुहुत्तेणवि ४ ॥ सलेसे णं भंते ! पुच्छा, गोयमा ! जहा आहारए एवं पुहुत्तेणवि कण्हलेस्सा जाव सुक्कलेस्सा एवं चेव नवरं जस्स जा लेसा अत्थि । अलेसे णं जीवमणुस्ससिद्धे जहा नोसन्नीनोअसन्नी ५ ॥ सम्मदिट्ठीए णं भंते ! जीवे सम्मदिट्ठिभावेणं किं पढमे पुच्छा, गोयमा ! सिय पढमे सिय अपढमे, एवं एगिंदियवज्जं जाव वेमाणिए, सिद्धे पढमे नो अपढमे, पुहुत्तिया जीवा पढमावि अपढमावि, एवं जाव वेमाणिया, सिद्धा पढमा नो अपढमा, मिच्छादिट्ठीए एगत्तपुहुत्तेणं जहा आहारगा, सम्मामिच्छादिट्ठी एगत्तपुहुत्तेणं जहा सम्मदिट्ठी, नवरं जस्स अत्थि सम्मामिच्छत्तं ६ ॥ संजए जीवे मणुस्से य एगत्तपुहुत्तेण जहा सम्मदिट्ठी, असंजए जहा आहारए, संजयासंजए जीवे पंचिंदियतिरिक्खजोणिय-मणुस्सा एगत्तपुहुत्तेणं जहा सम्मदिट्ठी नोसंजएनोअस्संजएनोसंजयासंजए जीवे सिद्धे य एगत्तपुहुत्तेणं पढमे नो अपढमे ७ ॥ सकसायी कोहकसायी जावलोभकसायी एए एगत्तत्तुपुहुत्तेणं जहा आहारए, अकसा० जीवे सिय पढमे सिय अपढमे, एवं मणुस्सेवि, सिद्धे पढमे नो अपढमे, पुहुत्तेणं जीवा मणुस्सावि पढमावि अपढमावि, सिद्धा पढमा नो अपढमा ८ ॥ णाणी एगत्तपुहुत्तेणं जहा सम्मदिट्ठी आभिणिबोहियनाणी जाव मणपज्जवनाणी एगत्तपुहुत्तेणं एवं चेव नवरं जस्स जं अत्थि, केवलनाणी जीवे मणुस्से सिद्धे य एग-

त्तपुहुत्तेणं पढमा नो अपढमा । अन्नाणी मइअन्नाणी सुयअन्नाणी विभंगना० एगत्तपुहुत्तेणं जहा आहारए ९ ॥ सजोगी मणजोगी वयजोगी कायजोगी एगत्तपुहुत्तेणं जहा आहारए नवरं जस्स जो जोगो अत्थि, अजोगी जीवमणुस्ससिद्धा एगत्तपुहुत्तेणं पढमा नो अपढमा १० ॥ सागारोवउत्ता अणागारोवउ० एगत्तपु० णं जहा अणाहारए ११ ॥ सवेदगो जाव नपुंसगवेदगो एगत्तपुहुत्तेणं जहा आहारए नवरं जस्स जो वेदो अत्थि, अवेदओ एगत्तपुहुत्तेणं तिसुवि पदेसु जहा अकसायी १२ ॥ ससरीरी जहा आहारए एवं जाव कम्मगसरीरी, जस्स जं अत्थि सरीरं, नवरं आहारगसरीरी एगत्तपुहुत्तेणं जहा सम्मदिट्ठी, असरीरी जीवो सिद्धो एगत्तपुहु० पढमा नो अपढमा १३ ॥ पंचहिं पज्जत्तीहिं पंचहिं अपज्जत्तीहिं एगत्तपुहुत्तेणं जहा आहारए, नवरं जस्स जा अत्थि जाव वेमाणिया नोपढमा अपढमा १४ ॥ इमा लक्खणगाहा—जो जेणपत्तपुव्वो भावो सो तेण अपढमओ होइ । सेसेसु होइ पढमो अपत्तपुव्वेसु भावेसु ॥ १ ॥ जीवे णं भंते ! जीवभावेणं किं चरिमे अचरिमे ?, गोयमा ! नो चरिमे अचरिमे । नेरइए णं भंते ! नेरइयभावेणं पुच्छा, गोयमा ! सिय चरिमे सिय अचरिमे, एवं जाव वेमाणिए, सिद्धे जहा जीवे । जीवा णं पुच्छा, गोयमा ! नो चरिमा अचरिमा, नेरइया चरिमावि अचरिमावि, एवं जाव वेमाणिया, सिद्धा जहा जीवा १ ॥ आहारए सव्वत्थ एगत्तेणं सिय चरिमे सिय अचरिमे पुहुत्तेणं चरिमावि अचरिमावि अणाहारओ जीवे सिद्धो य एगत्तेणवि पुहुत्तेणवि नो चरिमे अचरिमे, सेसट्ठाणेसु एगत्तपुहुत्तेणं जहा आहारओ २ ॥ भवसिद्धीओ जीवपदे एगत्तपुहुत्तेणं चरिमे

नो अचरिमे, सेसट्ठाणेसु जहा आहारओ। अभवसिद्धीओ सव्वत्थ एगत्तपुहुत्तेणं नो चरिमे अचरिमे, नोभवसिद्धीयनोअभवसिद्धीय जीवा सिद्धा य एगत्तपुहुत्तेणं जहा अभवसिद्धीओ ३॥ सन्नी जहा आहारओ, एवं असन्नीवि, नोसन्नीनोअसन्नी जीवपदे सिद्धपदे य अचरिमे, मणुस्सपदे चरमे एगत्तपुहुत्तेणं ४॥ सलेस्सो जाव सुक्कलेस्सो जहा आहारओ नवरं जस्स जा अत्थि, अलेस्सो जहा नोसन्नीनोअसन्नी ५॥ सम्मदिट्ठी जहा अणाहारओ, मिच्छादिट्ठी जहा आहारओ, सम्मामिच्छादिट्ठी एगिंदियविगलिंदियवज्जं सिय चरिमे सिय अचरिमे, पुहुत्तेणं चरिमावि अचरिमावि ६॥ संजओ जीवो मणुस्सो य जहा आहारओ, अस्संजओऽवि तहेव, संजयासंजएवि तहेव, नवरं जस्स जं अत्थि, नोसंजयनोअसंजयनोसंजयासंजय जहा नोभवसिद्धीयनोअभवसिद्धीओ ७॥ सकसाई जाव लोभकसायी सव्वट्ठाणेसु जहा आहारओ, अकसायी जीवपदे सिद्धे य नो चरिमो अचरिमो, मणुस्सपदे सिय चरिमो सिय अचरिमो ८॥ णाणी जहा सम्मदिट्ठी सव्वत्थ आभिणिवोहियनाणी जाव मणपज्जवनाणी जहा आहारओ नवरं जस्स जं अत्थि केवलनाणी जहा नोसन्नीनोअसन्नी, अन्नाणी जाव विभंगनाणी जहा आहारओ ९॥ सजोगी जाव कायजोगी जहा आहारओ जस्स जो जोगो अत्थि अजोगी जहा नोसन्नीनोअसन्नी १०॥ सागारोवउत्तो अणागारोवउत्तो य जहा अणाहारओ ११। सवेदओ जाव नपुंसगवेदओ जहा आहारओ अवेदओ जहा अकसाई १२॥ ससरीरी जाव कम्मगसरीरी जहा आहारओ नवरं जस्स जं अत्थि, असरीरी जहा नोभवसिद्धीयनोअभवसिद्धीय १३॥ पंचहिं

सञ्ज्ञिष्वपि भूतपूर्वगत्याऽसञ्ज्ञित्वं लभ्यते असञ्ज्ञिनामुत्पादात्, पृथिव्यादयस्त्वसञ्ज्ञिन एव, तेषां चाप्रथमत्वमनन्तशस्तल्लाभादिति, उभयनिषेधपदं च जीवमनुष्यसिद्धेषु लभ्यते, तत्र च प्रथमत्वं वाच्यमत एवोक्तं—नोसञ्ज्ञीत्यादि ॥ लेश्याद्वारे—'सलेसे ण'मित्यादि 'जहा आहारए'त्ति अप्रथम इत्यर्थः अनादित्वात्सलेश्यत्वस्येति 'नवरं जस्स जा लेसा अत्थि'त्ति यस्य नारकादेर्या कृष्णादिलेश्याऽस्ति सा तस्य वाच्या, इदं च प्रतीतमेव, अलेश्यपदं तु जीवमनुष्यसिद्धेष्वस्ति, तेषां च प्रथमत्वं वाच्यं, नोसञ्ज्ञिनोअसंज्ञिनामिवेति, एतदेवाह—'अलेसे ण'मित्यादि ॥ दृष्टिद्वारे—'सम्मदिट्ठिए ण'मित्यादि, 'सिय पढमे सिय अपढमे'त्ति कश्चित्सम्यग्दृष्टिर्जीवः सम्यग्दृष्टितया प्रथमो यस्य तत्प्रथमतया सम्यग्दर्शनलाभः कश्चिच्चाप्रथमो येन प्रतिपतितं सत् सम्यग्दर्शनं पुनर्लब्धमिति, 'एवं एगिंदियवज्जं'ति एकेन्द्रियाणां सम्यक्त्वं नास्ति ततो नारकादिदण्डकचिन्तायामेकेन्द्रियान् वर्जयित्वा शेषः स्यात्प्रथमः स्यादप्रथम इत्येवं वाच्यः, प्रथमसम्यक्त्वलाभापेक्षया प्रथमः द्वितीयादिलाभापेक्षया त्वप्रथमः, सिद्धस्तु प्रथम एव सिद्धत्वानुगतस्य सम्यक्त्वस्य तदानीमेव भावात्। 'मिच्छादिट्ठी'त्यादि, 'जहा आहारग'त्ति एकत्वे पृथक्त्वे च मिथ्यादृष्टीनामप्रथमत्वमित्यर्थः, अनादित्वान्मिथ्यादर्शनस्येति। 'सम्मामिच्छादिट्ठी'त्यादि 'जहा सम्मदिट्ठि'त्ति स्यात्प्रथमः स्यादप्रथमः प्रथमेतरसम्यग्मिथ्यादर्शनलाभापेक्षयेति भावः, 'नवरं जस्स अत्थि सम्मामिच्छत्तं'ति दण्डकचिन्तायां यस्य नारकादेर्मिश्रदर्शनमस्ति स एवेह प्रथमाप्रथमचिन्तायामधिकर्त्तव्यः ॥ संयतद्वारे—'संजए'इत्यादि, इह च जीवपदं मनुष्यपदं चैते द्वे एव स्तः, तयोश्चैकत्वादिना यथा सम्यग्दृष्टिरुक्तस्तथाऽसौ वाच्यः, स्यात्प्रथमः स्यादप्रथम इत्यर्थः, एतच्च संयमस्य प्रथमेतरलाभापेक्षयाऽवसेयमिति 'अस्संजए जहा आहारए'त्ति

अप्रथम इत्यर्थः असंयतत्वस्यानादित्वात्, '**संजयासंजए**'इत्यादि संयतासंयतो जीवपदे पञ्चेन्द्रियतिर्यक्पदे मनुष्यपदे च भवतीत्यत एतेष्वेकत्वादिना सम्यग्दृष्टिवद्वाच्यः स्यात्प्रथमः स्यादप्रथम इत्यर्थः, प्रथमाप्रथमत्वं च प्रथमेतरदेशविरतिलाभापेक्षयेति '**नोसंजएनोअस्संजए**'इत्यादि, निषिद्धसंयमासंयममिश्रभावो जीवः सिद्धश्च स्यात् स च प्रथम एवेति ॥ कषायद्वारे—'**सकसाई**'त्यादि, कषायिणः आहारकवदप्रथमा अनादित्वात्कषायित्वस्येति '**अकसाई**'त्यादि, अकषायो जीवः स्यात्प्रथमो यथाख्यातचारित्रस्य प्रथमलाभे स्यादप्रथमो द्वितीयादिलाभे, एवं मनुष्योऽपि, सिद्धस्तु प्रथम एव, सिद्धत्वानुगतस्याकषायभावस्य प्रथमत्वादिति ॥ ज्ञानद्वारे—'**णाणी**'त्यादि, '**जहा सम्मदिट्ठी**'त्ति स्यात्प्रथमः स्यादप्रथम इत्यर्थः तत्र केवली प्रथमः अकेवली तु प्रथमज्ञानलाभे प्रथमः अन्यथा त्वप्रथम इति, '**नवरं जं जस्स अत्थि**'त्ति जीवादिदण्डकचिन्तायां यत् मतिज्ञानादि यस्य जीवनारकादेरस्ति तत्तस्य वाच्यमिति, तच्च प्रतीतमेव, '**केवलनाणी**'-त्यादि व्यक्तम्, '**अन्नाणी**'त्यादि, '**जहा आहारए**'त्ति अप्रथम इत्यर्थः, अनादित्वेनानन्तशोऽज्ञानस्य सभेदस्य लाभादिति ॥ योगद्वारे—'**सजोगी**'त्यादि, एतदप्याहारकवदप्रथममित्यर्थः '**जस्स जो जोगो अत्थि**'त्ति जीवनारकादिदण्डकचिन्तायां यस्य जीवादेर्यो मनोयोगादिरस्ति स तस्य वाच्यः, स च प्रतीत एवेति, '**अजोगी**'त्यादि, जीवो मनुष्यः सिद्धश्चायोगी भवति स च प्रथम एवेति ॥ उपयोगद्वारे—'**सागारे**'त्यादि '**जहा अणाहारए**'त्ति साकारोपयुक्ता अनाकारोपयुक्ताश्च यथाऽनाहारकोऽभिहितस्तथा वाच्याः, ते च जीवपदे स्यात्प्रथमाः सिद्धापेक्षया स्यादप्रथमाः संसार्यपेक्षया, नारकादिवैमानिकान्तपदेषु तु नो प्रथमा अप्रथमा अनादित्वात्तल्लाभस्य, सिद्धपदे तु प्रथमा नो अप्रथमाः साकारानाकारोपयोग-

विशेषितस्य सिद्धत्वस्य प्रथमत एव भावादिति ॥ वेदद्वारे—'सवेयगे'त्यादि, 'जहा आहारए' अप्रथम एवेत्यर्थः 'नवरं जस्स जो वेदो अत्थि'त्ति जीवादिदण्डकचिन्तायां यस्य नारकादेर्यो नपुंसकादिर्वेदोऽस्ति स तस्य वाच्यः स च प्रतीत एवेति, 'अवेयओ'इत्यादि अवेदको यथाऽकषायी तथा वाच्यस्त्रिष्वपि पदेषु—जीवमनुष्यसिद्धलक्षणेषु, तत्र च जीवमनुष्यपदयोः स्यात्प्रथमः स्यादप्रथमः अवेदकत्वस्य प्रथमेतरलाभापेक्षया, सिद्धस्त्वप्रथम एवेति ॥ शरीरद्वारे—'ससरीरी'त्यादि, अयमप्याहारकवदप्रथम एवेति 'नवरमाहारगसरीरी'त्यादि 'जहा सम्मदिट्ठि'त्ति स्यात्प्रथमः स्यादप्रथम इत्यर्थः, अयं चैवं प्रथमेतराहारकशरीरस्य लाभापेक्षयेति, अशरीरी जीवः स्यात् सिद्धश्च स च प्रथम एवेति ॥ पर्याप्तिद्वारे—'पंचही'त्यादि, पञ्चभिः पर्याप्तिभिः पर्याप्तकः तथा पञ्चभिरपर्याप्तिभिरपर्याप्तक आहारकवदप्रथम इति, 'जस्स जा अत्थि'त्ति दण्डकचिन्तायां यस्य याः पर्याप्तयस्तस्य ता वाच्यास्ताश्च प्रतीता एवेति ॥ अथ प्रथमाप्रथमलक्षणाभिधानायाह—'जो जेण'गाहा, यो—भावो—जीवत्वादिर्येन जीवादिना कर्त्रा 'प्राप्तपूर्वः' अवाप्तपूर्वः 'भावः' पर्यायः 'सः' जीवादिस्तेन—भावेनाप्रथमको भवति, 'सेसेसु'त्ति सप्तम्यास्तृतीयार्थत्वात् 'शेषैः' प्राप्तपूर्वभावव्यतिरिक्तैर्भवति प्रथमः, किंस्वरूपैः शेषैः ? इत्याह—अप्राप्तपूर्वैर्भावैरिति गाथार्थः ॥ अथ प्रथमादिविपक्षं चरमादित्वं जीवादिष्वेव द्वारेषु निरूपयन्निदमाह—'जीवे णं'मित्यादि, जीवो भदन्त ! 'जीवभावेन' जीवत्वपर्यायेण किं चरमः ?—किं जीवत्वस्य प्राप्तव्यचरमभागः किं जीवत्वं मोक्ष्यतीत्यर्थः 'अचरमे'त्ति अविद्यमानजीवत्वचरमसमयो, जीवत्वमत्यन्तं न मोक्ष्यतीत्यर्थः, इह प्रश्ने आह—'नो' नैव 'चरमः' प्राप्तव्यजीवत्वावसानो, जीवत्वस्याव्यवच्छेदादिति । 'नेरइए णं'मित्यादि 'सिय चरिमे सिय अचरिमे'त्ति

यो नारको नारकत्वादुद्वृत्तः सन् पुनर्नरकगतिं न यास्यति सिद्धगमनात् स चरमः अन्यस्त्वचरमः, एवं यावद्वैमानिकः। 'सिद्धे जहा जीवे'त्ति अचरम इत्यर्थः, न हि सिद्धः सिद्धतया विनङ्क्ष्यतीति। 'जीवा ण'मित्यादि, पृथक्त्वदण्डकस्तथाविध एवेति ॥ आहारकद्वारे—'आहारए सव्वत्थ'त्ति सर्वेषु जीवादिपदेषु 'सिय चरिमे सिय अचरिमे'त्ति कश्चिच्चरमो यो निर्वास्यति अन्यस्त्वचरम इति। अनाहारकपदेऽनाहारकत्वेन जीवः सिद्धश्चाचरमो वाच्यः, अनाहारकत्वस्य तदीयस्यापर्यवसितत्वात्, जीवश्चेह सिद्धावस्थ एवेति, एतदेवाह—'अणाहारओ'इत्यादि, 'सेसठाणेसु'त्ति नारकादिषु पदेषु 'जहा आहारओ'त्ति स्याच्चरमः स्यादचरम इत्यर्थः, यो नारकादित्वेनानाहारकत्वं पुनर्न लप्स्यते स चरमो यस्तु तल्लप्स्यतेऽसौ अचरम इति ॥ भव्यद्वारे—'भवसिद्धीओ'इत्यादि, भव्यो जीवो भव्यत्वेन चरमः, सिद्धिगमनेन भव्यत्वस्य चरमत्वप्राप्तेः, एतच्च सर्वेऽपि भवसिद्धिका जीवाः सेत्स्यन्तीति वचनप्रामाण्यादभिहितमिति 'अभवसिद्धिओ सव्वत्थ'त्ति सर्वेषु जीवादिपदेषु 'नो चरिमे'त्ति अभव्यस्य भव्यत्वेनाभावात्, 'नोभवे'त्यादि उभयनिषेधवान् जीवपदे सिद्धपदे चाभवसिद्धिकवदचरमः तस्य सिद्धत्वात् सिद्धस्य च सिद्धत्वपर्यायानपगमादिति ॥ सञ्ज्ञिद्वारे—'सन्नी जहा आहारओ'त्ति सञ्ज्ञित्वेन स्याच्चरमः स्यादचरम इत्यर्थः, एवमसञ्ज्ञ्यपि, उभयनिषेधवांश्च जीवः सिद्धश्चाचरमो, मनुष्यस्तु चरमः उभयनिषेधवतो मनुष्यस्य केवलित्वेन पुनर्मनुष्यत्वस्यालाभादिति ॥ लेश्याद्वारे—'सलेसा'इत्यादि, 'जहा आहारओ'त्ति स्याच्चरमः स्यादचरम इत्यर्थः, तत्र ये निर्वास्यन्ति ते सलेश्यत्वस्य चरमाः, अन्ये त्वचरमा इति ॥ दृष्टिद्वारे—'सम्मदिट्ठी जहा अणाहारओ'त्ति जीवः सिद्धश्च सम्यग्दृष्टिरचरमो यतो जीवस्य सम्यक्त्वं प्रतिपतितमप्यवश्यंभावि,

सिद्धस्य तु तन्न प्रतिपतत्येव, नारकादयस्तु स्याच्चरमाः स्यादचरमाः, ये नारकादयो नारकत्वादिना सह पुनः सम्यक्त्वं न
लप्स्यन्ते ते चरमाः ये त्वन्यथा तेऽचरमा इति । 'मिच्छादिट्ठी जहा आहारओ'त्ति स्याच्चरमः स्यादचरम इत्यर्थः,
यो हि जीवो निर्वास्यति स मिथ्यादृष्टित्वेन चरमो यस्त्वन्यथाऽसावचरमः, नारकादिस्तु यो मिथ्यात्वयुक्तं नारकत्वं पुनर्न
लप्स्यते स चरमोऽन्यस्त्वचरमः, 'सम्मामिच्छे'त्यादि, 'एगिंदियविगलिंदियवज्जं'ति एतेषां किल मिश्रं न भवतीति
नारकादिदण्डके नैते मिश्रालापके उच्चारयितव्या इत्यर्थः, अस्य चोपलक्षणत्वेन सम्यग्दृष्ट्यालापके एकेन्द्रियवर्जमि-
त्यपि द्रष्टव्यं, एवमन्यत्रापि यद्यत्र न संभवति तत्तत्र स्वयं वर्जनीयं, यथा सञ्ज्ञिपदे एकेन्द्रियादयः असञ्ज्ञिपदे ज्योति-
ष्कादय इति, 'सिय चरिमे सिय अचरिमे'सम्यग्मिथ्यादृष्टिः स्याच्चरमो यस्य तत्प्राप्तिः पुनर्न भविष्यति, इतरस्त्वचरम
इति ॥ संयतद्वारे—'संजओ'इत्यादि, अयमर्थः—संयतो जीवः स्याच्चरमो यस्य पुनः संयमो न भविष्यति अन्यस्त्वचरमः,
एवं मनुष्योऽपि, यत एतयोरेव संयतत्वमिति 'अस्संजओऽवि तहेव'त्ति असंयतोऽपि तथैव यथाऽऽहारकः स्याच्चरमः
स्यादचरम इत्यर्थः, एवं संयतासंयतोऽपि, केवलं जीवपञ्चेन्द्रियतिर्यग्मनुष्यपदेष्वेवायं वाच्यः, अत एवाह—'नवरं जस्स
जं अत्थि'त्ति, निषिद्धत्रयस्त्वचरमः सिद्धत्वात्तस्येति ॥ कषायद्वारे—'सकसाई'त्यादि, अयमर्थः—सकषायः सभेदो जीवादि-
स्थानेषु स्याच्चरमः स्यादचरमः, तत्र यो जीवो निर्वास्यति स सकषायित्वेन चरमोऽन्यस्त्वचरमः, नारकादिस्तु यः सकषा-
यित्वं नारकाद्युपेतं पुनर्न प्राप्स्यति स चरमोऽन्यस्त्वचरमः 'अकसायी'त्यादि 'अकषायी' उपशान्तमोहादिः स च
जीवो मनुष्यः सिद्धश्च स्यात्, तत्र जीवः सिद्धश्चाचरमो यतो जीवस्याकषायित्वं प्रतिपतितमप्यवश्यम्भावि, सिद्धस्य तु न

प्रतिपतत्येव, मनुष्यस्त्वकषायितोपेतं मनुष्यत्वं यः पुनर्न लप्स्यते स चरमो यस्तु लप्स्यते सोऽचरम इति ॥ ज्ञानद्वारे— 'नाणी जहा सम्मदिट्ठि'त्ति, अयमिह सम्यग्दृष्टिदृष्टान्तलब्धोऽर्थः—जीवः सिद्धश्चाचरमः जीवो हि ज्ञानस्य सतः प्रतिपातेऽप्यवश्यं पुनर्भावेनाचरमः, सिद्धस्त्वक्षीणज्ञानभाव एव भवतीत्यचरमः, शेषास्तु ज्ञानोपेतनारकत्वादीनां पुनर्लाभासम्भवे चरमा अन्यथा त्वचरमा इति, 'सव्वत्थ'त्ति सर्वेषु जीवादिसिद्धान्तेषु पदेषु एकेन्द्रियवर्जितेष्विति गम्यं, ज्ञानभेदापेक्षयाऽऽह—'आभिणिबोहिए'इत्यादि, 'जहा आहारओ'त्तिकरणात् स्याच्चरमः स्यादचरम इति दृश्यं, तत्राभिनिबोधिकादिज्ञानं यः केवलज्ञानप्राप्त्या पुनरपि न लप्स्यते स चरमोऽन्यस्त्वचरमः, 'जस्स जं अत्थि'त्ति यस्य जीवनारकादेर्यदाभिनिबोधिकाद्यस्ति तस्य तद्वाच्यं, तच्च प्रतीतमेव, 'केवलनाणी'त्यादि, केवलज्ञानी अचरमो वाच्य इति भावः 'अन्नाणी' इत्यादि अज्ञानी सभेदः स्याच्चरमः स्यादचरम इत्यर्थः यो ह्यज्ञानं पुनर्न लप्स्यते स चरमः यस्त्वभव्यो ज्ञानं न लप्स्यते एवासावचरम इति [ ग्रन्थाग्रम् १५००० ] एवं यत्र यत्राहारकातिदेशस्तत्र तत्र स्याच्चरमः स्यादचरम इति व्याख्येयं, शेषमप्यनयैव दिशाऽभ्युह्यमिति ॥ अथ चरमाचरमलक्षणाभिधानायाह—'जो जं पाविहिति'गाहा 'यः' जीवो नारकादिः 'यं' जीवत्वं नारकत्वादिकमप्रतिपतितं प्रतिपतितं वा 'प्राप्स्यति'लप्स्यते पुनः पुनरपि 'भावं' धर्मं स 'तेन' भावेन-तद्भावापेक्षयेत्यर्थः अचरमो भवति, तथा 'अत्यन्तवियोगः' सर्वथाविरहः 'यस्य' जीवादेर्येन भावेन स तेनेति, शेषः चरमो भवतीति ॥ अष्टादशशतस्य प्रथमः ॥ १८–१ ॥

प्रथमोद्देशके वैमानिको वैमानिकभावेन स्याच्चरमः स्यादचरम इत्युक्तम्, अथ वैमानिकविशेषो यत्तद्भावेन चरमः न द्वितीयोद्देशके दर्श्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

तेणं कालेणं २ विसाहानामं नगरी होत्था वन्नओ, बहुपुत्तिए चेइए वन्नओ, सामी समोसढे जाव पज्जुवासइ, तेणं कालेणं २ सक्के देविंदे देवराया वज्जपाणी पुरंदरे एवं जहा सोलसमसए बितियउद्देसए तहेव दिव्वेणं जाणविमाणेणं आगओ नवरं एत्थ आभियोगादि अत्थि जाव बत्तीसतिविहं नट्टविहिं उवदंसेति उव० २ जाव पडिगए। भंतेत्ति भगवं गोयमे समणं भगवं महावीरं जाव एवं वयासी—जहा तईयसए ईसाणस्स तहेव कूडागारदिट्ठंतो तहेव पुव्वभवपुच्छा जाव अभिसमन्नागया ?, गोयमादि समणे भगवं महावीरे भगवं गोयमं एवं वयासी—एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे २ भारहे वासे हत्थिणापुरे नामं नगरे होत्था वन्नओ, सहस्संबवणे उज्जाणे वन्नओ, तत्थ णं हत्थिणागपुरे नगरे कत्तिए नामं सेट्ठी परिवसति अड्ढे जाव अपरिभूए णेगमपढमासणिए णेगमट्ठसहस्सस्स बहुसु कज्जेसु य कारणेसु य कोडुंबेसु य एवं जहा रायप्पसेणइज्जे चित्ते जाव चक्खुभूए णेगमट्ठसहस्सस्स सयस्स य कुडुंबस्स आहेवच्चं जाव कारेमाणे पालेमाणे य समणोवासए अहिगयजीवाजीवे जाव विहरति। तेणं कालेणं २ मुणिसुव्वए अरहा आदिगरे जहा सोलसमसए तहेव जाव समोसढे जाव परिसा पज्जुवासति, तए णं से कत्तिए सेट्ठी इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठ एवं जहा एक्कारसमसए सुदंसणे तहेव निग्गओ जाव पज्जु-

वासति, तए णं मुणिसुव्वए अरहा कत्तियस्स सेट्ठिस्स धम्मकहा जाव परिसा पडिगया, तए णं से कत्तिए सेट्ठी मुणिसुव्वयजाव निसम्म हट्ठतुट्ठ उट्ठाए उट्ठेति उ० २ मुणिसुव्वयं जाव एवं वयासी–एवमेयं भंते! जाव से जहेयं तुज्झे वदह नवरं देवाणुप्पिया! नेगमट्ठसहस्सं आपुच्छामि जेट्ठपुत्तं च कुडुंबे ठावेमि, तए णं अहं देवाणुप्पियाणं अंतियं पव्वयामि अहासुहं जाव मा पडिबंधं, तए णं से कत्तिए सेट्ठी जाव पडिनिक्खमति २ जेणेव हत्थिणापुरे नगरे जेणेव सए गेहे तेणेव उवागच्छइ २ णेगमट्ठसहस्सं सद्दावेति २ एवं वयासी–एवं खलु देवाणुप्पिया! मए मुणिसुव्वयस्स अरहओ अंतियं धम्मे निसन्ते सेऽविय मे धम्मे इच्छिए पडिच्छिए अभिरुइए, तए णं अहं देवाणुप्पिया! संसारभयुव्विग्गे जाव पव्वयामि तं तुज्झे णं देवाणुप्पिया! किं करेह किं ववसह किं भे हियइच्छिए किं भे सामत्थे?, तए णं तं णेगमट्ठसहस्संपि तं कत्तियं सेट्ठिं एवं वयासी–जइ णं देवाणुप्पिया! संसारभयुव्विग्गा जाव पव्वइस्संति अम्हं देवाणुप्पिया! किं अन्ने आलंबणे वा आहारे वा पडिबंधे वा? अम्हेवि णं देवाणुप्पिया! संसारभयुव्विग्गा भीया जम्मणमरणाणं देवाणुप्पिएहिं सद्धिं मुणिसुव्वयस्स अरहओ अंतियं मुंडा भवित्ता आगाराओ जाव पव्वयामो, तए णं से कत्तिए सेट्ठी तं नेगमट्ठसहस्सं एवं वयासी–जदि णं देवाणुप्पिया! संसारभयुव्विग्गा भीया जम्मणमरणाणं मए सद्धिं मुणिसुव्वयजावपव्वयह तं गच्छह णं तुज्झे देवाणुप्पिया! सएसु गिहेसु विपुलं असणं जाव उवक्खडावेह मित्तनाइजाव पुरओ जेट्ठपुत्ते कुडुंबे ठावेह जेट्ठ० २ तं मित्तनाइजाव जेट्ठपुत्ते आपुच्छह आपु० २ पुरिसस-

हस्सवाहिणीओ सीयाओ दुरूहह २ त्ता मित्तनाइजावपरिजणेणं जेट्ठपुत्तेहि य समणुगम्ममाणमग्गा सवड्ढीए जाव रवेणं अकालपरिहीणं चेव मम अंतियं पाउब्भवह, तए णं ते नेगमट्ठसहस्संपि कत्तियस्स सेट्ठिस्स एयमट्ठं विणएणं पडिसुणेंति प० २ जेणेव साइं साइं गिहाइं तेणेव उवागच्छइ २ विपुलं असणजाव उवक्खडावेंति २ मित्तनाइजाव तस्सेव मित्तनाइजाव पुरओ जेट्ठपुत्ते कुडुंबे ठावेंति जेट्ठपुत्ते० २ तं मित्तनाइजाव जेट्ठपुत्ते य आपुच्छंति जेट्ठ० २ पुरिससहस्सवाहिणीओ सीयाओ दुरूहंति दु० २ मित्तणातिजाव परिजणेणं जेट्ठपुत्तेहि य समणुगम्ममाणमग्गा सवड्ढीए जाव रवेणं अकालपरिहीणं चेव कत्तियस्स सेट्ठिस्स अंतियं पाउब्भवंति, तए णं से कत्तिए सेट्ठी विपुलं असणं ४ जहा गंगदत्तो जाव मित्तणातिजावपरिजणेणं जेट्ठपुत्तेणं णेगमट्ठसहस्सेण य समणुगम्ममाणमग्गे सवड्ढिए जाव रवेणं हत्थिणापुरं नगरं मज्झंमज्झेणं जहा गंगदत्तो जाव आलित्ते णं भंते ! लोए पलित्ते णं भंते ! लोए आलित्तपलित्ते णं भंते ! लोए जाव अणुगामियत्ताए भविस्सति तं इच्छामि णं भंते ! णेगमट्ठसहस्सेण सद्धिं सयमेव पव्वावियं जाव धम्ममाइक्खियं, तए णं मुणिसुव्वए अरहा कत्तियं सेट्ठिं णेगमट्ठसहस्सेणं सद्धिं सयमेव पव्वावेति जाव धम्ममाइक्खइ, एवं देवाणुप्पिया ! गंतव्वं एवं चिट्ठियव्वं जाव संजमियव्वं, तए णं से कत्तिए सेट्ठी नेगमट्ठसहस्सेण सद्धिं मुणिसुव्वयस्स अरहओ इमं एयारूवं धम्मियं उवदेसं सम्मं पडिवज्जइ तमाणाए तहा गच्छति जाव संजमेति, तए णं से कत्तिए सेट्ठी णेगमट्ठसहस्सेणं सद्धिं अणगारे जाए ईरियासमिए जाव गुत्तबंभयारी, तए णं से

कत्तिए अणगारे मुणिसुव्वयस्स अरहओ तहारूवाणं थेराणं अंतियं सामाइयमाइयाइं चोद्दस पुव्वाइं अहिज्जइ सा० २ बहूहिं चउत्थछट्ठट्ठमजाव अप्पाणं भावेमाणे बहुपडिपुन्नाइं दुवालसवासाइं सामन्नपरियागं पाउणइ पा० २ मासियाए संलेहणाए अत्ताणं झोसेइ मा० २ सट्ठिं भत्ताइं अणसणाए छेदेति स० २ आलोइयजाव कालं किच्चा सोहम्मे कप्पे सोहम्मवडेंसए विमाणे उववायसभाए देवसयणिज्जंसि जाव सक्के देविंदत्ताए उववन्ने, तए णं से सक्के देविंदे देवराया अहुणोववण्णे, सेसं जहा गंगदत्तस्स जाव अंतं काहिति नवरं ठिती दो सागरोवमाइं सेसं तं चेव। सेवं भंते! २ त्ति॥ (सूत्रं ६१७)॥ अष्टादशशते द्वितीयोद्देशकः ॥१८-२॥

'तेण'मित्यादि॥ 'णेगमपढमासणिए'त्ति इह नैगमा-वाणिजकाः 'कज्जेसु य'त्ति गृहकरणस्वजनसन्मानादिकृत्येषु 'कारणेसु'त्ति इष्टार्थानां हेतुषु-कृषिपशुपोषणवाणिज्यादिषु 'कुडुंबेसु'त्ति सम्बन्धविशेषवन्मानुषवृन्देषु विषयभूतेषु 'एवं जहा रायप्पसेणइज्जे' इत्यादि, अनेन चेदं सूचितं-'मंतेसु य गुज्झेसु य रहस्सेसु य ववहारेसु य निच्छएसु य आपुच्छणिज्जे मेढी पमाणं आहारो आलंबणं चक्खू मेढिभूए पमाणभूए आहारभूए आलंबणभूए'त्ति तत्र 'मन्त्रेषु' पर्यालोचनेषु 'गुह्येषु' लज्जनीयव्यवहारगोपनेषु 'रहस्येषु' एकान्तयोग्येषु 'निश्चयेषु' इत्थमेवेदं विधेयमित्येवंरूपनिर्णयेषु 'आपृच्छनीयः' प्रष्टव्यः किमिति? यतोऽसौ 'मेढि'त्ति मेढी-खलकमध्यवर्त्तिनी स्थूणा यस्यां नियमिता गोपङ्क्तिर्धान्यं गाहयति तद्वद्यमालम्ब्य सकलनैगममण्डलं करणीयार्थान् धान्यमिव विवेचयति स मेढी, तथा 'प्रमाणं' प्रत्यक्षादि तद्वद्यस्तद्दृष्टार्थानामव्यभिचारित्वेन तथैव प्रवृत्तिनिवृत्तिगोचरत्वात्स प्रमाणं, तथा आधारः आधेयस्येव सर्वकार्येषु लोकानामुपकारित्वात्, तथा

'आलम्बनं' रज्ज्वादि तद्वदापद्गर्त्तादिनिस्तारकत्वादालम्बनं, तथा चक्षुः–लोचनं तद्वल्लोकस्य विविधकार्येषु प्रवृत्तिनिवृत्तिविषयप्रदर्शकत्वाच्चक्षुरिति, एतदेव प्रपञ्चयति–'मेढिभूए'इत्यादि, भूतशब्द उपमार्थ इति, 'जहा गंगदत्तो'त्ति पोडशशतस्य पञ्चमोद्देशके यथा गङ्गदत्तोऽभिहितस्तथाऽयं वाच्य इति ॥ अष्टादशशते द्वितीय उद्देशकः समाप्तिमगमत् ॥

---

द्वितीयोद्देशके कार्त्तिकस्यान्तक्रियोक्ता, तृतीये तु पृथिव्यादेः सोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

तेणं कालेणं २ रायगिहे नगरे होत्था वन्नओ गुणसिलए चेइए वन्नओ जाव परिसा पडिगया, तेणं कालेणं तेणं स० समणस्स भगवओ महावीरस्स जाव अंतेवासी मागंदियपुत्ते नामं अणगारे पगइभद्दए जहा मंडियपुत्ते जाव पज्जुवासमाणे एवं वयासी–से नूणं भंते ! काउलेस्से पुढविकाइए काउलेस्सेहिंतो पुढविकाइएहिंतो अणंतरं उवट्टित्ता माणुसं विग्गहं लभति मा० २ केवलं बोहिं बुज्झति के० २ तओ पच्छा सिज्झति जाव अंतं करेति ?, हंता मागंदियपुत्ता ! काउलेस्से पुढविकाइए जाव अंतं करेति । से नूणं भंते ! काउलेसे आऊकाइए काउलेसेहिंतो आउकाइएहिंतो अणंतरं उवट्टित्ता माणुसं विग्गहं लभति मा० २ केवलं बोहिं बुज्झति जाव अंतं करेति ?, हंता मागंदियपुत्ता ! जाव अंतं करेति । से नूणं भंते ! काउलेस्से वणस्सइकाइए एवं चेव जाव अंतं करेति, सेवं भंते २ त्ति मागंदियपुत्ते अणगारे समणं भगवं महावीरं जाव नमंसित्ता जेणेव समणे निग्गंथे तेणेव उवागच्छति उवा० २ समणे निग्गंथे एवं वयासी–एवं खलु अज्जो ! काउलेस्से

पुढविकाइए तहेव जाव अंतं करेति, एवं खलु अज्जो ! काउलेस्से आउकाइए जाव अंतं करेति, एवं खलु अज्जो ! काउलेस्से वणस्सइकाइए जाव अंतं करेति, तए णं ते समणा निग्गंथा मागंदियपुत्तस्स अणगारस्स एवमाइक्खमाणस्स जाव एवं परूवेमाणस्स एयमट्ठं नो सद्दहंति ३ एयमट्ठं असद्दहमाणा ३ जेणेव समणे भगवं महावीरे तेणेव उवागच्छंति २ समणं भगवं महावीरं वंदति नमंसति २ एवं वयासी-एवं खलु भंते ! मागंदियपुत्ते अणगारे अम्हं एवमाइक्खति जाव परूवेति-एवं खलु अज्जो ! काउलेस्से पुढविकाइए जाव अंतं करेति, एवं खलु अज्जो ! काउलेस्से आउकाइए जाव अंतं करेति, एवं वणस्सइकाइएवि जाव अंतं करेति, से कहमेयं भंते ! एवं ?, अज्जोत्ति समणे भगवं महावीरे ते समणे निग्गंथे आमंतित्ता एवं वयासी-जण्णं अज्जो ! मागंदियपुत्ते अणगारे तुज्झे एवं आइक्खति जाव परूवेति-एवं खलु अज्जो ! काउ-लेस्से पुढविकाइए जाव अंतं करेति, एवं खलु अज्जो ! काउलेस्से आउकाइए जाव अंतं करेति, एवं खलु अज्जो ! काउलेस्से वणस्सइकाइएवि जाव अंतं करेति, सच्चे णं एसमट्ठे, अहंपि णं अज्जो ! एवमाइक्खामि ४ एवं खलु अज्जो ! कण्हलेसे पुढ० कण्हलेसेहिंतो पुढविकाइएहिंतो जाव अंतं करेति एवं खलु अज्जो ! नील-लेस्से पुढविका० जाव अंतं करेति एवं काउलेस्सेवि जहा पुढविकाइए एवं आउकाइएवि एवं वणस्सइकाइएवि सच्चे णं एसमट्ठे ॥ सेवं भंते ! सेवं भंते ! त्ति समणा निग्गंथा समणं भगवं महा० वं० नमं० २ जेणेव

मागंदियपुत्ते अणगारे तेणेव उवाग० २ मागंदियपुत्तं अणगारं वंदति नमं० २ एयमट्ठं सम्मं विणएणं भुज्जो २ खामेति ( सूत्रं ६१८ ) ॥

'तेणं कालेण'मित्यादि, 'जहा मंडियपुत्ते'त्ति अनेनेदं सूचितं-'पगइउवसंते पगइपयणुकोहमाणमायलोभे'त्यादि, इह च पृथिव्यब्वनस्पतीनामनन्तरभवे मानुषत्वप्राप्त्याऽन्तक्रिया संभवति न तेजोवायूनां, तेषामानन्तर्येण मानुषत्वाप्राप्तेरतः पृथिव्यादित्रयस्यैवान्तक्रियामाश्रित्य 'से नूण'मित्यादिना प्रश्नः कृतो न तेजोवायूनामिति ॥ अनन्तरमन्तक्रियोक्ता, अथान्तक्रियायां ये निर्जरापुद्गलास्तद्वक्तव्यतामभिधातुमाह—

तए णं से मागंदियपुत्ते अणगारे उट्ठाए उट्ठेति जेणेव समणे भगवं महावीरे तेणेव उवागच्छति ते० २ समणं भगवं महा० वं० नमं० २ एवं वयासी-अणगारस्स णं भंते ! भावियप्पणो सव्वं कम्मं वेदेमाणस्स सव्वं कम्मं निज्जरेमाणस्स चरिमं मारं मरमाणस्स सव्वं मारं मरमाणस्स सव्वं सरीरं विप्पजहमाणस्स चरिमं कम्मं वेदेमाणस्स चरिमं कम्मं निज्जरेमाणस्स चरिमं सरीरं विप्पजहमाणस्स मारणंतियं कम्मं वेदेमाणस्स मारणंतियं कम्मं निज्जरेमाणस्स मारं मरमाणस्स मारणंतियं सरीरं विप्पजहमाणस्स जे चरिमा निज्जरापोग्गला सुहुमा णं ते पोग्गला प० समणाउसो ! सव्वं लोगंपिणं ते उग्गाहित्ताणं चिट्ठंति ?, हंता मागंदियपुत्ता !, अणगारस्स णं भंते ! भावियप्पणो जाव ओगाहित्ताणं चिट्ठंति छउमत्थे णं भंते ! मणुस्से तेसिं निज्जरापोग्गलाणं किंचि आणत्तं वा णाणत्तं वा एवं जहा इंदियउद्देसए पढमे जाव वेमाणिया जाव तत्थ णं जे ते उवउत्ता ते जाणंति पासंति

आहारेंति, से तेणट्ठेणं निक्खेवो भाणियव्वोत्ति न पासंति आहारंति, नेरइया णं भं० निज्जरापुग्गला न जाणंति न पासंति आहारंति, एवं जाव पंचिंदियतिरिक्खजोणियाणं, मणुस्सा णं भंते ! निज्जरापोग्गले किं जाणंति पासंति आहारंति उदाहु न जाणंति न पासंति नाहारंति ?, गोयमा ! अत्थेगइया जाणंति ३ अत्थेग० न जाणंति न पासंति आहारंति, से केणट्ठेणं भंते ! एवं वुच्चइ अत्थेगइया जाणं० पासं० आहा० अत्थेग० न जाणं० न पासं० आहारं० ?, गोयमा ! मणुस्सा दुविहा पन्नत्ता, तंजहा-सन्नीभूया य असन्नीभूया य, तत्थ णं जे ते असन्निभूया ते न जाणंति न पासंति आहारंति, तत्थ णं जे ते सन्नीभूया ते दुविहा पं०, तं०-उवउत्ता अणुवउत्ता य, तत्थ णं जे ते अणुवउत्ता ते न याणंति न पासंति आहारंति, तत्थ णं जे ते उव-उत्ता ते जाणंति ३, से तेणट्ठेणं गोयमा ! एवं वुच्चइ अत्थेगइया न जाणंति २ आहारेंति अत्थेगइया जाणंति ३, वाणमंतरजोइसिया जहा नेरइया । वेमाणिया णं भंते ! ते निज्जरापोग्गले किं जाणंति ६ ?, गोयमा ! जहा मणुस्सा नवरं वेमाणिया दुविहा पं०, तं०-माइमिच्छदिट्ठीउववन्नगा य अमाइसम्मदिट्ठीउववन्नगा य, तत्थ णं जे ते मायिमिच्छदिट्ठिउववन्नगा ते णं न जा० न पा० आहा० तत्थ णं जे ते अमायिसम्मदिट्ठीउवव० ते दुविहा पं० तं०-अणंतरोववन्नगा य परंपरोववन्नगा य, तत्थ णं जे ते अणंतरोववन्नगा ते णं न याणंति न पासंति आहारेंति, तत्थ णं जे ते परंपरोववन्नगा ते दुविहा पं०, तं०-पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते

अपज्जत्तगा ते णं न जाणंति २ आहारंति, तत्थ णं जे ते पज्जत्तगा ते दुविहा पं०, तं०—उवउत्ता य अणुवउत्ता य, तत्थ णं जे ते अणुवउत्ता ते ण याणंति २ आहारंति ॥ ( सूत्रं ६१९ ) ॥

'अणगारस्से'त्यादि, भावितात्मा—ज्ञानादिभिर्वासितात्मा, केवली चेह संग्राह्यः, तस्य सर्वं कर्म—भवोपग्राहित्रयरूपमायुषो भेदेनाभिधास्यमानत्वात् 'वेदयतः' अनुभवतः प्रदेशविपाकानुभवाभ्यां अत एव सर्वं कर्म्म भवोपग्राहिरूपमेव 'निर्जरयतः' आत्मप्रदेशेभ्यः शातयतः तथा 'सर्वं' सर्वायुःपुद्गलापेक्षं 'मारं' मरणं अन्तिममित्यर्थः 'म्रियमाणस्य' गच्छतः तथा 'सर्वं' समस्तं 'शरीरम्' औदारिकादि विप्रजहतः, एतदेव विशेषिततरमाह—'चरमं कम्म'मित्यादि, 'चरमं कर्म्म' आयुषश्चरमसमयवेद्यं वेदयत एवं निर्जरयतः तथा 'चरमं' चरमायुःपुद्गलक्षयापेक्षं 'मारं' मरणं 'म्रियमाणस्य' गच्छतः, तथा चरमं शरीरं यच्चरमावस्थायामस्ति तत्त्यजतः, एतदेव स्फुटतरमाह—'मारणंतियं कम्मं'इत्यादि, मरणस्य—सर्वायुष्कक्षयलक्षणस्यान्तः—समीपं मरणान्तः—आयुष्कचरमसमयस्तत्र भवं मारणान्तिकं 'कर्म्म' भवोपग्राहित्रयरूपं वेदयतः एवं निर्जरयतः तथा 'मारणान्तिकं' मारणान्तिकायुर्दलिकापेक्षं 'मारं' मरणं कुर्वतः, एवं शरीरं त्यजतः, ये 'चरमाः' सर्वान्तिमाः 'निर्जरापुद्गलाः' निर्जीर्णकर्मदलिकानि सूक्ष्मास्ते पुद्गलाः प्रज्ञप्ता भगवद्भिः हे श्रमणायुष्मन्! इति भगवत आमन्त्रणं, सर्वलोकमपि तेऽवगाह्य—तत्स्वभावत्वेनाभिव्याप्य तिष्ठन्तीति प्रश्नः,अत्रोत्तरं—'हंता मागंदियपुत्ते'त्यादि, 'छउमत्थे णं'ति केवली हि जानात्येव तानिति न तद्गतं किञ्चित्प्रष्टव्यमस्तीतिकृत्वा 'छउमत्थे'त्युक्तं, छद्मस्थश्चेह निरतिशयो ग्राह्यः, 'आणत्तं व'त्ति अन्यत्वम्—अनगारद्वयसम्बन्धिनो ये पुद्गलास्तेषां भेदः 'णाणत्तं व'त्ति वर्णादिकृतं नाना-

त्वम् 'एवं जहा इंदियउद्देसए पढमे'त्ति एवं यथा प्रज्ञापनायाः पञ्चदशपदस्य प्रथमोद्देशके तथा शेषं वाच्यम्, अर्थातिदेशश्चायं तेन यत्रेह 'गोयमे'ति पदं तत्र 'मागंदियपुत्ते'त्ति द्रष्टव्यं, तस्यैव प्रच्छकत्वात्, तच्चेदम्-'ओमत्तं वा तुच्छत्तं वा गरुयत्तं वा लहुयत्तं वा जाणति पासति ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं णो किंचि आणत्तं वा ६ जाणति पासति ?, गोयमा ! देवेऽवि य णं अत्थेगइए जे णं तेसिं निज्जरापोग्गलाणं [नो] किंचि आणत्तं वा ६ न जाणइ न पासइ, से तेणट्ठेणं गोयमा ! एवं वुच्चइ छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं [नो] किंचि आणत्तं वा ६ न जाणइ न पासइ, सुहुमा णं ते पुग्गला पन्नत्ता समणाउसो ! सव्वलोगंपि य णं ते ओगाहित्ताणं चिट्ठंति' एतच्च व्यक्तं, नवरम् 'ओमत्तं'त्ति अवमत्वम्-ऊनता 'तुच्छत्तं'ति तुच्छत्वं-निस्सारता, निर्वचनसूत्रे तु 'देवेऽविय णं अत्थेगइए'त्ति मनुष्येभ्यः प्रायेण देवः पटुप्रज्ञो भवतीति देवग्रहणं, ततश्च देवोऽपि चास्त्येककः कश्चिद्विशिष्टावधिज्ञानविकलो यस्तेषां निर्जरापुद्गलानां न किञ्चिदन्यत्वादि जानाति किं पुनर्मनुष्यः ?, एकग्रहणाच्च विशिष्टावधिज्ञानयुक्तो देवो जानातीत्यवसीयते इति, 'जाव वेमाणिए'त्ति अनेनेन्द्रियपदप्रथमोद्देशकाभिहित एव प्राग्व्याख्यातसूत्रानन्तरवर्ती चतुर्विंशतिदण्डकः सूचितः, स च कियद्दूरं वाच्यः ? इत्याह-'जाव तत्थ णं जे ते उवउत्ता' इत्यादि, एवं चासौ दण्डकः-'नेरइया णं भंते ! निज्जरापुग्गले किं जाणंति पासंति आहारिंति उदाहु न जाणंति०' शेषं तु लिखितमेवास्त इति, गतार्थं चैतत् नवरमाहारयन्तीत्यत्र सर्वत्र ओजआहारो गृह्यते, तस्य शरीरविशेषग्राह्यत्वात् तस्य चाहारकत्वे सर्वत्रभावात्, लोमाहारप्रक्षेपाहारयोस्तु त्वग्मुखयोर्भाव एव भावात्, यदाह-"सरीरेणोयाहारो तयाय फासेण

लोमआहारो । पक्खेवाहारो पुण कावलिओ होइ नायव्वो ॥ १ ॥" [कार्मणेनौजआहारः त्वचा स्पर्शेन च लोमाहारः । प्रक्षेपाहारः पुनः कावलिको भवति ज्ञातव्यः ॥ १ ॥] मनुष्यसूत्रे तु सञ्ज्ञिभूता विशिष्टावधिज्ञान्यादयो गृह्यन्ते, येषां ते निर्जरापुद्गला ज्ञानविषयाः । वैमानिकसूत्रे तु वैमानिका अमायिसम्यग्दृष्टय उपयुक्तास्तान् जानन्ति ये विशिष्टावधयो, मायिमिथ्यादृष्टयस्तु न जानन्ति मिथ्यादृष्टित्वादेवेति ॥ अनन्तरं निर्जरापुद्गलाश्चिन्तितास्ते च बन्धे सति भवन्तीति बन्धं निरूपयन्नाह—

कतिविहे णं भन्ते! बंधे प० ?, मागंदियपुत्ता! दुविहे प० तं०—दव्वबंधे य भावबंधे य, दव्वबंधे णं भंते! कतिविहे प० ?, मागंदियपुत्ता! दुविहे प० तं०—पओगबंधे य वीससाबंधे य, वीससाबंधे णं भंते! कतिविहे पं० ?, मागंदियपुत्ता! दुविहे प०, तं०—साइयवीससाबंधे य अणादीयवीससाबंधे य, पयोगबंधे णं भंते! कतिविहे पं०, मागं० पुत्ता! दुविहे पं०, तं०—सिढिलबंधणबन्धे य धणियबंधणबन्धे य, भावबंधे णं भंते! कतिविहे पं० ?, मागंदियपुत्ता! दुविहे पं० तं०—मूलपगडिबंधे य उत्तरपगडिबंधे य, नेरइयाणं भंते! कतिविहे भावबंधे प० ?, मागंदियपुत्ता! दुविहे भावबंधे पं० तं०—मूलपगडिबंधे य उत्तरपगडिबंधे य, एवं जाव वेमाणियाणं, नाणावरणिज्जस्स णं भंते! कम्मस्स कतिविहे भावबंधे प० ?, मागंदिया! दुविहे भावबंधे प० तं०—मूलपगडिबंधे य उत्तरपयडिबंधे य, नेरतियाणं भंते! नाणावरणिज्जस्स कम्मस्स कतिविहे भावबंधे० प० ?,

मागंदियपुत्ता ! दुविहे भावबंधे प० तं०—मूलपगडिबंधे य उत्तरपयडि० एवं जाव वेमाणियाणं, जहा नागा-
वरणिज्जेणं दंडओ भणिओ एवं जाव अंतराइएणं भाणियव्वो ॥ ( सूत्रं ६२० ) ॥

'कइविहे ण'मित्यादि, 'दव्वबंधे य'त्ति द्रव्यबन्ध आगमादिभेदादनेकविधः केवलमिहोभयव्यतिरिक्तो ग्राह्यः, स च द्रव्येण—स्नेहरज्ज्वादिना द्रव्यस्य वा परस्परेण बन्धो द्रव्यबन्धः, 'भावबंधे य'त्ति भावबन्ध आगमादिभेदाद् द्वेधा, स चेह नोआगमतो ग्राह्यः, तत्र भावेन—मिथ्यात्वादिना भावस्य वा—उपयोगभावाव्यतिरेकात् जीवस्य बन्धो भावबन्धः, 'पओयबंधे य'त्ति जीवप्रयोगेण द्रव्याणां बन्धनं 'वीससाबंधे'त्ति स्वभावतः 'साईवीससाबंधे'त्ति अभ्रादीनाम् 'अणाईयवीससाबंधे य'त्ति धर्मास्तिकायाधर्म्मास्तिकायादीनां 'सिढिलबंधणबन्धे य'त्ति तृणपूलिकादीनां 'धणियबंधणबन्धे य'त्ति रथचक्रादीनामिति ॥ कर्म्माधिकारादिदमाह—

जीवाणं भंते ! पावे कम्मे जे य कडे जाव जे य कज्जिस्सइ अत्थि याइ तस्स केइ णाणत्ते ?, हंता अत्थि, से केणट्ठेणं भंते ! एवं वुच्चइ जीवाणं पावे कम्मे जे य कडे जाव जे य कज्जिस्सति अत्थि याइ तस्स णाणत्ते ?, मागंदियपुत्ता ! से जहानामए—केइ पुरिसे धणुं परामुसइ धणुं २ उसुं परामुसइ उ० २ ठाणं ठा० २ आययकन्नाययं उसुं करेंति आ० २ उड्ढं वेहासं उव्विहइ से नूणं मागंदियपुत्ता ! तस्स उसुस्स उड्ढं वेहासं उव्वीढस्स समाणस्स एयतिवि णाणत्तं जाव तं तं भावं परिणमतिवि णाणत्तं ?, हंता भगवं ! एयतिवि णाणत्तं जाव

परिणमतिवि णाणत्तं से तेणट्ठेणं मागंदियपुत्ता ! एवं वुच्चइ जाव तं तं भावं परिणमतिवि णाणत्तं, नेरइयाणं पावे कम्मे जे य कडे एवं चेव नवरं जाव वेमाणियाणं ॥ ( सूत्रं ६२१ ) ॥

'जीवाण'मित्यादि, 'एयइवि नाणत्तं'ति 'एजते' कम्पते यदसाविषुस्तदपि 'नानात्वं' भेदोऽनेजनावस्थापेक्षया, यावत्करणात् 'वेयइवि णाणत्तं'इत्यादि द्रष्टव्यम्, अयमभिप्रायः—यथा वाणस्योर्द्धं क्षिप्तस्यैजनादिकं नानात्वमस्ति एवं कर्म्मणः कृतत्वक्रियमाणत्वकरिष्यमाणत्वरूपं तीव्रमन्दपरिणामभेदात्तदनुरूपकार्यकारित्वरूपं च नानात्वमवसेयमिति ॥ अनन्तरं कर्म्म निरूपितं, तच्च पुद्गलरूपमिति पुद्गलानधिकृत्याह—

नेरइया णं भंते ! जे पोग्गले आहारत्ताए गेण्हंति तेसि णं भंते ! पोग्गलाणं सेयकालंसि कतिभागं आहारेंति कतिभागं निज्जरेंति ?, मागंदियपुत्ता ! असंखेज्जइभागं आहारेंति अणंतभागं निज्जरेंति, चक्किया णं भंते ! केइ तेसु निज्जरापोग्गलेसु आसइत्तए वा जाव तुयट्टित्तए वा ? णो तिणट्ठे समट्ठे अणाहरणमेयं वुइयं समणाउसो ! एवं जाव वेमाणियाणं । सेवं भंते ! सेवं भंतेति ॥ ( सूत्रं ६२२ ) ॥ १८—३ ॥

'नेरइए'त्यादि, 'सेयकालंसि'त्ति एष्यति काले ग्रहणानन्तरमित्यर्थः 'असंखेज्जइभागं आहारिंति'त्ति गृहीतपुद्गलानामसङ्ख्येयभागमाहारीकुर्वन्ति गृहीतानामेवानन्तभागं 'निर्जरयन्ति' मूत्रादिवत्त्यजन्ति, 'चक्किय'त्ति शक्नुयात् 'अणाहरणमेयं वुइयं'ति आध्रियतेऽनेनेत्याधरणं—आधारस्तन्निषेधोऽनाधरणं—आधर्त्तुमक्षमं एतन्निर्जरापुद्गलजातमुक्तं जिनैरिति ॥ अष्टादशशते तृतीयः ॥ १८—३ ॥

---

तृतीयोद्देशकस्यान्ते निर्जरापुद्गलानामासितुमित्यादिभिः पदैरर्थतः परिभोगो विचारितश्चतुर्थे तु प्राणातिपातादीनामसौ विचार्य्यत इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

तेणं कालेणं २ रायगिहे जाव भगवं गोयमे एवं वयासी—अह भंते ! पाणाइवाए मुसावाए जाव मिच्छादंसणसल्ले पाणाइवायवेरमणे मुसावाए जाव मिच्छादंसणसल्लवेरमणे पुढविक्काइए जाव वणस्सइकाइए धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवे असरीरपडिबद्धे परमाणुपोग्गले सेलेसिं पडिवन्नए अणगारे सव्वे य बायरबोंदिधरा कलेवरा एए णं दुविहा जीवदव्वा य अजीवदव्वा य जीवाणं भंते! परिभोगत्ताए हव्वमागच्छंति ?, गोयमा ! पाणाइवाए जाव एए णं दुविहा जीवदव्वा य अजीवदव्वा य अत्थेगतिया जीवाणं परिभोगत्ताए हव्वमागच्छंति अत्थेगतिया जीवाणं जाव नो हव्वमागच्छंति, से केणट्ठेणं भंते ! एवं वुच्चइ पाणाइवाए जाव नो हव्वमागच्छंति ?, गोयमा ! पाणाइवाए जाव मिच्छादंसणसल्ले पुढविकाइए जाव वणस्सइकाइए सव्वे य बायरबोंदिधरा कलेवरा एए णं दुविहा जीवदव्वा य अजीवदव्वा य, जीवाणं परिभोगत्ताए हव्वमागच्छंति, पाणाइवायवेरमणे जाव मिच्छादंसणसल्लविवेगे धम्मत्थिकाए अधम्मत्थिकाए जाव परमाणुपोग्गले सेलेसीं पडिवन्नए अणगारे एए णं दुविहा जीवदव्वा य अजीवदव्वा य जीवाणं परिभोगत्ताए नो हव्वमागच्छन्ति से तेणट्ठेणं जाव नो हव्वमागच्छंति ॥ ( सूत्रं ६२३ ) ॥ कति णं भंते ! कसाया पन्नत्ता ?, गोयमा ! चत्तारि कसाया प०, तं०—कसायपदं निरवसेस भाणियव्वं जाव निज्जरिस्संति लोभेणं ॥ कति णं भंते ! जुम्मा

पन्नत्ता ?, गोयमा ! चत्तारि जुम्मा पन्नत्ता—कडजुम्मे तेयोगे दावरजुम्मे कलिओगे, से केणट्ठेणं भंते ! एवं वुच्चइ जाव कलियोए ?, गोयमा ! जे णं रासीचउक्कएणं अवहारेणं अवहीरमाणे चउपज्जवसिए सेत्तं कडजुम्मे, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे तिपज्जवसिए सेत्तं तेयोए, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे दुपज्जवसिए सेत्तं दावरजुम्मे, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे एगपज्जवसिए सेत्तं कलिओगे, से तेणट्ठेणं गोयमा ! एवं वुच्चइ जाव कलिओए ॥ नेरइया णं भंते ! किं कडजुम्मा तेयोगा दावरजुम्मा कलियोगा ४ ?, गोयमा ! जहन्नपदे कडजुम्मा उक्कोसपदे तेयोगा अजहन्नुक्कोसपदे सिय कडजुम्मा १ जाव सिय कलियोगा ४, एवं जाव थणियकुमारा । वणस्सइकाइयाणं पुच्छा, गोयमा ! जहन्नपदे अपदा उक्कोसपदे य अपदा अजहन्नुक्कोसियपदे सिय कडजुम्मा जाव सिय कलियोगा । बेइंदिया णं पुच्छा, गोयमा ! जहन्नपदे कडजुम्मा उक्कोसपदे दावरजुम्मा, अजहन्नमणुक्कोसपदे सिय कडजुम्मा जाव सिय कलियोगा, एवं जाव चतुरिंदिया, सेसा एगिंदिया जहा बेंदिया, पंचिंदियतिरिक्खजोणिया जाव वेमाणिया जहा नेरइया, सिद्धा जहा वणस्सइकाइया । इत्थीओ णं भंते ! किं कडजुम्मा० ? पुच्छा, गोयमा ! जहन्नपदे कडजुम्माओ उक्कोसपदे सिय कडजुम्माओ अजहन्नमणुक्कोसपदे सिय कडजुम्माओ जाव सिय कलियोगाओ, एवं असुरकुमारित्थीओवि जाव थणियकुमारइत्थीओ, एवं तिरिक्खजोणियइत्थीओ एवं मणुसित्थीओ एवं जाव वाणमंतरजोइसियवेमाणियदेवित्थीओ ॥ (सूत्रं ६२४) जावतियाणं भंते ! वरा अंधगवण्हिणो जीवा तावतिया परा अंधगव-

ण्हिणो जीवा ?, हंता गोयमा ! जावतिया वरा अंधगवण्हिणो जीवा तावतिया परा अंधगवण्हिणो जीवा। सेवं भंते २ त्ति ॥ ( सूत्रं ६२५ ) ॥ १८-४ ॥

'तेण'मित्यादि, 'जीवे असरीरपडिबद्धे'त्ति त्यक्तसर्वशरीरो जीवः 'बायरबोंदिधरा कलेवर'त्ति स्थूलाकारधराणि न सूक्ष्माणि कडेवराणि-निश्चेतना देहाः अथवा 'बादरबोन्दिधराः'बादराकारधारिणः कडेवराव्यतिरेकात् कडेवराद्वीन्द्रियादयो जीवाः, 'एए ण'मित्यादि, एतानि प्राणातिपातादीनि सामान्यतो द्विविधानि न प्रत्येकं, तत्र पृथिवीकायादयो जीवद्रव्याणि, प्राणातिपातादयस्तु न जीवद्रव्याण्यपि तु तद्धर्म्मा इति न जीवद्रव्याण्यजीवद्रव्याणि धर्मास्तिकायादयस्तु अजीवरूपाणि द्रव्याणीतिकृत्वाऽजीवद्रव्याणीति जीवानां परिभोग्यत्वायागच्छन्ति, जीवैः परिभुज्यन्त इत्यर्थः, तत्र प्राणातिपातादीन् यदा करोति तदा तान् सेवते प्रवृत्तिरूपत्वात्तेषामित्येवं तत्परिभोगः अथवा चारित्रमोहनीयकर्म्मदलिकभोगहेतुत्वात्तेषां चारित्रमोहाणुभोगः प्राणातिपातादिपरिभोग उच्यते, पृथिव्यादीनां तु परिभोगो गमनशोचनादिभिः प्रतीत एव, प्राणातिपातविरमणादीनां तु न परिभोगोऽस्ति वधादिविरतिरूपत्वेन जीवस्वरूपत्वात्तेषां, धर्मास्तिकायादीनां तु चतुर्णाममूर्त्तत्वेन परमाणोः सूक्ष्मत्वेन शैलेशीप्रतिपन्नानगारस्य च प्रेषणाद्यविषयत्वेनानुपयोगित्वान्न परिभोग इति ॥ परिभोगश्च भावतः कषायवतामेव भवतीति कषायान् प्रज्ञापयितुमाह—'कइ ण'मित्यादि, 'कसायपदं'ति प्रज्ञापनायां चतुर्दशं, तच्चैवं-'कोहकसाए माणकसाए मायाकसाए लोभकसाए' इत्यादि 'निज्जरिस्संति लोभेणं'ति अस्यैवं सम्बन्धः—'वेमाणिया णं भंते ! कइहिं ठाणेहिं अट्ठ कम्मपयडीओ निज्जरिस्संति ?, गोयमा ! चउहिं ठाणेहिं, तंजहा-कोहेणं जाव

लोभेणं'ति, इह नारकादीनामष्टापि कर्माण्युदये वर्त्तन्ते, उदयवर्त्तिनां च तेषामवश्यं निर्जरणमस्ति, कषायोदयवर्त्तिनश्च ते ततश्च कषायोदये कर्मनिर्जराया भावात् क्रोधादिभिर्वैमानिकानामष्टकर्मप्रकृतिनिर्जरणमुच्यते इति॥ अनन्तरं कषाया निरूपिताः, ते च चतुःसङ्ख्यत्वात्कृतयुग्मलक्षणसङ्ख्याविशेषवाच्या इत्यतो युग्मस्वरूपप्रतिपादनायाह—'कइ ण'मित्यादि, 'चत्तारि जुम्म'त्ति इह गणितपरिभाषया समो राशिर्युग्ममुच्यते विषमस्त्वोज इति, तत्र च यद्यपीह द्वौ राशी युग्मशब्दवाच्यौ द्वौ चौजःशब्दवाच्यौ भवतस्तथाऽपीह युग्मशब्देन राशयो विवक्षिताः अतश्चत्वारि युग्मानि राशय इत्यर्थः, तत्र 'कडजुम्मे'त्ति कृतं—सिद्धं पूर्णं ततः परस्य राशिसञ्ज्ञान्तरस्याभावेन न त्वोजःप्रभृतिवदपूर्णं यद् युग्मं—समराशिविशेषस्तत्कृतयुग्मं, 'तेओए'त्ति त्रिभिरादित एव कृतयुग्माद्वोपरिवर्त्तिभिरोजो—विषमराशिविशेषस्त्र्योजः, 'दावरजुम्मे'त्ति द्वाभ्यामादित एव कृतयुग्माद्वोपरिवर्त्तिभ्यां यदपरं युग्मं कृतयुग्मादन्यत्तन्निपातनविधेर्द्वापरयुग्मं, 'कलिओए'त्ति कलिना—एकेन आदित एव कृतयुग्माद्वोपरिवर्त्तिना ओजो—विषमराशिविशेषः कल्योज इति। 'जे णं रासी'त्यादि, यो राशिश्चतुष्केनापहारेणापह्रियमाणश्चतुष्पर्यवसितो भवति स कृतयुग्ममित्यभिधीयते, यत्रापि राशौ चतूरूपत्वेन चतुष्कापहारो नास्ति सोऽपि चतुष्पर्यवसितत्वसद्भावात्कृतयुग्ममेव, एवमुत्तरपदेष्वपि ॥ अनन्तरं कृतयुग्मादिराशयः प्ररूपिताः, अथ तैरेव नारकादीन् प्ररूपयन्नाह—'नेरइया ण'मित्यादि 'जहन्नपदे कडजुम्म'त्ति अत्यन्तस्तोकत्वेन 'कृतयुग्माः' कृतयुग्मसञ्ज्ञिताः 'उक्कोसपए'त्ति सर्वोत्कृष्टतायां त्र्योजःसञ्ज्ञिताः मध्यमपदे चतुर्विधा अपि, एतच्चैवमाज्ञाप्रामाण्यादवगन्तव्यम्। 'वणस्सइकाइया ण'मित्यादि, वनस्पतिकायिका जघन्यपदे उत्कृष्टपदे चापदाः, जघन्यपदस्योत्कृष्टपदस्य च तेषामभावात्,

तथाहि—जघन्यपदमुत्कृष्टपदं च तदुच्यते यन्नियतरूपं तच्च यथा नारकादीनां कालान्तरेणापि लभ्यते न तथा वनस्पतीनां, तेषां परम्परया सिद्धिगमनेन तद्राशेरनन्तत्वापरित्यागेऽप्यनियतरूपत्वादिति, 'सिद्धा जहा वणस्सइकाइय'त्ति जघन्यपदे उत्कृष्टपदे चापदाः, अजघन्योत्कृष्टपदे च स्यात् कृतयुग्मादय इत्यर्थः, तत्र जघन्योत्कृष्टपदापेक्षयाऽपदत्वं वर्द्धमानतया तेषामनियतपरिमाणत्वाद्भावनीयमिति ॥ जीवपरिमाणाधिकारादिदमाह—'जावइए'त्यादि, यावन्तः 'वर'त्ति अर्वाग्भागवर्त्तिनः आयुष्कापेक्षयाऽल्पायुष्का इत्यर्थः 'अंधगवण्हिणो'त्ति अंह्रिपा—वृक्षास्तेषां वह्नयस्तदाश्रयत्वेनेत्यंह्रिपवह्नयो बादरतेजस्कायिका इत्यर्थः, अन्ये त्वाहुः—अन्धकाः—अप्रकाशकाः सूक्ष्मनामकर्मोदयाद्ये वह्नयस्तेऽन्धकवह्नयो जीवाः 'तावइय'त्ति तत्परिमाणाः 'पर'त्ति पराः प्रकृष्टाः स्थितितो दीर्घायुष इत्यर्थ इति प्रश्नः, 'हंते'त्याद्युत्तरमिति ॥ अष्टादशशते चतुर्थः ॥ १८-४ ॥

चतुर्थोद्देशकान्ते तेजस्कायिकवक्तव्यतोक्ता ते च भास्वरजीवा इति पञ्चमे भास्वरजीवविशेषवक्तव्यतोच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

दो भंते ! असुरकुमारा एगंसि असुरकुमारावासंसि असुरकुमारदेवत्ताए उववन्ना तत्थ णं एगे असुरकुमारे देवे पासादीए दरिसणिज्जे अभिरूवे पडिरूवे एगे असुरकुमारे देवे से णं नो पासादीए नो दरिसणिज्जे नो अभिरूवे नो पडिरूवे से कहमेयं भंते ! एवं ?, गोयमा ! असुरकुमारा देवा दुविहा प०, तं०—वेउव्वियसरीरा य अवेउव्वि-

यसरीरा य, तत्थ णं जे से वेउव्वियसरीरे असुरकुमारे देवे से णं पासादीए जाव पडिरूवे, तत्थ णं जे से अवेउव्वियसरीरे असुरकुमारे देवे से णं नो पासादीए जाव नो पडिरूवे, से केणट्ठेणं भंते ! एवं वुच्चइ तत्थ णं जे से वेउव्वियसरीरे तं चेव जावपडिरूवे ?, गोयमा ! से जहानामए–इहं मणुयलोगंसि दुवे पुरिसा भवंति–एगे पुरिसे अलंकियविभूसिए एगे पुरिसे अणलंकियविभूसिए, एएसि णं गोयमा ! दोण्हं पुरिसाणं कयरे पुरिसे पासादीए जाव पडिरूवे कयरे पुरिसे नो पासादीए जाव नो पडिरूवे जे वा से पुरिसे अलंकियविभूसिए जे वा से पुरिसे अणलंकियविभूसिए ?, भगवं ! तत्थ जे से पुरिसे अलंकियविभूसिए से णं पुरिसे पासादीए जाव पडिरूवे, तत्थ णं जे से पुरिसे अणलंकियविभूसिए से णं पुरिसे नो पासादीए जाव नो पडिरूवे से तेणट्ठेणं जाव नो पडिरूवे। दो भंते ! नागकुमारा देवा एगंसि नागकुमारावासंसि एवं चेव एवं जाव थणियकुमारा वाणमंतरजोतिसिया वेमाणिया एवं चेव ॥ ( सूत्रं ६२६ ) ॥

'दो भंते' इत्यादि 'वेउव्वियसरीर'त्ति विभूषितशरीराः ॥ अनन्तरमसुरकुमारादीनां विशेष उक्तः, अथ विशेषाधिकारादिदमाह—

दो भंते ! नेरतिया एगंसि नेरतियावासंसि नेरतियत्ताए उववन्ना, तत्थ णं एगे नेरइए महाकम्मतराए चेव जाव महावेयणतराए चेव एगे नेरइए अप्पकम्मतराए चेव जाव अप्पवेयणतराए चेव से कहमेयं भंते ! एवं ?, गोयमा ! नेरइया दुविहा प० तं०–मायिमिच्छादिट्ठिउववन्नगा य अमायिसम्मदिट्ठिउववन्नगा

य, तत्थ णं जे से मायिमिच्छादिट्ठिउववन्नए नेरइए से णं महाकम्मतराए चेव जाव महावेयणतराए चेव, तत्थ णं जे से अमायिसम्मदिट्ठिउववन्नए नेरइए से णं अप्पकम्मतराए चेव जाव अप्पवेयणतराए चेव, दो भंते ! असुरकुमारा एवं चेव एवं एगिंदियविगलिंदियवज्जं जाव वेमाणिया ॥ ( सूत्रं ६२७ ) ॥

'दो भंते ! नेरइए' त्यादि, 'महाकम्मतराए चेव'त्ति इह यावत्करणात् 'महाकिरियतराए चेव महासवतराए चेव'त्ति दृश्यं, व्याख्या चास्य प्राग्वत् । 'एगिंदियविगलिंदियवज्जं'ति इहैकेन्द्रियादिवर्जनमेतेषां मायिमिथ्यादृष्टित्वेनामायिसम्यग्दृष्टिविशेषणस्यायुज्यमानत्वादिति ॥ प्राग् नारकादिवक्तव्यतोक्ता ते चायुष्कप्रतिसंवेदनावन्त इति तेषां तां निरूपयन्नाह—

नेरइए णं भंते ! अणंतरं उव्वट्टित्ता जे भविए पंचिंदियतिरिक्खजोणिएसु उववज्जित्तए से णं भंते ! कयरं आउयं पडिसंवेदेति ?, गोयमा ! नेरइयाउयं पडिसंवेदेति पंचिंदियतिरिक्खजोणियाउए से पुरओ कडे चिट्ठति, एवं मणुस्सेसुवि, नवरं मणुस्साउए से पुरओ कडे चिट्ठइ । असुरकुमारा णं भंते ! अणंतरं उव्वट्टित्ता जे भविए पुढविकाइएसु उववज्जित्तए पुच्छा, गो० ! असुरकुमाराउयं पडिसंवेदेति पुढविकाइयाउए से पुरओ कडे चिट्ठइ, एवं जो जहिं भविओ उववज्जित्तए तस्स तं पुरओ कडं चिट्ठति, जत्थ ठिओ तं पडिसंवेदेति जाव वेमाणिए, नवरं पुढविकाइए पुढविकाइएसु उववज्जति पुढविकाइयाउयं पडिसंवेएति अन्ने य से पुढविकाइयाउए पुरओ कडे चिट्ठति एवं जाव मणुस्सो सट्ठाणे उववाएव्वो परट्ठाणे तहेव ॥ (सूत्रं ६२८) दो भंते ! असुरकुमारा

एगंसि असुरकुमारावासंसि असुरकुमारदेवत्ताए उववन्ना तत्थ णं एगे असुरकुमारे देवे उज्जुयं विउव्विस्सामीति उज्जुयं विउव्वइ वंकं विउव्विस्सामीति वंकं विउव्वइ जं जहा इच्छइ तं तहा विउव्वइ एगे असुरकुमारे देवे उज्जुयं विउव्विस्सामीति वंकं विउव्वइ वंकं विउव्विस्सामीति उज्जुयं विउव्वइ जं जहा इच्छति णो तं तहा विउव्वइ से कहमेयं भंते! एवं?, गोयमा! असुरकुमारा देवा दुविहा पं०, तं०—मायिमिच्छदिट्ठिउववन्नगा य अमायिसम्मदिट्ठीउववन्नगा य, तत्थ णं जे से मायिमिच्छादिट्ठिउववन्नए असुरकुमारे देवे से णं उज्जुयं विउव्विस्सामीति वंकं विउव्वति जाव णो तं तहा विउव्वइ, तत्थ णं जे से अमायिसम्मदिट्ठिउववन्नए असुरकुमारे देवे से उज्जुयं विउ० जाव तं तहा विउव्वइ। दो भंते! नागकुमारा एवं चेव एवं जाव थणिय० वाणमं० जोइसि० वेमाणिया एवं चेव ॥ सेवं भंते! २ त्ति ॥ (सूत्रं ६२९) ॥ १८-५ ॥

'नेरइए ण'मित्यादि, एतच्च व्यक्तमेव ॥ पूर्वमायुःप्रतिसंवेदनोक्ता, अथ तद्विशेषवक्तव्यतामाह—'दो भंते! असुरकुमारा'इत्यादि, यच्चेह मायिमिथ्यादृष्टीनामसुरकुमारादीनामृजुविकुर्वणेच्छायामपि वक्रविकुर्वणं भवति तन्मायामिथ्यात्वप्रत्ययकर्म्मप्रभावात्, अमायिसम्यग्दृष्टीनां तु यथेच्छं विकुर्वणा भवति तदार्जवोपेतसम्यक्त्वप्रत्ययकर्म्मवशादिति ॥ अष्टादशशते पञ्चमः ॥ १८-५ ॥

पञ्चमोद्देशकेऽसुरादीनां सचेतनानामनेकस्वभावतोक्ता, षष्ठे तु गुडादीनामचेतनानां सचेतनानां च सोच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

फाणियगुले णं भंते ! कतिवन्ने कतिगंधे कतिरसे कतिफासे पण्णत्ते ?, गोयमा ! एत्थ णं दो नया भवंति, तं०—निच्छइयनए य वावहारियनए य, वावहारियनयस्स गोड्डे फाणियगुले नेच्छइयनयस्स पंचवन्ने दुगंधे पंचरसे अट्ठफासे प० । भमरे णं भंते ! कतिवन्ने ? पुच्छा, गोयमा ! एत्थ णं दो नया भवंति, तं०—निच्छइयनए य वावहारियनए य, वावहारियनयस्स कालए भमरे नेच्छइयनयस्स पंचवन्ने जाव अट्ठफासे पं० । सुयपिच्छे णं भंते ! कतिवन्ने एवं चेव, नवरं वावहारियनयस्स नीलए सुयपिच्छे नेच्छइयनयस्स पंचवण्णे सेसं तं चेव, एवं एएणं अभिलावेणं लोहिया मंजिट्ठिया पीतिया हालिद्दा सुक्किल्लए संखे सुब्भिगंधे कोट्ठे दुब्भिगंधे मयगसरीरे तित्ते निंबे कडुया सुंठी कसाए कविट्ठे अंबा अंबिलिया महुरे खंडे कक्खडे वइरे मउए नवणीए गरुए अए लहुए उलुयपत्ते सीए हिमे उसिणे अगणिकाए णिद्धे तेल्ले, छारिया णं भंते ! पुच्छा, गोयमा ! एत्थ दो नया भवंति, तं०—निच्छइयनए य ववहारियनए य, ववहारियनयस्स लुक्खा छारिया नेच्छइयनयस्स पंचवन्ना जाव अट्ठफासा पन्नत्ता ( सूत्रं ६३० ) ॥

'फाणिए'त्यादि, 'फाणियगुले णं'ति द्रवगुडः 'गोड्डे'त्ति गौल्यं—गौल्यरसोपेतं मधुररसोपेतमितियावत्, व्यवहारो

हि लोकसंव्यवहारपरत्वात् तदेव तत्राभ्युपगच्छति शेपरसवर्णादींस्तु सतोऽप्युपेक्षत इति, 'निच्छइयनयस्स'त्ति नैश्चयिकनयस्य मतेन पञ्चवर्णादिपरमाणूनां तत्र विद्यमानत्वात् पञ्चवर्णादिरिति ॥

परमाणुपोग्गले णं भंते ! कतिवन्ने जाव कतिफासे पन्नत्ते ?, गोयमा ! एगवन्ने एगगंधे एगरसे दुफासे पन्नत्ते ॥ दुपएसिए णं भंते ! खंधे कतिवन्ने पुच्छा, गोयमा ! सिय एगवन्ने सिय दुवन्ने सिय एग गंधे सिय दुगंधे सिय एगरसे सिय दुरसे सिय दुफासे सिय तिफासे सिय चउफासे पन्नत्ते, एवं तिपएसिएवि, नवरं सिय एगवन्ने सिय दुवन्ने सिय तिवन्ने, एवं रसेसुवि, सेसं जहा दुपएसियस्स, एवं चउपएसिएवि नवरं सिय एगवन्ने जाव सिय चउवन्ने, एवं रसेसुवि सेसं तं चेव, एवं पंचपएसिएवि, नवरं सिय एगवन्ने जाव सिय पंचवन्ने, एवं रसेसुवि गंधफासा तहेव, जहा पंचपएसिओ एवं जाव असंखेज्जपएसिओ ॥ सुहुमपरिणए णं भंते ! अणंतपएसिए खंधे कतिवन्ने जहा पंचपएसिए तहेव निरवसेसं, बादरपरिणए णं भंते ! अणंतपएसिए खंधे कतिवन्ने पुच्छा, गोयमा ! सिय एगवन्ने जाव सिय पंचवन्ने सिय एगगंधे सिय दुगंधे सिय एगरसे जाव सिय पंचरसे सिय चउफासे जाव सिय अट्ठफासे प० ॥ सेवं भंते ! २ त्ति ॥ ( सूत्रं ६३१ ) ॥ १८–६ ॥

'परमाणुपोग्गले ण'मित्यादि, इह च वर्णगन्धरसेषु पञ्च द्वौ पञ्च च विकल्पाः 'दुफासे'त्ति स्निग्धरूक्षशीतोष्णस्पर्शानामन्यतराविरुद्धस्पर्शद्वययुक्त इत्यर्थः, इह च चत्वारो विकल्पाः शीतस्निग्धयोः शीतरूक्षयो उष्णस्निग्धयोः उष्णरूक्षयोश्च सम्बन्धादिति ॥ 'दुपएसिए ण'मित्यादि, 'सिय एगवन्ने'त्ति द्वयोरपि प्रदेशयोरेकवर्णत्वात्, इह च पञ्च विकल्पाः,

'सिय दुवन्ने'त्ति प्रतिप्रदेशं वर्णान्तरभावात्, इह च दश विकल्पाः, एवं गन्धादिष्वपि, 'सिय दुफासे'त्ति प्रदेशद्वयस्यापि शीतस्निग्धत्वादिभावात्, इहापि त एव चत्वारो विकल्पाः, 'सिय तिफासे'त्ति इह चत्वारो विकल्पास्तत्र प्रदेशद्वयस्यापि शीतभावात्, एकस्य च तत्र स्निग्धभावात् द्वितीयस्य च रूक्षभावादेकः, 'एवम्' अनेनैव न्यायेन प्रदेशद्वयस्योष्णभावाद्द्वितीयः, तथा प्रदेशद्वयस्यापि स्निग्धभावात् तत्र चैकस्य शीतभावादेकस्य चोष्णभावात्तृतीयः, 'एवम्' अनेनैव न्यायेन प्रदेशद्वयस्य रूक्षभावाच्चतुर्थ इति, 'सिय चउफासे'त्ति इह 'देसे सीए देसे उसिणे देसे निद्धे देसे लुक्खे'त्ति वक्ष्यमाणवचनादेकः, एवं त्रिप्रदेशादिष्वपि स्वयमभ्यूह्यम् ॥ 'सुहुमपरिणए णं'मित्यादि, अनन्तप्रदेशिको बादरपरिणामोऽपि स्कन्धो भवति द्व्यणुकादिस्तु सूक्ष्मपरिणाम एवेत्यनन्तप्रदेशिकस्कन्धः सूक्ष्मपरिणामत्वेन विशेषितस्तत्राद्याश्चत्वारः स्पर्शाः सूक्ष्मेषु बादरेषु चानन्तप्रदेशिकस्कन्धेषु भवन्ति, मृदुकठिनगुरुलघुस्पर्शास्तु बादरेष्वेवेति ॥ अष्टादशशते षष्ठः ॥ १८-६ ॥

षष्ठोद्देशके नयवादिमतमाश्रित्य वस्तु विचारितं, सप्तमे त्वन्ययूथिकमतमाश्रित्य तद्विचार्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—अन्नउत्थिया णं भंते ! एवमाइक्खंति जाव परूवेंति—एवं खलु, केवली जक्खाएसेणं आतिट्ठे समाणे आहच्च दो भासाओ भासति, तं०—मोसं वा सच्चामोसं वा, से कहमेयं भंते !

एवं ?, गोयमा ! जण्णं ते अन्नउत्थिया जाव जे ते एवमाहंसु मिच्छं ते एवमाहिंसु, अहं पुण गोयमा ! एवमाइक्खामि ४-नो खलु केवली जक्खाएसेणं आइस्सति, नो खलु केवली जक्खाएसेणं आतिट्ठे समाणे आहच्च दो भासाओ भासति तं०-मोसं वा सच्चामोसं वा, केवली णं असावज्जाओ अपरोवघाइयाओ आहच्च दो भासाओ भासति, तं०-सच्चं वा असच्चामोसं वा ॥ ( सूत्रं ६३२ ) ॥

'रायगिहे'इत्यादि, 'जक्खाएसेणं आइस्सइ'त्ति देवावेशेन 'आविश्यते' अधिष्ठीयत इति, 'नो खलु'इत्यादि, नो खलु केवली यक्षावेशेनाविश्यते अनन्तवीर्यत्वात्तस्य, 'अण्णातिट्ठे'त्ति अन्याविष्टः-परवशीकृतः ॥ सत्यादिभाषाद्वयं च भाषमाणः केवली उपधिपरिग्रहप्रणिधानादिकं विचित्रं वस्तु भाषत इति तद्दर्शनार्थमाह—

कतिविहे णं भंते ! उवही पण्णत्ते ?, गोयमा ! तिविहे उवही प०, तं०-कम्मोवही सरीरोवही बाहिरभंडमत्तोवगरणोवही, नेरइयाणं भंते ! पुच्छा, गोयमा ! दुविहे उवही प० तं०-कम्मोवही य सरीरोवही य, सेसाणं तिविहा उवही एगिंदियवज्जाणं जाव वेमाणियाणं, एगिंदियाणं दुविहे प० तंजहा-कम्मोवही य सरीरोवही य, कतिविहे णं भंते ! उवही पं ?, गो० तिविहे उवही प० तंजहा-सच्चित्ते अचित्ते मीसए, एवं नेरइयाणवि, एवं निरवसेसं जाव वेमाणियाणं । कतिविहे णं भंते ! परिग्गहे प० ?, गोयमा ! तिविहे परिग्गहे प०, तं०-कम्मपरिग्गहे सरीरपरिग्गहे बाहिरगभंडमत्तोवगरणपरिग्गहे, नेरइयाणं भंते ! एवं जहा उवहिणा दो दंडगा भणिया तहा परिग्गहेणवि दो दंडगा भाणियव्वा, [ ग्रन्थाग्रम् ११००० ] कइविहे णं

भंते ! पणिहाणे प० ?, गोयमा ! तिविहे पणिहाणे प०, तं०—मणपणिहाणे वइपणिहाणे कायपणिहाणे, नेरइयाणं भंते ! कइविहे पणिहाणे प०, एवं चेव एवं जाव थणियकुमाराणं, पुढविकाइयाणं पुच्छा, गोयमा ! एगे कायपणिहाणे प०, एवं जाव वणस्सइकाइयाणं, बेइंदियाणं पुच्छा, गोयमा ! दुविहे पणिहाणे प० तं—वइपणिहाणे य कायपणिहाणे य, एवं जाव चउरिंदियाणं, सेसाणं तिविहेवि जाव वेमाणियाणं। कतिविहे णं भंते ! दुप्पणिहाणे प० ?, गोयमा ! तिविहे दुप्पणिहाणे प०, तं०—मणदुप्पणिहाणे जहेव पणिहाणेणं दंडगो भणिओ तहेव दुप्पणिहाणेणवि भाणियव्वो। कतिविहे णं भंते ! सुप्पणिहाणे प० ?, गोयमा ! तिविहे सुप्पणिहाणे प०, तंजहा—मणसुप्पणिहाणे वइसुप्पणिहाणे कायसुप्पणिहाणे, मणुस्साणं भंते ! कइविहे सुप्पणिहाणे प० ? एवं चेव जाव वेमाणियाणं सेवं भंते २ जाव विहरति ॥ तए णं समणे भगवं महावीरे जाव बहिया जणवयविहारं विहरइ ॥ ( सूत्रं ६३३ ) ॥

'कतिविहे ण'मित्यादि, तत्र उपधीयते—उपष्टभ्यते येनात्माऽसावुपधिः, 'बाहिरभंडमत्तोवगरणोवही'ति बाह्ये—कर्म्मशरीरव्यतिरिक्ते ये भाण्डमात्रोपकरणे तद्रूपो य उपधिः स तथा, तत्र भाण्डमात्रा—भाजनरूपः परिच्छदः उपकरणं च—वस्त्रादीति, 'एगिंदियवज्जाणं'ति एकेन्द्रियाणां भाण्डमात्रादि नास्तीति तद्वर्जितानामन्येषां त्रिविधोऽप्यस्तीति। 'सच्चित्ते'त्यादि, सच्चित्तादिद्रव्याणि शरीरादीनि, 'एवं नेरइयाणवि'त्ति अनेनेदं सूचितं—'नेरइयाणं भंते ! कइविहे उवही प० ?, गोयमा ! तिविहे उवही प०, तंजहा—सच्चित्ते अचित्ते मीसए'त्ति तत्र नारकाणां सचित्त उपधिः—शरीरम्

अच्चित्त–उत्पत्तिस्थानं मिश्रस्तु–शरीरमेवोच्छ्वासादिपुद्गलयुक्तं तेषां सचेतनाचेतनत्वेन मिश्रत्वस्य विवक्षणादिति। 'परिग्गहे'त्ति परिगृह्यत इति परिग्रहः, अथैतस्योपधेश्च को भेदः ?, उच्यते, उपकारक उपधिः ममत्वबुद्ध्या परिगृह्यमाणस्तु परिग्रह इति। 'पणिहाणे'त्ति प्रकर्षेण नियते आलम्बने धानं–धरणं मनःप्रभृतेरिति प्रणिधानम् ॥ एषु च केवलिभाषितेष्वर्थेषु विप्रतिपद्यमानोऽहंमानी मानवो न्यायेन निरसनीय इत्येतत् चरितेन दर्शयन्नाह—

तेणं कालेणं २ रायगिहे नामं नगरे गुणसिलए चेइए वन्नओ जाव पुढविसिलापट्टओ, तस्स णं गुणसिलस्स चेइयस्स अदूरसामंते बहवे अन्नउत्थिया परिवसंति, तं०–कालोदायी सेलोदायी एवं जहा सत्तमसए अन्नउत्थिउद्देसए जाव से कहमेयं मन्ने एवं ?, तत्थ णं रायगिहे नगरे मद्दुए नामं समणोवासए परिवसति अड्ढे जाव अपरिभूए अभिगयजीवा जाव विहरति, तए णं समणे भगवं म० अन्नया कदायि पुव्वाणुपुव्विं चरमाणे जाव समोसढे परिसा पडिगया जाव पज्जुवासति, तए णं मद्दुए समणोवासए इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठजाव हियए ण्हाए जाव सरीरे सयाओ गिहाओ पडिनिक्खमति स० २ पादविहारचारेणं रायगिहं नगरं जाव निग्गच्छति नि० २ तेसिं अन्नउत्थियाणं अदूरसामंतेणं वीयीवयति, तए णं ते अन्नउत्थिया मद्दुयं समणोवासयं अदूरसामंतेणं वीयीवयमाणं पासंति २ अन्नमन्नं सद्दावेंति २ त्ता एवं वयासी–एवं खलु देवाणुप्पिया ! अम्हं इमा कहा अविउप्पकडा इमं च णं मद्दुए समणोवासए अम्हं अदूरसामंतेणं वीइवयइ तं सेयं खलु देवाणुप्पिया ! अम्हं मद्दुयं समणोवासयं एयमट्ठं पुच्छित्तएत्तिकट्टु अन्नमन्नस्स अंतियं

एयमट्ठं पडिसुणेंति अन्नमन्नस्स २त्ता जेणेव मद्दुए समणोवासए तेणेव उवा० २ मद्दुयं समणोवासयं एवं वदासी–एवं खलु मद्दुया ! तव धम्मायरिए धम्मोवदेसए समणे णायपुत्ते पंच अत्थिकाये पन्नवेइ जहा सत्तमे सए अन्नउत्थिउद्देसए जाव कहमेयं मद्दुया ! एवं ?, तए णं से मद्दुए समणोवासए ते अन्नउत्थिए एवं वयासी–जति कज्जं कज्जति जाणामो पासामो अहे कज्जं न कज्जति न जाणामो न पासामो, तए णं ते अन्नउत्थिया मद्दुयं समणोवासयं एवं वयासी—केस णं तुमं मद्दुया ! समणोवासगाणं भवसि जे णं तुमं एयमट्ठं न जाणसि न पाससि ?, तए णं से मद्दुए समणोवासए ते अन्नउत्थिए एवं वयासी—अत्थि णं आउसो ! वाउयाए वाति ?, हंता अत्थि, तुज्झे णं आउसो ! वाउयायस्स वायमाणस्स रूवं पासह ?, णो तिणट्ठे समट्ठे, अत्थि णं आउसो ! घाणसहगया पोग्गला ?, हंता अत्थि, तुज्झे णं आउसो ! घाणसहगयाणं पोग्गलाणं रूवं पासह ?, णो तिणट्ठे०, अत्थि णं भंते ! आउसो ! अरणिसहगये अगणिकाये ?, हंता अत्थि, तुज्झे णं आउसो ! अरणिसहगयस्स अगणिकायस्स रूवं पासह ?, णो ति०, अत्थि णं आउसो ! समुद्दस्स पारगयाइं रूवाइं ?, हंता अत्थि, तुज्झे णं आउसो ! समुद्दस्स पारगयाइं रूवाइं पासह ?, णो ति०, अत्थि णं आउसो ! देवलोगगयाइं रूवाइं ?, हंता अत्थि, तुज्झे णं आउसो ! देवलोगगयाइं रूवाइं पासह ?, णो ति०, एवामेव आउसो ! अहं वा तुज्झे वा अन्नो वा छउमत्थो जइ जो जं न जाणइ न पासइ तं सव्वं न भवति एवं ते सुबहुए लोए ण भविस्सतीतिकट्टु ते णं अन्नउत्थिए एवं पडिहणइ एवं प० २ जेणेव गुणसि० चेइए

जेणेव समणे भ० महा० तेणेव उवाग० २ समणं भगवं महावीरं पंचविहेणं अभिगमेणं जाव पज्जुवासति । मद्दुयादी ! समणे भ० महा० मद्दुयं समणोवासगं एवं वयासी–सुट्ठु णं मद्दुया ! तुमं ते अन्नउत्थिए एवं वयासी, साहू णं मद्दुया ! तुमं ते अन्नउ० एवं वयासी, जे णं मद्दुया ! अट्ठं वा हेउं वा पसिणं वा वागरणं वा अन्नायं अदिट्ठं अस्सुतं अमयं अविण्णायं बहुजणमज्झे आघवेति पन्नवेति जाव उवदंसेति से णं अरिहंताणं आसायणाए वट्टति अरिहंतपन्नत्तस्स धम्मस्स आसायणाए वट्टति केवलीणं आसायणाए वट्टति केवलिपन्नत्तस्स धम्मस्स आसायणाए वट्टति तं सुट्ठु णं तुमं मद्दुया ! ते अन्नउ० एवं वयासी साहू णं तुमं मद्दुया ! जाव एवं वयासी, तए णं मद्दुए समणोवासए समणेणं भग० महा० एवं वु० समाणे हट्ठ तुट्ठे समणं भ० महावीरं वं० न० २ णच्चासन्ने जाव पज्जुवासइ, तए णं सम० भ० म० मद्दुयस्स समणोवासगस्स तीसे य जाव परिसा पडिगया, तए णं मद्दु० समणस्स भ० म० जाव निसम्म हट्ठतुट्ठ पसिणाइं वागरणाइं पुच्छति प० २ अट्ठाइं परियातिइ २ उट्ठाए उट्ठे० २ समणं भगवं महा० वं० नमं० २ जाव पडिगए । भंतेत्ति भगवं गोयमे समणे भगवं महा० वं० नमं० २ एवं वयासी–पभू णं भंते ! मद्दुए समणोवासए देवाणुप्पियाणं अंतियं जाव पव्वइत्तए ?, णो तिणट्ठे समट्ठे, एवं जहेव संखे तहेव अरुणाभे जाव अंतं काहिति ॥ (सूत्रं ६३४) देवे णं भंते ! महड्ढिए जाव महेसक्खे रूवसहस्सं विउव्वित्ता पभू अन्नमन्नेणं सद्धिं संगामं संगामित्तए ?, हंता पभू । ताओ णं भंते ! बोंदीओ किं एगजीवफुडाओ अणेगजीवफुडाओ ?, गोयमा ! एगजीवफुडाओ णो अणेगजी-

यकुडाओ, तेसि णं भंते ! वोंदीणं अंतरा किं एगजीवफुडा अणेगजीवफुडा ?, गोयमा ! एगजीवफुडा नो अणेगजीवफुडा। पुरिसे णं भंते ! अंतरेणं हत्थेण वा एवं जहा अट्ठमसए तइए उद्देसए जाव नो खलु तत्थ सत्थं कमति ( सूत्रं ६३५ ) ॥ अत्थि णं भंते ! देवासुराणं संगामे २ ?, हंता अत्थि, देवासुरेसु णं भंते ! संगामेसु वट्टमाणेसु किन्नं तेसिं देवाणं पहरणरयणत्ताए परिणमति ?, गोयमा ! जन्नं ते देवा तणं वा कट्ठं वा पत्तं वा सक्करं वा परामुसंति तं तं तेसिं देवाणं पहरणरयणत्ताए परिणमति, जहेव देवाणं तहेव असुरकुमाराणं ?, णो तिणट्ठे समट्ठे, असुरकुमाराणं देवाणं निच्चं विउव्विया पहरणरयणा प० (सूत्रं ६३६)॥ देवे णं भंते ! महड्ढिए जाव महेसक्खे पभू लवणसमुद्दं अणुपरियट्टित्ताणं हव्वमागच्छित्तए ?, हंता पभू, देवे णं भंते ! महड्ढिए एवं धायइसंडं दीवं जाव हंता पभू, एवं जाव रुयगवरं दीवं जाव हंता पभू, ते णं परं वीतीवएज्जा नो चेव णं अणुपरियट्टेज्जा ( सूत्रं ६३७ ) ॥ अत्थि णं भंते ! देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससएहिं खवयंति ?, हंता अत्थि, अत्थि णं भंते ! देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससहस्सेहिं खवयंति ?, हंता अत्थि, अत्थि णं भंते ! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससयसहस्सेहिं खवयंति ?, हंता अत्थि, कयरेणं भंते ! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा जाव पंचहिं वाससएहिं खवयंति ?, कयरे णं भंते ! ते देवा जाव पंचहिं वाससहस्सेहिं खवयंति ?, कयरे णं भंते ! ते देवा जाव पंचहिं वास-

त्वं हे मद्दुका ! येन त्वयाऽस्तिकायानजानता न जानीम इत्युक्तम्, अन्यथा अजानन्नपि यदि जानीम इत्यभणिष्यस्तदाऽर्हे- दादीनामत्याशातनाकारकोऽभविष्यस्त्वमिति ॥ पूर्वं मद्दुकश्रमणोपासकोऽरुणाभे विमाने देवत्वेनोत्पत्स्यत इत्युक्तम्, अथ देवाधिकाराद्देववक्तव्यतामेवोद्देशकान्तं यावदाह—'देवे णं'मित्यादि, 'तासिं बोंदीणं अंतर'त्ति तेषां विकुर्वितशरीराणामन्तराणि 'एवं जहा अट्ठमसए'इत्यादि अनेन यत्सूचितं तदिदं–'पाएण वा हत्थेण वा अंगुलियाए वा सिलागाए वा कट्ठेण वा कलिंचेण वा आमुसमाणे वा आलिहमाणे वा विलिहमाणे वा अन्नयरेण वा तिक्खेणं सत्थजाएणं आछिंदमाणे वा विच्छिंदमाणे वा अगणिकाएण वा समोडहमाणे वा तेसिं जीवप्पएसाणं आवाहं वा वावाहं वा करेइ छविच्छेयं वा उप्पाएइ ?, णो इणट्ठे समट्ठे'त्ति व्याख्या चास्य प्राग्वत् । 'जन्नं देवा तणं वा कट्ठं वा' इत्यादि, इह च यद्देवानां तृणाद्यपि प्रहरणीभवति तदचिन्त्यपुण्यसम्भारवशात् सुभूमचक्रवर्त्तिनः स्थालमिव, असुराणां तु यन्नित्यविकुर्वितानि तानि भवन्ति तद्देवापेक्षया तेषां मन्दतरपुण्यत्वात्तथाविधपुरुषाणामिवेत्यवगन्तव्यमिति । 'वीतीवएज्ज'त्ति एकया दिशा व्यतिक्रमेत 'नो चेव णं अणुपरियट्टेज्ज'त्ति नैव सर्वतः परिभ्रमेत्, तथाविधप्रयोजनाभावादिति सम्भाव्यते । 'अत्थि णं भंते ! इत्यादि, इह देवानां पुण्यकर्म्मपुद्गलाः प्रकृष्टप्रकृष्टतरप्रकृष्टतमानुभागा आयुष्ककर्म्मसहचरिततया वेदनीया अनन्तानन्ता भवन्ति ततश्च सन्ति भदन्त ! ते देवा ये तेषामनन्तानन्तकर्मांशानां मध्यादनन्तान् कर्म्मांशान् जघन्येन कालस्याल्पतया एकादिना वर्षशतेन उत्कर्षतस्तु पञ्चभिर्वर्षशतैः क्षपयन्तीत्यादि प्रश्नः, 'गोयमे'त्याद्युत्तरं, तत्र व्यन्तरा अनन्तान् कर्म्मांशान् वर्षशतेनैकेन क्षपयन्ति अनन्तानामपि तदीयपुद्गलानामल्पानुभागतया स्तोकेनैव कालेन

क्षपयितुं शक्यत्वात् तथाविधाल्पस्नेहाहारवत्, तथा तावत एव कर्म्मांशान् असुरवर्जितभवनपतयो द्वाभ्यां वर्षशताभ्यां क्षपयन्ति, तदीयपुद्गलानां व्यन्तरपुद्गलापेक्षया प्रकृष्टानुभावेन बहुतरकालेन क्षपयितुं शक्यत्वात् स्निग्धतराहारवदिति, एवमुत्तरत्रापि भावना कार्येति ॥ अष्टादशशते सप्तमोद्देशकः ॥ १८-७ ॥

---

सप्तमोद्देशकान्ते कर्म्मक्षपणोक्ता, अष्टमे तु तद्बन्धो निरूप्यत इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी-अणगारस्स णं भंते ! भावियप्पणो पुरओ दुहओ जुगमायाए पेहाए रीयं रीयमाणस्स पायस्स अहे कुक्कुडपोते वा वट्टापोते वा कुलिंगच्छाए वा परियावज्जेज्जा तस्स णं भंते ! किं ईरियावहिया किरिया कज्जइ संपराइया किरिया कज्जइ ?, गोयमा ! अणगारस्स णं भावियप्पणो जाव तस्स णं ईरियावहिया किरिया कज्जइ नो संपराइया किरिया कज्जइ, से केणट्ठेणं भंते ! एवं वुच्चइ जहा सत्तमसए संवुडुद्देसए जाव अट्ठो निक्खित्तो । सेवं भंते सेवं भंते ! जाव विहरति ॥ तए णं समणे भगवं महावीरे बहिया जाव विहरति ( सूत्रं ६३९ ) ॥

'रायगिहे' इत्यादि, 'पुरओ'त्ति अग्रतः 'दुहओ'त्ति 'द्विधा' अन्तराऽन्तरा पार्श्वतः पृष्ठतश्चेत्यर्थः 'जुगमायाए'त्ति यूपमात्रया दृष्ट्या 'पेहाए'त्ति प्रेक्ष्य २ 'रीयं'ति गतं-गमनं 'रीयमाणस्स'त्ति कुर्वत इत्यर्थः 'कुक्कुडपोयए'त्ति कुक्कुटडिम्भः 'वट्टापोयए'त्ति इह वर्त्तका-पक्षिविशेषः 'कुलिंगच्छाए व'त्ति पिपीलिकादिसदृशः 'परियावज्जेज्ज'त्ति 'पर्यापद्येत'

मित्यादि, अवशेषं यथा सञ्ज्ञिनः प्रथमगमे औघिक इत्यर्थः निगमनवाक्यं चेदं-'अवसेसो चेव गमओ'त्ति अनेनैवै-तदर्थस्य गतत्वादिति, 'सो चेव जघन्नकाले'त्यादिस्तु सञ्ज्ञिविषये पञ्चमो गमः ५, इह च 'सो चेव'त्ति स एव सञ्ज्ञी जघन्यस्थितिकः, 'सो चेव उक्कोसे'त्यादिस्तु षष्ठः ६, 'उक्कोसकाले'त्यादिस्तु सप्तमः ७, तत्र च 'एएसिं चेव पढमगमो'-त्ति एतेषामेव सञ्ज्ञिनां प्रथमगमो यत्रौघिक औघिकेषूत्पादितः, 'नवरं'मित्यादि तत्र जघन्याऽप्यन्तर्मुहूर्त्तरूपा सञ्ज्ञिनः स्थितिरुक्ता सेह न वाच्येत्यर्थः, एवमनुबन्धोऽपि तद्रूपत्वात्तस्येति, 'सो चेवे'त्यादिरष्टमः ८, इह च 'सो चेव'त्ति स एवोत्कृष्टस्थितिकः सञ्ज्ञी ८, 'उक्कोसे'त्यादिर्नवमः ९, 'उक्खेवनिक्खेवओ'इत्यादि, तत्रोत्क्षेपः-[ ग्रन्थाग्रम् १६००० ] प्रस्तावना स च प्रतिगममौचित्येन स्वयमेव वाच्यः, निक्षेपस्तु-निगमनं सोऽप्येवमेवेति ॥ पर्याप्तकसङ्ख्यातवर्षायुष्कसञ्ज्ञि-पञ्चेन्द्रियतिर्यग्योनिकमाश्रित्य रत्नप्रभावक्तव्यतोक्ता, अथ तमेवाश्रित्य शर्कराप्रभावक्तव्यतोच्यते, तत्रौघिक औघि-केषु तावदुच्यते—

पज्जत्तसंखेज्जवासाउयसन्निपंचिंदियतिरिक्खजो० भंते ! जे भविए सक्करप्पभाए पुढवीए णेरइएसु उवव-ज्जित्तए से णं भंते ! केवइकालट्ठितीएसु उवव० ?, गोयमा ! जह० सागरोवमट्ठितीएसु उक्को० तिसागरो-वमट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा एगसमएणं एवं जहेव रयणप्पभाए उववज्जंतगमगस्स लद्धी सच्चेव निरवसेसा भा० जाव भवादेसोत्ति कालादेसेणं जहन्नेणं सागरोवमं अंतोमुहुत्तं अब्भहियं उक्कोसेणं बारससागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा १, एवं रयणप्पभपुढविगमसरिसा

णववि गमगा भाणियव्वा नवरं सव्वगमएसुवि नेरइयट्ठितीसंवेहेसु सागरोवमा भा० एवं जाव छट्ठीपुढवित्ति, णवरं नेरइयठिई जा जत्थ पुढवीए जहन्नुक्कोसिया सा तेणं चेव कमेण चउगुणा कायव्वा, वालुयप्पभाए पुढवीए अट्ठावीसं सागरोवमाइं चउगुणिया भवंति पंकप्प० चत्तालीसं धूमप्पभाए अट्ठसट्ठिं तमाए अट्ठासीइं संघयणाइं वालुयप्पभाए पंचविहसंघयणी तं०—वयरोसहनारायसंघयणी जाव खीलियासंघयणी पंकप्पभाए चउव्विहसंघयणी धूमप्पभाए तिविहसंघयणी तमाए दुविहसंघयणी तं०—वयरोसभनारायसंघयणी य १ उसभनारायसंघयणी २, सेसं तं चेव ॥ पज्जत्तसंखेज्जवासाउयजाव तिरिक्खजोणिए णं भंते ! जे भविए अहेसत्तमाए पुढवीए नेरइएसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं बावीसंसागरोवमट्ठितीएसु उक्कोसेणं तेत्तीसंसागरोवमट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा एवं जहेव रयणप्पभाए णव गमका लद्धीवि सच्चेव णवरं वयरोसभणारायसंघयणी इत्थिवेयगा न उववज्जंति सेसं तं चेव जाव अणुबंधोत्ति, संवेहो भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं सत्त भवग्गहणाइं कालादेसेणं जह० बावीसं सागरोवमाइं दोहिं अंतोमुहुत्तेहिं अब्भहियाइं उक्कोसे० छावट्ठिं सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा १, सो चेव जहन्नकालट्ठितीएसु उववन्नो सच्चेव वत्तव्वया जाव भवादेसोत्ति, कालादेसेणं जहन्नेणं कालादेसोवि तहेव जाव चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा २ सो चेव उक्कोसकालट्ठितीएसु उवव० सच्चेव लद्धी जाव अणुबंधोत्ति, भवादेसेणं जहन्नेणं तिन्नि

भवग्गहणाइं उक्कोसेणं पंच भवग्गहणाइं कालादे० जह० तेत्तीसं सागरोवमाइं दोहिं अंतोमुहुत्तेहिं अब्भ-
याइं उक्को० छावट्ठिं सागरोवमाइं तिहिं पुव्वकोडीहिं अब्भहियाइं एवतियं० सो चेव अप्पणा जहन्नकालट्ठि-
तीओ जाओ सच्चेव रयणप्पभपुढविजहन्नकालट्ठितीयवत्तव्वया भाणियव्वा जाव भवादेसोत्ति नवरं पढमसंघ-
यणं णो इत्थिवेयगा भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं सत्त भवग्गहणाइं कालादेसेणं जहन्नेणं
बावीसं सागरोवमाइं दोहिं अंतोमुहुत्तेहिं अब्भहियाइं उक्कोसेणं छावट्ठिं सागरोवमाइं चउहिं अंतोमुहु-
त्तेहिं अब्भहियाइं एवतियं जाव करेज्जा ४। सो चेव जहन्नकालट्ठितीएसु उववन्नो एवं सो चेव चउत्थो
गमओ निरवसेसो भाणियव्वो जाव कालादेसोत्ति ५। सो चेव उक्कोसकालट्ठितीएसु उववन्नो सच्चेव लद्धी
जाव अणुबंधोत्ति भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं पंच भवग्गहणाइं कालादेसेणं जहन्नेणं
तेत्तीसं सागरोवमाइं दोहिं अंतोमुहुत्तेहिं अब्भहियाइं उक्कोसेणं छावट्ठिं सागरोवमाइं तिहिं अंतोमुहुत्तेहिं
अब्भहियाइं एवइयं कालं जाव करेज्जा ६। सो चेव अप्पणा उक्कोसकालट्ठितीओ जहन्नेणं बावीससागरोव-
मट्ठिइएसु उक्कोसेणं तेत्तीससागरोवमट्ठितीएसु उववज्जेज्जा ते णं भंते ! अवसेसा सच्चेव सत्तमपुढविपढमगस-
वत्तव्वया भाणियव्वा जाव भवादेसोत्ति नवरं ठिती अणुबंधो य जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्वकोडी सेसं तं
चेव कालादेसेणं जहन्नेणं बावीसं सागरोवमाइं दोहिं पुव्वकोडीहिं अब्भहियाइं उक्कोसेणं छावट्ठिं सागरोवमाइं
चउहिं पुव्वकोडीहिं अब्भहियाइं एवइयं जाव करेज्जा ७। सो चेव जहन्नकालट्ठितीएसु उववन्नो सच्चेव लद्धी

संवेहोवि तहेव सत्तमगमगसरिसो ८। सो चेव उक्कोसकालट्ठितीएसु उववन्नो एस चेव लद्धी जाव अणुबंधोत्ति भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं पंच भवग्गहणाइं कालादेसेणं जहन्नेणं तेत्तीससागरोवमाइं दोहिं पुव्वकोडीहिं अब्भहियाइं उक्कोसेण छावट्ठिं सागरोवमाइं तिहिं पुव्वकोडीहिं अब्भहियाइं एवतियं कालं सेवेज्जा जाव करेज्जा ( सूत्रं ६९५ )॥

'पज्जत्ते'त्यादि, 'लद्धी सच्चेव निरवसेसा भाणियव्वा' परिमाणसंहननादीनां प्राप्तिर्यैव रत्नप्रभायामुत्पित्सोरुक्ता सैव निरवशेषा शर्कराप्रभायामपि भणितव्येति, 'सागरोवमं अंतोमुहुत्तमब्भहियं'ति द्वितीयायां जघन्या स्थितिः सागरोपममन्तर्मुहूर्त्तं च सञ्ज्ञिभवसत्कमिति, 'उक्कोसेणं बारसे'त्यादि द्वितीयायामुत्कृष्टतः सागरोपमत्रयं स्थितिः तस्याश्चतुर्गुणत्वे द्वादश, एवं पूर्वकोटयोऽपि चतुर्षु सञ्ज्ञितिर्यग्भवेषु चतस्र एवेति। 'नेरइयठिइसंवेहेसु सागरोवमा भाणियव्व'त्ति रत्नप्रभायामायुर्द्वारे संवेधद्वारे च दशवर्षसहस्राणि सागरोपमं चोक्तं द्वितीयादिषु पुनर्जघन्यत उत्कर्षतश्च सागरोपमाण्येव वाच्यानि, यतः—"सागरमेगं १ तिय २ सत्त ३ दस ४ य सत्तरस ५ तह य बावीसा ६। तेत्तीसा ७ जावठिई सत्तसुवि कमेण पुढवीसु ॥ १ ॥" तथा—"जा पढमाए जेट्ठा सा बीयाए कणिट्ठिया भणिया। तरतमजोगो एसो दसवाससहस्स रयणाए ॥ २ ॥" इति [ एकं सागरं त्रीणि सप्त दश च सप्तदश तथैव द्वाविंशतिः। त्रयस्त्रिंशत् सप्तस्वपि पृथ्वीषु क्रमेण यावत्स्थितिः ॥ १ ॥ या प्रथमायां ज्येष्ठा सा द्वितीयायां कनीयसी भणिता। एप तरतमयोगो रत्नायां दशवर्षसहस्राणि ॥ २ ॥ ] रत्नप्रभागमतुल्या नवापि गमाः, कियद्दूरं यावत्? इत्याह—'जाव छट्ठपुढवि'त्ति, 'चउगुणा कायव्व'त्ति उत्कृष्टे

कायसंवेधे इति, 'वालुयप्पभाए अट्ठावीसं,' तत्र सप्त सागरोपमाण्युत्कर्षतः स्थितिरुक्ता सा च चतुर्गुणा अष्टाविंशतिः स्यात्, एवमुत्तरत्रापीति, 'वालुयप्पभाए पंचविहसंघयणि'त्ति आद्ययोरेव हि पृथिव्योः सेवार्त्तेनोत्पद्यन्ते, एवं चतुर्थी ४ पञ्चमी ३ पष्ठी २ सप्तमीषु १ एकैकं संहननं हीयत इति ॥ अथ सप्तमपृथिवीमाश्रित्याह—'पज्जत्ते'त्यादि, 'इत्थिवेया न उववज्जंति'त्ति षष्ठ्यन्तास्वेव पृथिवीषु स्त्रीणामुत्पत्तेः 'जहन्नेणं तिन्नि भवग्गहणाइं' ति मत्स्यस्य सप्तमपृथिवीनारकत्वेनोत्पद्य पुनर्मत्स्येष्वेवोत्पत्तौ 'उक्कोसेणं सत्त भवग्गहणाइं'ति मत्स्यो मृत्वा १ सप्तम्यां गतः २ पुनर्मत्स्यो जातः ३ पुनः सप्तम्यां गतः ४ पुनरपि मत्स्यः ५ पुनरपि तथैव गतः ६ पुनर्मत्स्यः ७ इत्येवमिति । 'कालादेसेण'मित्यादि, इह द्वाविंशतिः सागरोपमाणि जघन्यस्थितिकसप्तमपृथ्वीनारकसम्बन्धीनि अन्तर्मुहूर्त्तद्वयं च प्रथमतृतीयमत्स्यभवसम्बन्धीति, 'छावट्ठिं सागरोवमाइं'ति वारत्रयं सप्तम्यां द्वाविंशतिसागरोपमायुष्कतयोत्पत्तेः चतस्रश्च पूर्वकोटयश्चतुर्षु नारकभवान्तरितेषु मत्स्यभवेष्विति, अतो वचनाच्चैतदवसीयते—सप्तम्यां जघन्यस्थितिषूत्कर्षतस्त्रीनेव वारानुत्पद्यत इति, कथमन्यथैवंविधं भवग्रहणकालपरिमाणं स्यात्, इह च काल उत्कृष्टो विवक्षितस्तेन जघन्यस्थितिषु त्रीन् वारानुत्पादितः, एवं हि चतुर्थी पूर्वकोटिर्लभ्यते, उत्कृष्टस्थितिषु पुनर्वारद्वयोत्पादनेन षट्षष्टिः सागरोपमाणां भवन्ति पूर्वकोट्यः पुनस्तिस्र एवेति १ 'सो चेव जहन्नकालट्ठिइएसु' इत्यादिस्तु द्वितीयो गमः २ 'सो चेव उक्कोसकालट्ठिईएसु उववण्णो' इत्यादिस्तु तृतीयः, तत्र च 'उक्कोसेणं पंच भवग्गहणाइं'ति त्रीणि मत्स्यभवग्रहणानि द्वे च नारकभवग्रहणे, अत एव वचनादुत्कृष्टस्थितिषु सप्तम्यां वारद्वयमेवोत्पद्यत इत्यवसीयते ३ 'सो चेव जहन्नकालट्ठि-

ईओ'इत्यादिस्तु चतुर्थः ४ तत्र च 'सच्चेव रयणप्पभपुढविजहन्नकालट्ठिइवत्तव्वया भाणियव्व'त्ति सैव रत्नप्रभाचतुर्थ-गमवक्तव्यता भणितव्या नवरं–केवलमयं विशेषः, तत्र रत्नप्रभायां षट् संहननानि त्रयश्च वेदा उक्ताः इह तु सप्तमपृथिवी-चतुर्थगमे प्रथममेव संहननं स्त्रीवेदनिषेधश्च वाच्य इति ४, शेषगमास्तु स्वयमेव ऊह्याः ॥ मनुष्याधिकारे—

जइ मणुस्सेहिंतो उववज्जंति किं सन्निमणुस्सेहिंतो उववज्जंति असन्निमणुस्सेहिंतो उववज्जंति ?, गोयमा ! सन्निमणुस्सेहिंतो उववज्जंति णो असन्नीमणुस्सेहिंतो उववज्जंति, जइ सन्निमणुस्सेहिंतो उववज्जन्ति किं संखेज्ज-वासाउयसन्निमणुस्सेहिंतो उवव० असंखेज्जवा० जाव उवव० ?, गोयमा ! संखेज्जवासाउयसन्निमणु० णो असंखेज्जवासाउयजाव उववज्जन्ति, जइ संखेज्जवासा जाव उववज्जन्ति किं पज्जत्तसंखेज्जवासाउय० अपज्जत्तसं-खेज्जवासाउय० ?, गोयमा ! पज्जत्तसंखेज्जवासाउय० नो अपज्जत्तसंखेज्जवासाउय जाव उववज्जंति, पज्जत्तसंखे-ज्जवासाउय० सन्निमणुस्से णं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! कति पुढवीसु उववज्जेज्जा ?, गोयमा ! सत्तसु पुढवीसु उववज्जेज्जा तं०–रयणप्पभाए जाव अहेसत्तमाए, पज्जत्तासंखेज्जवासाउयसन्निमणुस्से णं भंते ! जे भविए रयणप्पभाए पुढवीए नेरइएसु उववज्जित्तए से णं भंते ! केवतिकालट्ठिइएसु उववज्जेज्जा ?, गोयमा ! जह० दसवाससहस्सट्ठितीएसु उक्कोसेणं सागरोवमट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा एगस-मएणं केवइया उववज्जंति ?, गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा उववज्जंति संघ-यणा छ सरीरोगाहणा जहन्नेणं अंगुलपुहुत्तं उक्कोसेणं पंचधणुसयाइं एवं सेसं जहा सन्निपंचिंदियतिरिक्ख-

जोणियाणं जाव भवादेसोत्ति नवरं चत्तारि णाणा तिन्नि अन्नाणा भयणाए छ समुग्घाया केवलिवज्जा ठिती अणुबंधो य जहन्नेणं मासपुहुत्तं उक्कोसेणं पुव्वकोडी सेसं तं चेव कालादेसेणं जहन्नेणं दसवाससहस्साइं मासपुहुत्तमब्भहियाइं उक्कोसेणं चत्तारि सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा १, सो चेव जहन्नकालट्ठितीएसु उववन्नो सा चेव वत्तव्वया नवरं कालादेसेणं जहन्नेणं दसवाससहस्साइं मास-पुहुत्तमब्भहियाइं उक्कोसेणं चत्तारि पुव्वकोडीओ चत्तालीसाए वाससहस्सेहिं अब्भहियाओ एवतियं २, सो चेव उक्कोसकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं कालादेसेणं जहन्नेणं सागरोवमं मासपुहुत्तमब्भ-हियं उक्कोसेणं चत्तारि सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ एस चेव वत्तव्वया नवरं इमाइं पंच नाणत्ताइं सरीरोगाहणा जहन्नेणं अंगुलपुहुत्तं उक्कोसेणवि अंगुलपुहत्तं तिन्नि नाणा तिन्नि अन्नाणाइं भयणाए पंच समुग्घाया आदिल्ला ठिती अणुबंधो य जहन्नेणं मासपुहुत्तं उक्कोसेणवि मासपुहुत्तं सेसं तं चेव जाव भवादेसोत्ति, कालादेसेणं जहन्नेणं दसवाससहस्साइं मासपुहुत्तमब्भहियाइं उक्कोसेणं चत्तारि सागरोवमाइं चउहिं मासपुहत्तेहिं अब्भहियाइं एवतियं जाव करेज्जा ४। सो चेव जहन्नकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया चउत्थगमगसरिसा णेयव्वा नवरं कालादेसेणं जहन्नेणं दसवाससहस्साइं मासपुहुत्तमब्भहियाइं उक्कोसेणं चत्तालीसं वाससहस्साइं चउहिं

मासपुहुत्तेहिं अब्भहियाइं एवतियं जाव करेज्जा ५। सो चेव उक्कोसकालट्ठितीएसु उववन्नो एस चेव गमगो नवरं कालादेसेणं जहन्नेणं सागरोवमं मासपुहुत्तमब्भहियं उक्कोसेणं चत्तारि सागरोवमाइं चउहिं मासपुहुत्तेहिं अब्भहियाइं एवइयं जाव करेज्जा ६। सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ सो चेव पढमगमओ णेयव्वो नवरं सरीरोगाहणा जहन्नेणं पंचधणुसयाइं उक्कोसेणवि पंचधणुसयाइं ठिती जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्वकोडी एवं अणुबंधोवि, कालादेसेणं जहन्नेणं पुव्वकोडी दसहिं वाससहस्सेहिं अब्भहिया उक्कोसेणं चत्तारि सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं कालं जाव करेज्जा ७। सो चेव जहन्नकालट्ठितीएसु उववन्नो सच्चेव सत्तमगमगवत्तव्वया नवरं कालादेसेणं जहन्नेणं पुव्वकोडी दसहिं वाससहस्सेहिं अब्भहिया उक्कोसेणं चत्तारि पुव्वकोडीओ चत्तालीसाए वाससहस्सेहिं अब्भहियाओ एवतियं कालं जाव करेज्जा ८। सो चेव उक्कोसकालट्ठितीएसु उववन्नो सा चेव सत्तमगमगवत्तव्वया नवरं कालादेसेणं जहन्नेणं सागरोवमं पुव्वकोडीए अब्भहियं उक्कोसेणं चत्तारि सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं कालं जाव करेज्जा ९॥ ( सूत्रं ६९६ )॥ पज्जत्तसंखेज्जवासाउयसन्निमणुस्से णं भंते! जे भविए सक्करप्पभाए पुढवीए नेरइएसु जाव उववज्जित्तए से णं भंते! केवतिं जाव उववज्जेज्जा?, गोयमा! जहन्नेणं सागरोवमट्ठितीएसु उक्कोसेणं तिसागरोवमट्ठितीएसु उववज्जेज्जा, ते णं भंते! सो चेव रयणप्पभपुढविगमओ णेयव्वो नवरं सरीरोगाहणा जहन्नेणं रयणिपुहुत्तं उक्कोसेणं पंचधणुसयाइं ठिती जहन्नेणं वासपुहुत्तं उक्कोसेणं पुव्वको-

डी एवं अणुबंधोवि, सेसं तं चेव जाव भवादेसोत्ति, कालादेसेणं जहन्नेणं सागरोवमं वासपुहत्तंअब्भहियं उक्कोसेणं बारस सागरोवमाइं चउहिं पुव्वकोडीहिं अब्भहियाइं एवतियं जाव करेज्जा १, एवं एसा ओहिएसु तिसु गमएसु मणूसस्स लद्धी नाणत्तं नेरइयट्ठिती कालादेसेणं संवेहं च जाणेज्जा ३, से चेव अप्पणा जहन्न-कालट्ठितीओ जाओ तिसुवि गमएसु एस चेव लद्धी नवरं सरीरोगाहणा जहन्नेणं रयणिपुहुत्तं उक्कोसेणवि रयणिपुहुत्तं ठिती जहन्नेणं वासपुहुत्तं उक्कोसेणवि वासपुहुत्तं एवं अणुबंधोवि सेसं जहा ओहियाणं संवेहो सव्वो उवजुंजिऊण भाणियव्वो ४-५-६, सो चेव अप्पणा उक्कोसकालट्ठितीओ तस्सवि तिसुवि गमएसु इमं णाणत्तं-सरीरोगाहणा जहन्नेणं पंचधणुसयाइं उक्कोसेणवि पंचधणुसयाइं ठिती जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्व-कोडी एवं अणुबंधोवि सेसं जहा पढमगमए नवरं नेरइयठिईं य कायसंवेहं च जाणेज्जा ९ एवं जाव छट्ठपुढवी नवरं तच्चाए आढवेत्ता एक्केक्कं संघयणं परिहायति जहेव तिरिक्खजोणियाणं कालादेसोवि तहेव नवरं मणुस्सट्ठिती भाणियव्वा ॥ पज्जत्तसंखेज्जवासाउयसन्निमणुस्से णं भंते ! जे भविए अहेसत्तमाए पुढविनेरइएसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं बावीसं सागरोवमठितीएसु उक्कोसेणं तेत्तीसं सागरोवमट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा एगसमएणं अवसेसो सो चेव सक्करप्पभापुढवि-गमओ णेयव्वो नवरं पढमं संघयणं इत्थिवेयगा न उववज्जंति सेसं तं चेव जाव अणुबंधोत्ति भवादेसेणं दो

भवग्गहणाइं कालादेसेणं जहन्नेणं बावीसं सागरोवमाइं वासपुहुत्तमब्भहियाइं उक्कोसेणं तेत्तीसं सागरोवमाइं पुव्वकोडीए अब्भहियाइं एवतियं जाव करेज्जा १, सो चेव जहन्नकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं नेरइयट्ठितिंसंवेहं च जाणेज्जा २, सो चेव उक्कोसकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं संवेहं च जाणेज्जा ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ तस्सवि तिसुवि गमएसु एस चेव वत्तव्वया नवरं सरीरोगाहणा जहन्नेणं रयणिपुहुत्तं उक्कोसेणवि रयणिपुहुत्तं ठिती जहन्नेणं वासपुहुत्तं उक्कोसेणवि वासपुहुत्तं एवं अणुबंधोवि संवेहो उवजुंजिऊण भाणियव्वो ६। सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ तस्सवि तिसुवि गमएसु एस चेव वत्तव्वया नवरं सरीरोगाहणा जहन्नेणं पंचधणुसयाइं उक्कोसेणवि पंचधणुसयाइं ठिती जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्वकोडी एवं अणुबंधोवि णवसुवि एतेसु गमएसु नेरइयट्ठिती संवेहं च जाणेज्जा सव्वत्थ भवग्गहणाइं दोन्नि जाव णवमगमए कालादेसेणं जहन्नेणं तेत्तीसं सागरोवमाइं पुव्वकोडीए अब्भहियाइं उक्कोसेणवि तेत्तीसं सागरोवमाइं पुव्वकोडीए अब्भहियाइं एवतियं कालं सेवेज्जा एवतियं कालं गतिरागतिं करेज्जा ९। सेवं भंतेत्ति जाव विहरति ॥ चउवीसतिमसए पढमो ( सूत्रं ६९७ ) ॥ २४-१ ॥

'उक्कोसेणं संखेज्जा उववज्जंति'त्ति गर्भजमनुष्याणां सदैव सङ्ख्यातानामेवास्तित्वादिति, 'नवरं चत्तारि नाणाइं'ति अवध्यादौ प्रतिपतिते सति केषाञ्चिन्नारकेषूत्पत्तेः, आह च चूर्णिकारः—'ओहिनाणमणपज्जवआहारयसरीराणि लद्धणं परि-

साडित्ता उववज्जंति'त्ति, 'जहन्नेणं मासपुहुत्तं'ति, इदमुक्तं भवति—मासद्वयान्तर्वर्त्त्यायुर्नरो नरकं न याति 'दसवाससहस्साइं'ति जघन्यं नारकायुः 'मासपुहुत्तमब्भहियाइं'ति इह मासपृथक्त्वं जघन्यं नरकयायिमनुष्यायुः 'चत्तारि सागरोवमाइं'ति उत्कृष्टं रत्नप्रभानारकभवचतुष्कायुः 'चउहिं पुव्वकोडीहिं अब्भहियाइं'ति, इह चतस्रः पूर्वकोटयो नरकयायिमनुष्यभवचतुष्कोत्कृष्टायुःसम्बन्धिन्यः, अनेन चेदमुक्तं—मनुष्यो भूत्वा चतुर एव वारानेकस्यां पृथिव्यां नारको जायते पुनश्च तिर्यगेव भवतीति, जघन्यकालस्थितिक औघिकेष्वित्यत्र चतुर्थे गमे 'इमाइं पंच णाणत्ताइं'इत्यादि शरीरावगाहनेह जघन्येतराभ्यामङ्गुलपृथक्त्वं, प्रथमगमे तु सा जघन्यतोऽङ्गुलपृथक्त्वमुत्कृष्टतस्तु पञ्च धनुःशतानीति १ तथेह त्रीणि ज्ञानानि त्रीण्यज्ञानानि भजनया जघन्यस्थितिकस्यैषामेव भावात्, पूर्वं च चत्वारि ज्ञानान्युक्तानीति २ तथेहाद्याः पञ्च समुद्घाताः जघन्यस्थितिकस्यैषामेव सम्भवात् प्राक् च षडुक्ताः अजघन्यस्थितिकस्याहारकसमुद्घातस्यापि सम्भवात् ३ तथेह स्थितिरनुबन्धश्च जघन्यत उत्कृष्टतश्च मासपृथक्त्वं प्राक् च स्थित्यनुबन्धो जघन्यतो मासपृथक्त्वमुत्कृष्टतस्तु पूर्वकोट्यभिहितेति, शेषगमास्तु स्वयमभ्यूह्याः ॥ शर्कराप्रभावक्तव्यतायाम्—'सरीरोगाहणा रयणिपुहुत्तं'ति अनेनेदमवसीयते—द्विहस्तप्रमाणेभ्यो हीनतरप्रमाणा द्वितीयायां नोत्पद्यन्ते, तथा 'जहण्णेणं वासपुहुत्तं'ति अनेनापि वर्षद्वयायुष्केभ्यो हीनतरायुष्का द्वितीयायां नोत्पद्यन्त इत्यवसीयते, 'एवं एसा ओहिएसु तिसु गमएसु मणूसस्स लद्धी'ति 'ओहिओ

१ यद्यपि सामान्येन गर्भस्थस्य नरकगतावुत्पाद उभयसाधारणस्तथापि नारकमनुष्यनारकसंवेधेऽन्तर्मुहूर्तमानान्तरकालोक्तेः जातु नारकभवचतुष्कसंवेधकारकमनुष्योऽत्रैवंविधः स्यात् इति समाधेयं ।

ओहिएसु १ ओहिओ जहन्नट्ठितीएसु २ ओहिओ उक्कोसट्ठिईएसु ३'त्ति एते औघिकास्त्रयो गमाः ३, एतेषु 'एषा' अनन्तरोक्ता मनुष्यस्य 'लब्धिः' परिमाणसंहननादिप्राप्तिः, नानात्वं त्विदम्—यदुत नारकस्थितिं कालादेशेन कायसंवेधं च जानीयाः, तत्र प्रथमगमे स्थित्यादिकं लिखितमेव द्वितीये त्वौघिको जघन्यस्थितिष्वित्यत्र नारकस्थितिर्जघन्येतराभ्यां सागरोपमं कालतस्तु संवेधो जघन्यतो वर्षपृथक्त्वाधिकं सागरोपममुत्कृष्टतस्तु सागरोपमचतुष्टयं चतुःपूर्वकोट्यधिकं, तृतीयेऽप्येवमेव नवरं सागरोपमस्थाने जघन्यतः सागरोपमत्रयं सागरोपमचतुष्टयस्थाने तूत्कर्षतः सागरोपमद्वादशकं वाच्यमिति, 'सो चेवे'त्यादि चतुर्थादिगमत्रयं, तत्र च 'संवेहो उवजुज्जिऊण भाणियव्वो'त्ति, स चैवं—जघन्यस्थितिक औघिकेष्वित्यत्र गमे संवेधः कालादेशेन जघन्यतः सागरोपमं वर्षपृथक्त्वाधिकं उत्कृष्टतस्तु द्वादश सागरोपमाणि वर्षपृथक्त्वचतुष्काधिकानि, जघन्यस्थितिको जघन्यस्थितिकेष्वित्यत्र जघन्येन कालतः कायसंवेधः सागरोपमं वर्षपृथक्त्वाधिकं उत्कृष्टतस्तु चत्वारि सागरोपमाणि वर्षपृथक्त्वचतुष्काधिकानि, एवं षष्ठगमोऽप्यूह्यः, 'सो चेवे'त्यादि सप्तमादिगमत्रयं, तत्र च 'इमं नाणत्त'मित्यादि, शरीरावगाहना पूर्वं हस्तपृथक्त्वं धनुःशतपञ्चकं चोक्ता इह तु धनुःशतपञ्चकमेव, एवमन्यदपि नानात्वमभ्यूह्यम् । 'मणुस्सठिई जाणियव्व'त्ति तिर्यक्स्थितिर्जघन्याऽन्तर्मुहूर्त्तमुक्ता मनुष्यगमेषु तु मनुष्यस्थितिर्ज्ञातव्या सा च जघन्या द्वितीयादिगामिनां वर्षपृथक्त्वमुत्कृष्टा तु पूर्वकोटीति ॥ सप्तमपृथिवीप्रथमगमे 'तेत्तीसं सागरोवमाइं पुव्वकोडीए अब्भहियाइं'ति इहोत्कृष्टः कायसंवेध एतावन्तमेव कालं भवति सप्तमपृथिवीनारकस्य तत उद्वृत्तस्य मनुष्येष्वनुत्पादेन भवद्वयभावेनैतावत एव कालस्य भावादिति ॥ चतुर्विंशतितमशते प्रथमः ॥ २४—१ ॥

व्याख्यातः प्रथमोद्देशकः अथ द्वितीयो व्याख्यायते, सम्बन्धस्तु जीवपदे इत्यादिपूर्वोक्तगाथानिदर्शित एव, एवं सर्वोद्देशकेष्वपि, अस्य चेदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—असुरकुमारा णं भंते ! कओहिंतो उववज्जंति किं नेरइएहिंतो उवव० तिरि० मणु० देवेहिंतो उववज्जंति ?, गोयमा ! णो णेरइएहिंतो उवव० तिरि० मणुस्सेहिंतो उवव० नो देवेहिंतो उवव० एवं जहेव नेरइयउद्देसए जाव पज्जत्तअसन्निपंचिंदितिरिक्खजोणिए णं भंते ! जे भविए असुरकुमारेसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं दसवाससहस्सट्ठितीएसु उक्कोसेणं पलिओवमस्स असंखेज्जइभागट्ठितीएसु उवव०, ते णं भंते ! जीवा एवं रयणप्पभागमगसरिसा णववि गमा भाणियव्वा नवरं जाहे अप्पणा जहन्नकालट्ठितीओ भवति ताहे अज्झवसाणा पसत्था णो अप्पसत्था तिसुवि गमएसु अवसेसं तं चेव ९ ॥ जइ सन्निपंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति किं संखेज्जवासाउयसन्निपंचिंदियजाव उववज्जंति असंखेज्जवासा० उववज्जंति ?, गोयमा ! संखेज्जवासाउय जाव उववज्जंति असंखेज्ज वासा० जाव उवव०, असंखेज्जवासाउ० सन्निपंचि० तिरि० जो० भंते ! जे भविए असुरकु० उवव० से णं भंते ! केवइकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं दसवाससहस्सट्ठितीएसु उववज्जिज्जा उक्कोसेणं तिपलिओवमट्ठितीएसु उवज्जेज्जा, ते णं भंते ! जीवा एगसमएणं पुच्छा, गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा उवव० वयरोसभनारायसंवयणी ओगाहणा जह० धणुपुहुत्तं उक्कोसेणं छ गाउ-

याइं समचउरंससंठाणसंठिया प०, चत्तारि लेस्साओ आदिल्लाओ, णो सम्मदिट्ठी मिच्छादिट्ठी णो सम्मा-मिच्छादिट्ठी णो णाणी अन्नाणी नियमं दुअन्नाणी मतिअन्नाणी सुयअन्नाणी य जोगो तिविहोवि उवओगो दुवि-होवि चत्तारि सन्नाओ चत्तारि कसाया पंच इंदिया तिन्नि समुग्घाया आदिल्लगा समोहयावि मरंति असमो-हयावि मरंति वेदणा दुविहावि सायावेयगा असायावेयगा वेदो दुविहोवि इत्थिवेयगावि पुरिसवेयगावि णो नपुंसगवेदगा ठिती जहन्ने० साइरेगा पुव्वकोडी उक्कोसेणं तिन्नि पलिओवमाइं अज्झवसाणा पसत्थावि अप्प-सत्थावि अणुबंधो जहेव ठिती कायसंवेहो भवादेसेणं दो भवग्गहणाइं कालादेसेणं जहन्नेणं सातिरेगा पुव्वकोडी दसहिं वाससहस्सेहिं अब्भहिया उक्कोसेणं छप्पलिओवमाइं एवतियं जावकरेज्जा १, सो चेव जह-न्नकालट्ठितीयएसु उववन्नो एस चेव वत्तव्वया नवरं असुरकुमारट्ठिती संवेहं च जाणेज्जा २, सो चेव उक्कोस-कालट्ठितीएसु उववन्नो जहन्नेणं तिपलिओवमट्ठितीएसु उक्कोसेणवि तिपलिओवमट्ठितीएसु उवव० एस चेव वत्तव्वया नवरं ठिती से जहन्नेणं तिन्नि पलिओवमाइं उक्कोसेणवि तिन्नि पलिओवमाइं एवं अणुबंधोवि, कालादे० जह० छप्पलिओवमाइं उक्कोसेणवि छप्पलिओवमाइं एवतियं सेसं तं चेव ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ जहन्नेणं दसवाससहस्सट्ठितीएसु उक्कोसेणं सातिरेगपुव्वकोडीआउ० अप्प० उवव०, ते णं भंते ! अवसेसं तं चेव जाव भवादेसोत्ति, नवरं ओगाहणा जहन्नेणं धणुहपुहुत्तं उक्कोसेणं सातिरेगं धणुसहस्सं ठिती जहन्नेणं सातिरेगा पुव्वकोडी उक्कोसेणवि सातिरेगा पुव्वकोडी एवं अणुबंधोवि, कालादेसेणं

जहन्नेणं सातिरेगा पुव्वकोडी दसहिं वाससहस्सेहिं अब्भहिया उक्कोसेणं सातिरेगाओ दो पुव्वकोडीओ एवतियं ४, सो चेव अप्पणा जहन्नकालट्ठितीएसु उववज्जेज्जा एस चेव वत्तव्वया नवरं असुरकुमारट्ठिइं संवेहं च जाणेज्जा ५, सो चेव उक्कोसकालट्ठितीएसु उवव० जह० सातिरेगपुव्वकोडिआउएसु उक्कोसेणवि सातिरेगपुव्वकोडीआउएसु उववज्जेज्जा सेसं तं चेव नवरं कालादे० जह० सातिरेगाओ दो पुव्वकोडीओ उक्कोसेणवि सातिरेगाओ दो पुव्वकोडीओ एवतियं कालं सेवेज्जा ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ सो चेव पढमगमगो भाणियव्वो नवरं ठिती जहन्नेणं तिन्नि पलिओवमाइं उक्कोसेणवि तिन्नि पलिओवमाइं एवं अणुबंधोवि कालादे० जह० तिन्नि पलिओवमाइं दसहिं वाससहस्सेहिं अब्भहियाइं उक्कोसेणं छ पलिओवमाइं एवतियं ७, सो चेव जहन्नकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं असुरकुमारट्ठितीं संवेहं च जाणिज्जा ८, सो चेव उक्कोसकालट्ठितीएसु उववन्नो जह० तिपलिओवमाइं उक्कोसे० तिपलिओव० एस चेव वत्तव्वया नवरं कालादेसेणं जह० छप्पलिओवमाइं एवतियं ९ ॥ जइ संखेज्जवासाउयसन्निपंचिंदियजाव उववज्जंति किं जलचर० एवं जाव पज्जत्तसंखेज्जवासाउयसन्निपंचिंदियतिरिक्खजोणिए णं भंते ! जे भविए असुरकु० उव० से णं भंते ! केवइयकालट्ठितीएसु उवव० ?, गोयमा ! जह० दसवासट्ठितीएसु उक्कोसे० सातिरेगसागरोवमट्ठितीएसु उवव०, ते णं भंते ! जीवा एगसमएणं एवं एतेसिं रयणप्पभपुढविगमगसरिसा नव गमगा णेयव्वा, नवरं जाहे अप्पणा जहन्नकालट्ठिइओ भवइ ताहे तिसुवि गमएसु इमं णाणत्तं चत्तारि लेसाओ

अज्झवसाणा पसत्था नो अप्पसत्था सेसं तं चेव संवेहो सातिरेगेण सागरोवमेण कायव्वो ९ ॥ जइ मणुस्सेहिंतो उववज्जंति किं सन्निमणुस्सेहिंतो असन्निमणुस्सेहिंतो ?, गोयमा ! सन्निमणुस्सेहिंतो नो असन्निमणुस्सेहिंतो उववज्जंति, जइ सन्निमणुस्सेहिंतो उववज्जंति किं संखेज्जवासाउयसन्निमणुस्सेहिंतो उवव० असंखेज्जवासाउयसन्निमणुस्सेहिंतो उवव० ?, गोयमा ! संखेज्जवासाउयजाव उववज्जंनि असंखेज्जवासाउयजावउववज्जंति, असंखेज्जवासाउयसन्निमणुस्से णं भंते ! जे भविए असुरकुमारेसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जह० दसवाससहस्सट्ठितीएसु उक्को० तिपलिओवमट्ठितीएसु उव०, एवं असंखेज्जवासाउयतिरिक्खजोणियसरिसा आदिल्ला तिन्नि गमगा नेयव्वा, नवरं सरीरोगाहणा पढमबितिएसु गमएसु जहन्नेणं सातिरेगाइं पंचधणुसयाइं उक्कोसेणं तिन्नि गाउयाइं सेसं तं चेव, तईयगमे ओगाहणा जहन्नेणं तिन्नि गाउयाइं उक्कोसेणवि तिन्नि गाउयाइं सेसं जहेव तिरिक्खजोणियाणं ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ तस्सवि जहन्नकालट्ठितियतिरिक्खजोणियसरिसा तिन्नि गमगा भाणियव्वा, नवरं सरीरोगाहणा तिसुवि गमएसु जह० साइरेगाइं पंचधणुसयाइं उक्कोसेणवि सातिरेगाइं पंचधणुसयाइं सेसं तं चेव ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ तस्सवि ते चेव पच्छिल्लगा तिन्नि गमगा भाणियव्वा नवरं सरीरोगाहणा तिसुवि गमएसु जहन्नेणं तिन्नि गाउयाइं उक्कोसेणवि तिन्नि गाउयाइं अवसेसं तं चेव ९ ॥ जइ संखेज्जवासाउयसन्निमणुस्सेहिंतो उववज्जइ किं पज्जत्तसंखेज्जवासाउय० अपज्जत्तसंखेज्जवासाउय० ?, गोयमा ! पज्ज-

त्तसंखेज्ज० णो अपज्जत्तसंखेज्ज० पज्जत्तसंखेज्जवासाउयसन्निमणुस्स णं भंते ! जे भविए असुरकुमारेसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं दसवाससहस्सट्ठितीएसु उक्कोसेणं साइरेगसागरोवमट्ठितीएसु उववज्जेज्जा ते णं भंते ! जीवा एवं जहेव एतेसिं रयणप्पभाए उववज्जमाणाणं णव गमगा तहेव इहवि णव गमगा भाणियव्वा णवरं संवेहो सातिरेगेण सागरोवमेण कायव्वो सेसं तं चेव ९ सेवं भंते ! २ त्ति ॥ ( सूत्रं ६९८ ) ॥ २४-२ ॥

'रायगिहे' इत्यादि, 'उक्कोसेणं पलिओवमस्स असंखेज्जइभागट्ठिइएसु उववज्जेज्ज' त्ति, इह पल्योपमासङ्ख्येयभागग्रहणेन पूर्वकोटी ग्राह्या, यतः संमूर्च्छिमस्योत्कर्षतः पूर्वकोटीप्रमाणमायुर्भवति, स चोत्कर्षतः स्वायुष्कतुल्यमेव देवायुर्बध्नाति नातिरिक्तं, अत एवोक्तं चूर्णिकारेण–"उक्कोसेणं स तुल्लपुव्वकोडीआउयत्तं निव्वत्तेइ, न य संमुच्छिमो पुव्वकोडीआउयत्ताओ परो अत्थि" त्ति ॥ असङ्ख्यातवर्षायुःसञ्ज्ञिपञ्चेन्द्रियतिर्यग्गमेषु 'उक्कोसेणं तिपलिओवमट्ठिइएसु उववज्जेज्ज' त्ति, इदं देवकुर्वादिमिथुनकतिरश्चोऽधिकृत्योक्तं, ते हि त्रिपल्योपमायुष्कत्वेनासङ्ख्यातवर्षायुषो भवन्ति, ते च स्वायुःसदृशं देवायुर्बध्नन्तीति । 'संखेज्जा उववज्जंति' त्ति असङ्ख्यातवर्षायुस्तिरश्चामसङ्ख्यातानां कदाचिदप्यभावात्, 'वयरोसहनारायसंघयणी' ति असङ्ख्यातवर्षायुषां यतस्तदेव भवतीति, 'जहन्नेणं धणुहपुहुत्तं' ति इदं पक्षिणोऽधिकृत्योक्तं, पक्षिणामुत्कृष्टतो धनुःपृथक्त्वप्रमाणशरीरत्वात्, आह च–"धणुयपुहत्तं पक्खिसु" त्ति [ पक्षिषु धनुष्पृथक्त्वम् ] असङ्ख्यातवर्षायुषोऽपि ते स्युर्यदाह–'पलियअसंखेज्जपक्खीसु' त्ति पल्योपमासङ्ख्येयभागः पक्षिणामायुरिति, 'उक्कोसेणं छ गाउयाइं' ति, इदं च देवकुर्वादिहस्त्यादी-

नधिकृत्योक्तं, 'नो नपुंसगवेयग'त्ति असङ्ख्यातवर्षायुषो हि नपुंसकवेदा न संभवन्त्येवेति, 'उक्कोसेणं छप्पलिओवमाइं'ति त्रीण्यसङ्ख्यातवर्षायुस्तिर्यग्भवसम्बन्धीनि त्रीणि चासुरभवसम्बन्धीनीत्येवं षट्, न च देवभवादुद्वृत्तः पुनरप्यसङ्ख्यातवर्षायुष्के-षूत्पद्यत इति 'सो चेव अप्पणा जहन्नकालट्ठितीओ'इत्यादिश्चतुर्थो गमः, इह च जघन्यकालस्थितिकः सातिरेकपूर्वको-ट्यायुः स च पक्षिप्रभृतिकः प्रक्रान्तः 'उक्कोसेणं सातिरेगपुव्वकोडिआउए सो'त्ति असङ्ख्यातवर्षायुषां पक्ष्यादीनां सातिरेकं पूर्वकोटिरायुः ते च स्वायुस्तुल्यं देवायुः कुर्वन्तीतिकृत्वा सातिरेकेत्याद्युक्तमिति, 'उक्कोसेणं सातिरेगं धणुसहस्सं'ति यदुक्तं तत् सप्तमकुलकरप्राक्कालभाविनो हस्त्यादीनपेक्ष्येति संभाव्यते, तथाहि-इहासङ्ख्यातवर्षायुर्जघन्यस्थितिकः प्रक्रान्तः स च सातिरेकपूर्वकोट्यायुर्भवति तथैवागमे व्यवहृतत्वात्, एवंविधश्च हस्त्यादिः सप्तमकुलकरप्राक्काले लभ्यते, तथा सप्तम-कुलकरस्य पञ्चविंशत्यधिकानि पञ्च धनुःशतानि उच्चैस्त्वं तत्प्राक्कालभाविनां च तानि समधिकतराणीति तत्कालीनहस्त्या-दयश्चैतद्द्विगुणोच्छ्रायाः अतः सप्तमकुलकरप्राक्कालभाविनामसङ्ख्यातवर्षायुषां हस्त्यादीनां यथोक्तमवगाहनाप्रमाणं लभ्यत इति, 'सातिरेगाओ दो पुव्वकोडीओ' इति एका सातिरेका तिर्यग्भवसत्काऽन्या तु सातिरेकैवासुरभवसत्केति ४। 'असु-रकुमारट्ठिइं संवेहं च जाणिज्ज'त्ति तत्र जघन्याऽसुरकुमारस्थितिर्दशवर्षसहस्राणि संवेधस्तु सातिरेका पूर्वकोटी दशवर्ष-सहस्राणि चेति ५, शेषगमास्तु स्वयमेवाभ्यूह्याः ९ ॥ एवमुत्पादितोऽसङ्ख्यातवर्षायुःसञ्ज्ञिपञ्चेन्द्रियतिर्यगसुरे, अथ सङ्ख्यातवर्षायुरसावुत्पाद्यते—'जइ संखेज्जे'त्यादि, 'उक्कोसेणं सातिरेगसागरोवमट्ठितीएसु'त्ति यदुक्तं तद्बलिनिकाय-माश्रित्येति 'तिसुवि गमएसु'त्ति जघन्यकालस्थितिकसम्बन्धिषु औघिकादिषु 'चत्तारि लेसाओ'त्ति रत्नप्रभापृथिवी-

गामिनां जघन्यस्थितिकानां तिस्रस्ता उक्ताः एषु पुनस्ताश्चतस्रः असुरेषु तेजोलेश्यावानप्युत्पद्यत इति, तथा रत्नप्रभापृथिवीगामिनां जघन्यस्थितिकानामध्यवसायस्थानान्यप्रशस्तान्येवोक्तानि इह तु प्रशस्तान्येव, दीर्घस्थितिकत्वे हि द्विविधान्यपि संभवन्ति न त्वितरेषु कालस्याल्पत्वात्, 'संवेहो सातिरेगेण सागरोवमेण कायवो'त्ति रत्नप्रभागमेषु सागरोपमेण संवेध उक्तः असुरकुमारगमेषु तु सातिरेकसागरोपमेणासौ कार्यो बलिपक्षापेक्षया तस्यैव भावादिति ॥ अथ मनुष्येभ्योऽसुरानुत्पादयन्नाह—'जइ मणुस्सेहिंतो'इत्यादि, 'उक्कोसेणं तिपलिओवमट्ठिइएसु'त्ति देवकुर्वादिनरा हि उत्कर्षतः स्वायुःसमानस्यैव देवायुषो बन्धकाः अतः 'तिपलिओवमट्ठिइएसु' इत्युक्तं, 'नवरं सरीरोगाहणे'त्यादि तत्र प्रथम औघिक औघिकेषु द्वितीयस्त्वौघिको जघन्यस्थितिष्विति, तत्रौघिकोऽसङ्ख्यातवर्षायुर्नरो जघन्यतः सातिरेकपञ्चधनुःशतप्रमाणो भवति यथा सप्तमकुलकरप्राक्कालभावी मिथुनकनरः उत्कृष्टतस्तु त्रिगव्यूतमानो यथा देवकुर्वादिमिथुनकनरः, स च प्रथमगमे द्वितीये च द्विविधोऽपि संभवति, तृतीये तु त्रिगव्यूतावगाहन एव यस्मादसावेवोत्कृष्टस्थितिषु–पल्योपमत्रयायुष्केषूत्पद्यते उत्कर्षतः स्वायुःसमानायुर्बन्धकत्वात्तस्येति ॥ अथ सङ्ख्यातवर्षायुःसञ्ज्ञिमनुष्यमाश्रित्याह—'जइ संखेज्जे'त्यादि, एतच्च समस्तमपि पूर्वोक्तानुसारेणावगन्तव्यमिति ॥ चतुर्विंशतितमशते द्वितीयः ॥ २४–२ ॥

---

तृतीयस्तु—

**रायगिहे जाव एवं वयासी–नागकुमारा णं भंते ! कओहिंतो उववज्जंति किं नेरइएहिंतो उववज्जंति तिरि०**

मणु० देवेहिंतो उववज्जंति ?, गोयमा ! णो णेरइएहिंतो उववज्जंति तिरिक्खजोणिय०मणुस्सेहिंतो उववज्जंनि नो देवेहिंतो उववज्जंति, जइ तिरिक्ख एवं जहा असुरकुमाराणं वत्तव्वया तहा एतेसिंपि जाव असन्नीति, जइ सन्निपंचिंदियतिरिक्खजोणिएहिंतो किं संखेज्जवासाउय० असंखेज्जवासाउय० ?, गोयमा ! संखेज्जवासाउय० असंखेज्जवासाउय० जाव उववज्जंति, असंखिज्जवासाउयसन्निपंचिंदियतिरिक्खजोणिए णं भंते ! जे भविए नागकुमारेसु उववज्जित्तए से णं भंते ! केवतिकालट्ठिती० ?, गोयमा ! जहन्नेणं दसवाससहस्सट्ठितिएसु उक्कोसेणं देसूणदुपलिओवमट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा अवसेसो सो चेव असुरकुमारेसु उववज्जमाणस्स गमगो भाणियव्वो जाव भवादेसोत्ति कालादेसेणं जहन्नेणं सातिरेगा पुव्वकोडी दसहिं वाससहस्सेहिं अब्भहिया उक्कोसेणं देसूणाइं पंच पलिओवमाइं एवतियं जाव करेज्जा १, सो चेव जहन्नकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं णागकुमारट्ठितीं संवेहं च जाणेज्जा २, सो चेव उक्कोसकालट्ठितीएसु उववन्नो तस्सवि एस चेव वत्तव्वया नवरं ठिती जहन्नेणं देसूणाइं दो पलिओवमाइं उक्कोसेणं तिन्नि पलिओवमाइं सेसं तं चेव जाव भवादेसोत्ति कालादेसेणं जहन्नेणं देसूणाइं चत्तारि पलिओवमाइं उक्कोसेणं देसूणाइं पंच पलिओवमाइं एवतियं कालं ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ तस्सवि तिसुवि गमएसु जहेव असुरकुमारेसु उववज्जमाणस्स जहन्नकालट्ठितियस्स तहेव निरवसेसं ६ सो चेव अप्पणा उक्कोसकालट्ठितीओ जातो तस्सवि तहेव तिन्नि गमगा जहा असुरकुमारेसु उववज्जमाणस्स नवरं नागकुमारट्ठितीं संवेहं

च जाणेज्जा सेसं तं चेव ९ ॥ जइ संखेज्जवासाउयसन्निपंचिंदियजाव किं पज्जत्तसंखेज्जवासाउय० अपज्जत्तसंखे० ?, गोयमा! पज्जत्तसंखेज्जवासाउय० णो अपज्जत्तसंखेज्जवासाउय० पज्जत्तसंखेज्जवासाउयजाव जे भविए णागकुमारेसु उववज्जित्तए से णं भंते! केवतिकालट्ठितीएसु उववज्जेज्जा, एवं जहेव असुरकुमारेसु उववज्जमाणस्स वत्तव्वया तहेव इहवि णवसुवि गमएसु, णवरं णागकुमारट्ठितिं संवेहं च जाणेज्जा, सेसं तं चेव ९ ॥ जइ मणुस्सेहिंतो उववज्जंति किं सन्निमणु० असन्नीमणु० ?, गोयमा! सन्निमणु० णो असन्निमणुस्से० जहा असुरकुमारेसु उववज्जमाणस्स जाव असंखेज्जवासाउयसन्निमणुस्से णं भंते! जे भविए णागकुमारेसु उववज्जित्तए से णं भंते! केवतिकालट्ठितीएसु उववज्जइ ?, गोयमा! जहन्नेणं दस वाससहस्सं उक्कोसेणं देसूणाइं दो पलिओवमाइं एवं जहेव असंखेज्जवासाउयाणं तिरिक्खजोणियाणं नागकुमारेसु आदिल्ला तिन्नि गमगा तहेव इमस्सवि, नवरं पढमबितिएसु गमएसु सरीरोगाहणा जहन्नेणं सातिरेगाइं पंचधणुसयाइं उक्को० तिन्नि गाउयाइं तइयगमे ओगाहणा जहन्नेणं देसूणाइं दो गाउयाइं उक्कोसेणं तिन्नि गा० सेसं तं चेव ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ तस्स तिसुवि गमएसु जहा तस्स चेव असुरकुमारेसु उववज्जमाणस्स तहेव निरवसेसं ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ तस्स तिसुवि गमएसु जहा तस्स चेव उक्कोसकालट्ठितियस्स असुरकुमारेसु उववज्जमाणस्स नवरं णागकुमारट्ठितिं संवेहं च जाणेज्जा, सेसं तं चेव ९ ॥ जइ संखेज्जवासाउयसन्निमणु० किं पज्जत्तसंखेज्ज० अपज्जत्तसं० ?, गोयमा! पज्जत्तसंखे० णो अपज्जत्तसंखे०,

पज्जत्तसंखेज्जवासाउयसन्निमणुस्से णं भंते! जे भविए णागकुमारेसु उववज्जित्तए से णं भंते! केवति० ?, गोयमा! जहन्नेणं दसवाससहस्सं उक्कोसेणं देसूणदोपलिओवमट्ठिती एवं जहेव असुरकुमारेसु उववज्जमाणस्स सच्चेव लद्धी निरवसेसा नवसु गमएसु णवरं णागकुमारट्ठितिं संवेहं च जाणेज्जा सेवं भंते! २ त्ति ॥ ( सूत्रं ६९९ ) चउवीसतिमे सए ततिओ समत्तो ॥ २४-३ ॥ अवसेसा सुवन्नकुमाराई जाव थणियकुमारा एए अट्ठवि उद्देसगा जहेव नागकुमारा तहेव निरवसेसा भाणियव्वा, सेवं भंते! सेवं भंतेत्ति ॥ ( सूत्रं ७०० ) ॥ चउवीसतिमे सते एक्कारसमो उद्देसो समत्तो ॥ २४-११ ॥

'रायगिहे' इत्यादि, 'उक्कोसेणं देसूणदुपलिओवमट्ठिईएसु'त्ति यदुक्तं तदौदीच्यनागकुमारनिकायापेक्षया, यतस्तत्र द्वे देशोने पल्योपमे उत्कर्षत आयुः स्यात्, आह च-"दाहिण दिवड्ढपलियं दो देसूणुत्तरिल्लाणं।" इति [ दाक्षिणात्यानां सार्द्धं पल्यम् औत्तराहाणानां द्वे देशोने ॥ ] उत्कृष्टसंवेधपदे 'देसूणाइं पंच पलिओवमाइं'ति [ देशोनानि पञ्च पल्योपमानि ] पल्योपमत्रयं असङ्ख्यातवर्षायुस्तिर्यक्सम्बन्धि द्वे च देशोने ते नागकुमारसम्बन्धिनी इत्येवं यथोक्तं मानं भवतीति। द्वितीयगमे 'नागकुमारठिइं संवेहं च जाणेज्ज'त्ति तत्र जघन्या नागकुमारस्थितिर्दश वर्षसहस्राणि संवेधस्तु कालतो जघन्या सातिरेकपूर्वकोटी दशवर्षसहस्राधिका उत्कृष्टः पुनः पल्योपमत्रयं तैरेवाधिकमिति। तृतीयगमे 'उक्कोसकालट्ठिइएसु'त्ति देशोनद्विपल्योपमायुष्केष्वित्यर्थः, तथा 'ठिई जहन्नेणं दो देसूणाइं पलिओवमाइं'ति यदुक्तं तदवसर्पिण्यां सुषमाभिधानद्वितीयारकस्य कियत्यपि भागेऽतीतेऽसङ्ख्यातवर्षायुषस्तिरश्चोऽधिकृत्योक्तं, तेषामेवैतत्प्रमाणायुष्कत्वात्

एषामेव च स्वायुःसमानदेवायुर्बन्धकत्वेनोत्कृष्टस्थितिषु नागकुमारेषूत्पादात्, 'तिन्नि पलिओवमाइं'ति, एतच्च देवकुर्वाद्यसङ्ख्यातजीवितिरश्चोऽधिकृत्योक्तं, ते च त्रिपल्योपमायुषोऽपि देशोनद्विपल्योपममानमायुर्बध्नन्ति यतस्ते स्वायुषः समं हीनतरं वा तद्बध्नन्ति न तु महत्तरमिति ॥ अथ सङ्ख्यातजीविनं सञ्ज्ञिपञ्चेन्द्रियतिर्यञ्चमाश्रित्याह—'जइ संखेज्जवासाउए' इत्यादि, एतच्च पूर्वोक्तानुसारेणावगन्तव्यमिति ॥ चतुर्विंशतितमशते तृतीयः ॥ २४-३ ॥ एवमन्येऽष्टावित्येवमेकादश ॥ २४-११ ॥

अथ पृथिवीकायिकोद्देशको द्वादशः—

पुढविकाइया णं भंते ! कओहिंतो उवव० किं नेरइएहिंतो उववज्जंति तिरिक्ख० मणुस्स० देवेहिंतो उववज्जंति ?, गोयमा ! णो णेरइएहिंतो उवव० तिरिक्ख० मणुस्स० देवेहिंतोवि उववज्जंति, जइ तिरिक्खजोणिए किं एगिंदियतिरिक्खजोणिए एवं जहा वक्कंतीए उववाओ जाव जइ बायरपुढविकाइयएगिंदियतिरिक्खजोणिएहिंतो उववज्जंति किं पज्जत्तबादरजाव उववज्जंति अपज्जत्तबादरपुढवि ?, गोयमा ! पज्जत्तबादरपुढवि अपज्जत्तबादरपुढविकाइ० जाव उववज्जंति, पुढविक्काइए णं भंते ! जे भविए पुढविक्काइएसु उववज्जित्तए से णं भंते ! केवतिकालट्ठितीएसु उववज्जेज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तट्ठितीएसु उक्कोसेणं बावीसवाससहस्सट्ठितीएसु उववज्जेज्जा, ते णं भंते ! जीवा एगसमएणं पुच्छा, गोयमा ! अणुसमयं अविरहिया

असंखेज्जा उववज्जंति छेवट्ठसंघयणी सरीरोगाहणा जहन्नेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणवि अंगुलस्स असंखेज्जइभागं मसूरचंदसंठिया चत्तारि लेस्साओ णो सम्मदिट्ठी मिच्छादिट्ठी णो सम्मामिच्छादिट्ठी णो णाणी अन्नाणी दो अन्नाणा नियमं णो मणजोगी णो वइजोगी कायजोगी उवओगो दुविहोवि चत्तारि सन्नाओ चत्तारि कसाया एगे फासिंदिए पन्नत्ते तिन्नि समुग्घाया वेदणा दुविहा णो इत्थिवेदगा णो पुरिसवेदगा नपुंसगवेदगा ठितीए जहन्नेणं अंतोमुहुत्तं उक्कोसेणं बावीसं वाससहस्साइं अज्झवसाणा पसत्थावि अपसत्थावि अणुबंधो जहा ठिती १, से णं भंते! पुढविकाइए पुणरवि पुढविकाइएत्ति केवतियं कालं सेवेज्जा ?, केवतियं कालं गतिरागतिं करेज्जा ?, गोयमा! भवादेसेणं जह० दो भवग्गहणाइं उक्कोसे० असंखेज्जाइं भवग्गहणाइं कालादेसेणं जहन्नेणं दो अंतोमुहुत्ता उक्कोसेणं असंखेज्जं कालं एवतियं जाव करेज्जा १, सो चेव जहन्नकालट्ठितीएसु उववन्नो जहन्नेणं अंतोमुहुत्तठितीएसु उक्कोसेणवि अंतोमुहुत्तट्ठितीएसु एवं चेव वत्तव्वया निरवसेसा २, सो चेव उक्कोसकालट्ठितीएसु उववन्नो जहन्नेणं बावीसवाससहस्सट्ठितीएसु उक्कोसेणवि बावीसवाससहस्सट्ठितीएसु सेसं तं चेव जाव अणुबंधोत्ति, णवरं जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा उवव० भवादे० जह० दो भवग्गह० उक्को० अट्ठ भवग्गह० कालादे० जह० बावीसं वाससह० अंतोमुहुत्तमब्भहि० उक्कोसेणं छावत्तरिं वाससहस्सुत्तरं सयसहस्सं एवतियं कालं जाव करेज्जा ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ सो चेव पढमिल्लओ गमओ

भाणियव्वो नवरं लेस्साओ तिन्नि ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं अप्पसत्था अज्झवसाणा अणुबंधो जहा ठिती सेसं तं चेव ४, सो चेव जहन्नकालट्ठितीएसु उववन्नो एसो चेव चउत्थगमगवत्तव्वया भाणियव्वा ५, सो चेव उक्कोसकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया नवरं जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसे० संखे० असंखेज्जा वा जाव भवादेसेणं जहन्नेणं दो भवग्गहणाइं उक्कोसेणं अट्ठ भवग्गहणाइं कालादेसेणं जहन्नेणं बावीसवाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठासीइं वाससहस्साइं चउहिं अंतोमुहुत्तेहिं अब्भहियाइं एवतियं० ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ एवं तइयगमगसरिसो निरवसेसो भाणियव्वो नवरं अप्पणा से ठिई जहन्नेणं बावीसवाससहस्साइं उक्कोसेणवि बावीसं वाससहस्साइं ७, सो चेव जहन्नकालट्ठितीएसु उववन्नो जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं, एवं जहा सत्तमगमगो जाव भवादेसो, कालादेसेणं जहन्नेणं बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठासीइं वाससहस्साइं चउहिं अंतोमुहुत्तेहिं अब्भहियाइं एवतियं० ८, सो चेव उक्कोसकालट्ठितीएसु उववन्नो जहन्नेणं बावीसंवाससहस्सट्ठितीएसु उक्कोसेणवि बावीसवाससहस्सट्ठितीएसु एस चेव सत्तमगमगवत्तव्वया जाणियव्वा जाव भवादेसोत्ति कालादे० जह० चोयालीसं वाससहस्साइं उक्कोसेणं छावत्तरिवाससहस्सुत्तरं सयसहस्सं एवतियं ९ ॥ जइ आउक्काइयएगिंदियतिरिक्खजोणिएहिंतो उववज्जंति किं सुहुमआऊ० बादरआउ० एवं चउक्कओ भेदो भाणियव्वो जहा पुढविक्काइयाणं, आउक्काइयाणं भंते ! जे भविए पुढविक्काइएसु

उववज्जित्ताए से णं भंते ! केवइकालट्ठितीएसु उववज्जिज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तट्ठिती० उक्कोसेणं बावीसंवाससहस्सट्ठि० उवव०, एवं पुढविक्काइयगमगसरिसा नव गमगा भाणियव्वा १, नवरं थिबुगाबिंदुसंठिए, ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं सत्त वाससहस्साइं, एवं अणुबंधोवि एवं तिसुवि गमएसु, ठिती संवेहो तइयछट्ठसत्तमट्ठमणवमगमेसु भवादेसेणं जह० दो भवग्गहणाइं उक्कोसेणं अट्ठ भवग्गहणाइं, सेसेसु चउसु गमएसु जहन्नेणं दो भवग्गहणाइं उक्कोसेणं असंखेज्जाइं भवग्गहणाइं, ततियगमए कालादेसेणं जहन्नेणं बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं सोलसुत्तरं वाससयसहस्सं एवतियं०, छट्ठे गमए कालादेसेणं जहन्नेणं बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठासीतिं वाससहस्साइं चउहिं अंतोमुहुत्तेहिं अब्भहियाइं एवतियं०, सत्तमे गमए कालादेसेणं जहन्नेणं सत्त वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं सोलसुत्तरवाससयसहस्सं एवतियं०, अट्ठमे गमए कालादेसेणं जहन्नेणं सत्त वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठावीसं वाससहस्साइं चउहिं अंतोमुहुत्तेहिं अब्भहियाइं एवतियं०, णवमे गमए भवादेसेणं जहन्नेणं दो भवग्गहणाइं उक्कोसेणं अट्ठ भवग्गहणाइं कालादेसेणं जहन्नेणं एकूणतीसाइं वाससहस्साइं उक्कोसेणं सोलसुत्तरं वाससयसहस्सं एवतियं०, एवं णवसुवि गमएसु आउक्काइयठिई जाणियव्वा ९ ॥ जइ तेउक्काइएहिंतो उवव० तेउक्काइयाणवि एस चेव वत्तव्वया नवरं नवसुवि गमएसु तिन्नि लेस्साओ तेउक्काइयाणं सूईकलावसंठिया ठिई जाणियव्वा तईयगमए कालादे० जह० बावीसं वाससह० अंतोमुहुत्तमब्भहि० उक्कोसेणं

अट्ठासीतिं वासहस्साइं बारसहिं राइंदिएहिं अब्भहियाइं एवतियं एवं संवेहो उवजुंजिऊण भाणियव्वो ९ ॥ जइ वाउकाइएहिंतो वाउकाइयाणवि एवं चेव णव गमगा जहेव तेउक्काइयाणं णवरं पडागासंठिया प० संवेहो वाससहस्सेहिं कायव्वो तइयगमए कालादे० जह० बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं एगं वाससयसहस्सं एवं संवेहो उवजुंजिऊण भाणियव्वो ॥ जइ वणस्सइकाइएहिंतो उवव० वणस्सइकाइयाणं आउकाइयगमगसरिसा णव गमगा भाणियव्वा नवरं णाणासंठिया सरीरोगाहणा प० पढमएसु पच्छिल्लएसु य तिसु गमएसु जह० अंगुलस्स असंखेज्जइभागं उक्कोसेणं सातिरेगं जोयणसहस्सं मज्झिल्लएसु तिसु तहेव जहा पुढविकाइयाणं संवेहो ठिती य जाणियव्वा तइयगमे कालादेसेणं जहन्नेणं बावीसं वाससह० अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठावीसुत्तरं वाससयसहस्सं एवतियं एवं संवेहो उवजुंजिऊण भाणियव्वो ( सूत्रं ७०१ ) ॥

तत्र च 'जहा वक्कंतीए'त्ति इत्यादिना यत्सूचितं तदेवं दृश्यं—किं एगिंदियतिरिक्खजोणिएहिंतो उववज्जंति जाव पंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति ?, गोयमा ! एगिंदियतिरिक्खजोणिएहिंतो जाव पंचिंदियतिरिक्खजोणिएहिंतोवि उववज्जंति'इत्यादि, तृतीये गमे 'नवरं जहन्नेणं एक्को वे'त्यादि प्राक्तनगमयोरुत्पित्सुबहुत्वेनासङ्ख्येया एवोत्पद्यन्त इत्युक्तम् इह तूत्कृष्टस्थितय एकादयोऽसङ्ख्येयान्ता उत्पद्यन्ते उत्कृष्टस्थितिपूत्पित्सूनामल्पत्वेनैकादीनामप्युत्पादसम्भवात्, 'उक्कोसेणं अट्ठ भवग्गहणाइं'ति, इहेदमवगन्तव्यं—यत्र संवेधे पक्षद्वयस्य मध्ये एकत्रापि पक्षे उत्कृष्टा स्थिति-

भवति, तत्रोत्कर्षतोऽष्टौ भवग्रहणानि तदन्यत्र त्वसङ्ख्येयानि, ततश्चेहोत्पत्तिविषयभूतजीवेषूत्कृष्टा स्थितिरित्युत्कर्षतोऽष्टौ भवग्रहणान्युक्तानि, एवमुत्तरत्रापि भावनीयमिति, 'छावत्तरिं वाससयसहस्सं'ति द्वाविंशतेर्वर्षसहस्राणामष्टाभिर्भवग्रहणैर्गुणने षट्सप्ततिवर्षसहस्राधिकं वर्षलक्षं भवतीति १७६०००, चतुर्थे गमे 'लेसाओ तिन्नि'त्ति जघन्यस्थितिकेषु देवो नोत्पद्यते इति तेजोलेश्या तेषु नास्तीति, षष्ठे गमे 'उक्कोसेणं अट्ठासीइं वाससहस्साइं'इत्यादि तत्र जघन्यस्थितिकस्योत्कृष्टस्थितिकस्य च चतुष्कृत्व उत्पन्नत्वाद् द्वाविंशतिर्वर्षसहस्राणि चतुर्गुणितान्यष्टाशीतिर्भवन्ति चत्वारि चान्तर्मुहूर्त्तानीति, नवमे गमे 'जहन्नेणं चोयालीसं'ति द्वाविंशतेर्वर्षसहस्राणां भवग्रहणद्वयेन गुणने चतुश्चत्वारिंशत्सहस्राणि भवन्तीति ॥ एवं पृथिवीकायिकः पृथिवीकायिकेभ्य उत्पादितः, अथासावेवाप्कायिकेभ्य उत्पाद्यते— 'जइ आउक्काइए'त्यादि, 'चउक्कओ भेदो'त्ति सूक्ष्मबादरयोः पर्याप्तकापर्याप्तकभेदात् 'संवेहो तइयछट्ठे'त्यादि तत्र भवादेशेन जघन्यतः संवेधः सर्वगमेषु भवग्रहणद्वयरूपः प्रतीतः उत्कृष्टे च तस्मिन् विशेषोऽस्तीति दर्श्यते, तत्र च तृतीयादिषु सूत्रोक्तेषु पञ्चसु गमेषूत्कर्षतः संवेधोऽष्टौ भवग्रहणानि, पूर्वप्रदर्शिताया अष्टभवग्रहणनिबन्धनभूतायास्तृतीयषष्ठसप्तमाष्टमेष्वेकपक्षे नवमे तु गमे उभयत्राप्युत्कृष्टस्थितेः सद्भावात्, 'सेसेसु चउसु गमएसु'त्ति शेषेषु चतुर्षु गमेषु— प्रथमद्वितीयचतुर्थपञ्चमलक्षणेषूत्कर्षतोऽसङ्ख्येयानि भवग्रहणानि, एकत्रापि पक्षे उत्कृष्टस्थितेरभावात् । 'तइयगमए कालाएसेणं जहन्नेणं बावीसं वाससहस्साइं'ति पृथिवीकायिकानामुत्पत्तिस्थानभूतानामुत्कृष्टस्थितिकत्वात्, 'अंतोमुहुत्तमब्भहियाइं'ति अप्कायिकस्य तत्रोत्पित्सोरौघिकत्वेऽपि जघन्यकालस्य विवक्षितत्वेनान्तर्मुहूर्त्तस्थितिकत्वात्,

'उक्कोसेणं सोलसुत्तरं वाससयसहस्सं'ति, इहोत्कृष्टस्थितिकत्वात्पृथिवीकायिकानां तेषां च चतुर्णां भवानां भावात् तत्रोत्पित्सोश्चाप्कायिकस्यौघिकत्वेऽप्युत्कृष्टकालस्य विवक्षितत्वादुत्कृष्टस्थितयश्चत्वारस्तद्भवाः, एवं च द्वाविंशतेर्वर्षसहस्राणां सप्तानां च प्रत्येकं चतुर्गुणितत्वे ८८०००। २८०००। मीलने च षोडशसहस्राधिकं लक्षं भवति ११६०००, 'छट्ठे गमए'इत्यादि, षष्ठे गमे हि जघन्यस्थितिक उत्कृष्टस्थितिषूत्पद्यत इत्यन्तर्मुहूर्त्तस्य वर्षसहस्रद्वाविंशतेश्च प्रत्येकं चतुर्भवग्रहणगुणितत्वे यथोक्तमुत्कृष्टं कालमानं स्यात् ८८००० अत एव सप्तमादिगमसंवेधा अभ्यूह्याः नवरं नवमे गमे जघन्येनैकोनत्रिंशद्वर्षसहस्राणि अप्कायिकपृथिवीकायिकोत्कृष्टस्थितेर्मीलनादिति ॥ अथ तेजस्कायिकेभ्यः पृथिवीकायिकमुत्पादयन्नाह—'जइ'त्यादि, 'तिन्नि लेसाओ'त्ति अप्कायिकेषु देवोत्पत्तेः तेजोलेश्यासद्भावाच्चतस्रस्ता उक्ताः इह तु तदभावात्तिस्र एवेति, 'ठिई जाणियव्व'ति तत्र तेजसो जघन्या स्थितिरन्तर्मुहूर्त्तमितरा तु त्रीण्यहोरात्राणीति। 'तईयगमे'इत्यादि, तृतीयगमे औघिकस्तेजस्कायिक उत्कृष्टस्थितिषु पृथिवीकायिकेषूत्पद्यते इत्यत्रैकस्य पक्षस्योत्कृष्टस्थितिकत्वमतोऽष्टौ भवग्रहणान्युत्कर्षतः, तत्र च चतुर्षु पृथिवीकायिकोत्कृष्टभवग्रहणेषु द्वाविंशतेर्वर्षसहस्राणां चतुर्गुणितत्वेऽष्टाशीतिस्तानि भवन्ति, तथा चतुर्ष्वेव तेजस्कायिकभवेषूत्कर्षतः प्रत्येकमहोरात्रत्रयपरिमाणेषु द्वादशाहोरात्राणीति, 'एवं संवेहो उवजुंजिऊण भाणियव्वो'त्ति, स चैवं—पञ्चादिनवान्तेषु गमेष्वष्टौ भवग्रहणानि तेषु च कालमानं यथायोगमभ्यूह्यं, शेषगमेषु तूत्कृष्टतोऽसङ्ख्येया भवाः कालोऽप्यसङ्ख्येय एवेति ॥ अथ वायुकायिकेभ्यः पृथिवीकायिकमुत्पादयन्नाह—'जइ'त्यादि, 'संवेहो वाससहस्सेहिं कायव्वो'त्ति तैजस्कायिकाधिकारेऽहोरात्रैः संवेधः कृतः इह तु वर्षसहस्रैः स कार्यो

वायूनामुत्कर्षतो वर्षसहस्रत्रयस्थितिकत्वादिति । 'तइयगमए'इत्यादि, 'उक्कोसेणं एगं वाससयसहस्सं'ति अत्राष्टौ भवग्रहणानि तेषु च चतुर्ष्वष्टाशीतिर्वर्षसहस्राणि पुनरन्येषु चतुर्षु वायुसत्केषु वर्षसहस्रत्रयस्य चतुर्गुणितत्वे द्वादश उभयमीलने च वर्षलक्षमिति, 'एवं संवेहो उवजुंजिऊण भाणियव्वो'त्ति स च यत्रोत्कृष्टस्थितिसम्भवस्तत्रोत्कर्षतोऽष्टौ भवग्रहणानि इतरत्र त्वसङ्ख्येयानि, एतदनुसारेण च कालोऽपि वाच्य इति ॥ अथ वनस्पतिभ्यस्तमुत्पादयन्नाह—'जइ वणस्सई'त्यादि, 'वणस्सइकाइयाणं आउक्काइयगमसरिसा नव गमा भाणियव्व'त्ति, यस्त्वत्र विशेपस्तमाह—'णाणासंठिए'त्यादि, अप्कायिकानां स्तिबुकाकारावगाहना एषां तु नानासंस्थिता । तथा 'पढमएसु'इत्यादि, प्रथमकेष्वौघिकेषु गमेषु पाश्चात्येषु चोत्कृष्टस्थितिकगमेष्ववगाहना वनस्पतिकायिकानां द्विधाऽपि मध्यमेषु जघन्यस्थितिकगमेषु त्रिषु यथा पृथिवीकायिकानां पृथिवीकायिकेषूत्पद्यमानानामुक्ता तथैव वाच्या, अङ्गुलासङ्ख्यातभागमात्रैवेत्यर्थः, 'संवेहो ठिई य जाणियव्व'त्ति तत्र स्थितिरुत्कर्षतो दशवर्षसहस्राणि जघन्या तु प्रतीतैव, एतदनुसारेण संवेधोऽपि ज्ञेयः, तमेवैकत्र गमे दर्शयति—'तइए'इत्यादि, 'उक्कोसेणं' अट्ठावीसुत्तरं वाससयसहस्सं'ति, इह गमे उत्कर्षतोऽष्टौ भवग्रहणानि तेषु च चत्वारि पृथिव्याश्चत्वारि च वनस्पतेः तत्र चतुर्षु पृथिवीभवेषूत्कृष्टेषु वर्षसहस्राणामष्टाशीतिः तथा वनस्पतेर्दशवर्षसहस्रायुष्कत्वाच्चतुर्षु भवेषु वर्षसहस्राणां चत्वारिंशत् उभयमीलने च यथोक्तं मानमिति ॥ अथ द्वीन्द्रियेभ्यस्तमुत्पादयन्नाह—

जइ बेइंदिएहिंतो उववज्जंति किं पज्जत्तबेइंदिएहिंतो उवव० अपज्जत्तबेइंदिएहिंतो ?, गोयमा ! पज्जत्तबेइंदिएहिंतो उवव० अपज्जत्तबेइंदिएहिंतोवि उवव०, बेइंदिए णं भंते ! जे भविए पुढविकाइएसु उववज्जित्तए

से णं भंते ! केवतिकालं ?, गोयमा ! जह० अंतोमुहुत्तट्ठितीएसु उक्कोसेणं बावीसंवाससहस्सट्ठितीएसु, ते णं भंते ! जीवा एगसमएणं० ?, गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसे० संखेज्जा वा असं० उवव० छेवट्ठसंघयणी ओगाहणा जहन्नेणं अंगुलस्स असंखेज्जइ० उक्कोसेणं बारस जोयणाइं हुंडसंठिया तिन्नि लेसाओ सम्मदिट्ठीवि मिच्छादिट्ठीवि नो सम्मामिच्छादिट्ठी दो णाणा दो अन्नाणा नियमं णो मणजोगी वयजोगीवि कायजोगीवि उवओगो दुविहोवि चत्तारि सन्नाओ चत्तारि कसाया दो इंदिया प० तं०–जिब्भिंदिए य फासिंदिए य, तिन्नि समुग्घाया सेसं जहा पुढविकाइयाणं णवरं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं बारस संवच्छराइं एवं अणुबंधोऽवि, सेसं तं चेव, भवादे० जह० दो भ० उक्को० संखेज्जाइं भवग्गहणाइं कालादे० जहन्ने०दो अंतोमु० उक्कोसे० संखेज्जं कालं एवतियं० १, सो चेव जहन्नकालट्ठितीएसु उववन्नो एस चेव वत्तव्वया सव्वा २, सो चेव उक्कोसकालट्ठितिएसु उववन्नो एसा चेव बेंदियस्स लद्धी नवरं भवादे० जह० दो भवग्ग० उक्कोसेणं अट्ठ भवग्गहणाइं कालादे० जह० बावीसं वाससहस्साइं अंतोमुहुत्तमब्भ०उक्को०अट्ठासीतिं वाससहस्साइं अडयालीसाए संवच्छरेहिं अब्भहियाइं एवतियं० ३, सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ तस्सवि एस चेव वत्तव्वया तिसुवि गमएसु नवरं इमाइं सत्त णाणत्ताइं सरीरोगाहणा जहा पुढविकाइयाणं णो सम्मदिट्ठी मिच्छदिट्ठी णो सम्मामिच्छादिट्ठी दो अन्नाणा णियमं णो मणजोगी णो वयजोगी कायजोगी ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं अज्झवसाणा अप-

सत्था अणुबंधो जहा ठिती संवेहो तहेव आदिल्लेसु दोसु गमएसु तइयगमए भवादेसो तहेव अट्ठ भवग्गहणाइं कालादेसेणं जहन्नेणं बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठासीतिं वाससहस्साइं चउहिं अंतोमुहुत्तेहिं अब्भहियाइं ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ एयस्सवि ओहियगमगसरिसा तिन्नि गमगा भाणियव्वा नवरं तिसुवि गमएसु ठिती जहन्नेणं बारस संवच्छराइं उक्कोसेणवि बारस संवच्छराइं, एवं अणुबंधोवि, भवादे० जह० दो भवग्गहणाइं उक्कोसेणं अट्ठ भवग्गहणाइं, कालादे० उवजुंजिऊण भाणियव्वं जाव णवमे गमए जहन्नेणं बावीसं वाससहस्साइं-बारसहिं संवच्छरेहिं अब्भहि० उक्कोसे० अट्ठासीती वाससहस्साइं अडयालीसाए संवच्छरेहिं अब्भहियाइं एवतियं ९ ॥ जइ तेइंदिएहिंतो उववज्जइ एवं चेव नव गमगा भाणियव्वा नवरं आदिल्लेसु तिसुवि गमएसु सरीरोगाहणा जहन्नेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणं तिन्नि गाउयाइं तिन्नि इंदियाइं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं एगूणपन्नं राइंदियाइं, तइयगमए कालादेसेणं जहन्नेणं बावीसं वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं अट्ठासीतिं वाससहस्साइं छन्नउइं राइंदियसयमब्भहियाइं एवतियं०, मज्झिमा तिन्नि गमगा तहेव पच्छिमावि तिन्नि गमगा तहेव नवरं ठिती जहन्नेणं एकूणपन्नं राइंदियाइं उक्कोसेणवि एगूणपन्नं राइंदियाइं संवेहो उवजुंजिऊण भाणियव्वो ९ ॥ जइ चउरिंदिएहिंतो उववज्जइ एवं चेव चउरिंदियाणवि नव गमगा भाणियव्वा नवरं एतेसु चेव ठाणेसु नाणत्ता भाणियव्वा सरीरोगाहणा जहन्नेणं अंगुलस्स असंखेज्जइभागं उक्कोसे० चत्तारि

गाउयाइं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेण य छम्मासा एवं अणुबंधोवि चत्तारि इंदियाइं सेसं तहेव जाव नवमगमए कालादेसेणं जह० बावीसं वाससहस्साइं छहिं मासेहिं अब्भहियाइं उक्कोसेणं अट्ठासीतिं वास-सहस्साइं चउवीसाए मासेहिं अब्भहियाइं एवतियं ९ ॥ जइ पंचिंदियतिरिक्खजोणिएहिंतो उवव० किं सन्निपंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति असन्निपंचिंदियतिरिक्खजोणिए० ?, गोयमा ! सन्निपंचिं-दिय०, जइ असन्निपंचिंदिय० किं जलयरेहिंतो उ० जाव किं पज्जत्तएहिंतो उववज्जंति अपज्जत्तएहिंतो उव०?, गोयमा ! पज्जत्तएहिंतोवि उवव० अपज्जत्तएहिंतोवि उवव०, असन्निपंचिंदियतिरिक्खजोणिए णं भंते ! जे भविए पुढविक्काइएसु उववज्जित्तए से णं भंते ! केवति ?, गो० ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं बावीसं वाससह०, ते णं भंते ! जीवा एवं जहेव बेइंदियस्स ओहियगमए लद्धी तहेव नवरं सरीरोगाहणा जह० अंगुलस्स असंखे० भा० उक्को० जोयणसह० पंचिंदिया ठिती अणुबं० जह० अंतोमु० उक्को० पुव्वको० सेसं तं चेव भवादे० जह० दो भवग्गहणाइं उक्को० अट्ठ भवग्गहणाइं, कालादेसेणं जह० दो अंतोमु० उक्को० चत्तारि पुव्वकोडीओ अट्ठासीतीए वाससहस्सेहिं अब्भहियाओ एवतियं० णवसुवि गमएसु कायसंवेहो भवादे० जहन्नेणं दो भवग्गहणाइं उक्को-से० अट्ठ भवग्गहणाइं कालादे० उवजुज्जिऊण भाणियव्वं, नवरं मज्झिमएसु तिसु गमएसु जहेव बेइंदियस्स पच्छिल्लएसु तिसु गमएसु जहा एतस्स चेव पढमगमएसु, नवरं ठिती अणुबंधो जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्वकोडी, सेसं तं चेव जाव नवमगमएसु जह० पुव्वकोडी० बावीसाए वाससहस्सेहिं अब्भहिया उक्कोसेणं

चत्तारि पुव्वकोडीओ अट्ठासीतीए वाससहस्सेहिं अब्भहियाओ एवतियं कालं सेविज्जा ९॥ जइ सन्निपंचिंदियतिरिक्खजोणिए किं संखेज्जवासाउय० असंखेज्जवासाउय० ?, गोयमा ! संखेज्जवासाउय० णो असंखेज्जवासाउय० ?, जइ संखेज्जवासाउय० किं जलयरेहिंतो सेसं जहा असन्नीणं जाव ते णं भंते ! जीवा एगसमएणं केवतिया उववज्जंति एवं जहा रयणप्पभाए उववज्जमाणस्स सन्निस्स तहेव इहवि, नवरं ओगाहणा जहन्नेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणं जोयणसहस्सं सेसं तहेव जाव कालादेसेणं जहन्नेणं दो अंतोमुहुत्ता उक्कोसेणं चत्तारि पुव्वको० अट्ठासीतीए वाससहस्सेहिं अब्भहियाओ एवतियं०, एवं संवेहो णवसुवि गमएसु जहा असन्नीणं तहेव निरवसेसं लद्धी से आदिल्लएसु तिसुवि गमएसु एस चेव मज्झिल्लएसु तिसुवि गमएसु एस चेव नवरं इमाइं नव णाणत्ताइं ओगाहणा जहन्नेणं अंगुलस्स असंखेज्जति० उक्को० अंगु० असंखे० तिन्नि लेस्साओ मिच्छादिट्ठी दो अन्नाणा कायजोगी तिन्नि समुग्घाया ठिती जहन्नेणं अंतोमुहुत्तं उक्को० अंतोमु० अप्पसत्था अज्झवसाणा अणुबंधो जहा ठिती सेसं तं चेव पच्छिल्लएसु तिसुवि गमएसु जहेव पढमगमए णवरं ठिती अणुबंधो जहन्नेणं पुव्वकोडी उक्कोसेणवि पुव्वकोडी सेसं तं चेव ९ ( सूत्रं ७०२ )॥

'जइ बेइंदिए'त्यादि, 'बारस जोयणाइं'ति यदुक्तं तच्छङ्खमाश्रित्य, यदाह—"संखो पुण बारस जोयणाइं"ति [ शङ्खः पुनर्द्वादश योजनानि । ] 'सम्मदिट्ठीवि'त्ति एतच्चोच्यते सास्वादनसम्यक्त्वापेक्षयेति, इयं च वक्तव्यतौघिकद्वीन्द्रियस्यौघिकपृथिवीकायिकेषु, एवमेतस्य जघन्यस्थितिष्वपि तस्यैवोत्कृष्टस्थितिपूत्पत्तौ संवेधे विशेषोऽत एवाह—

'नवर'मित्यादि, 'अट्ठ भवग्गहणाइं'ति एकपक्षस्योत्कृष्टस्थितिकत्वात् 'अडयालीसाए संवच्छरेहिं अब्भहियाइं'ति चतुर्षु द्वीन्द्रियभवेषु द्वादशाब्दमानेष्वष्टचत्वारिंशत्संवत्सरा भवन्ति तैरभ्यधिकान्यष्टाशीतिर्वर्षसहस्राणीति, द्वितीयस्यापि गमत्रयस्यैषैव वक्तव्यता विशेषं त्वाह—'नवर'मित्यादि, इह सप्तनानात्वानि शरीरावगाहना यथा पृथिवीकायिकानामङ्गुलासङ्ख्येयभागमानमित्यर्थः, प्राक्तनगमत्रये तु द्वादशयोजनमानाऽप्युक्तेति १, तथा 'नो सम्मदिट्ठी' जघन्यस्थितिकतया सासादनसम्यग्दृष्टीनामनुत्पादात्, प्राक्तनगमेषु तु सम्यग्दृष्टिरप्युक्तोऽजघन्यस्थितिकस्यापि तेषु भावात् २, तथा द्वे अज्ञाने प्राक् च ज्ञाने अप्युक्ते ३, तथा योगद्वारे जघन्यस्थितिकत्वेनापर्याप्तकत्वान्न वाग्योगः प्राक् चासावप्युक्तः ४, तथा स्थितिरिहान्तर्मुहूर्त्तमेव प्राक् च संवत्सरद्वादशकमपि ५, तथाऽध्यवसानानीहाप्रशस्तान्येव प्राक् चोभयरूपाणि ६, सप्तमं नानात्वमनुबन्ध इति, संवेधस्तु द्वितीयत्रयस्याद्ययोर्द्वयोर्गमयोरुत्कर्षतो भवादेशेन सङ्ख्येयभवलक्षणः कालादेशेन च सङ्ख्येयकाललक्षणः ७, तृतीये तु विशेषमाह—'तइए गमए'इत्यादि, अन्त्यगमत्रये 'कालादेसेणं उवजुज्जिऊण भाणियव्वं'ति यत्तदेवं प्रथमे गमे कालत उत्कर्षतोऽष्टाशीतिवर्षसहस्राण्यष्टचत्वारिंशता वर्षैरधिकानि द्वितीये त्वष्टचत्वारिंशद् वर्षाण्यन्तर्मुहूर्त्तचतुष्टयाधिकानि तृतीये तु संवेधो लिखित एवास्ते ॥ अथ त्रीन्द्रियेभ्यस्तमुत्पादयन्नाह—'जइ तेइंदी'त्यादि, 'छन्नउयराइंदियसयअब्भहियाइं'ति इह तृतीयगमेऽष्टौ भवास्तत्र च चतुर्षु त्रीन्द्रियभवेषूत्कर्षत एकोनपञ्चाशद्रात्रिन्दिवप्रमाणेषु यथोक्तं कालमानं भवतीति, 'मज्झिमा तिन्नि गमा तहेव'त्ति यथा मध्यमा द्वीन्द्रियगमाः, 'संवेहो उवउज्जिऊण भाणियव्वो'त्ति स च पश्चिमगमत्रये भवादेशेनोत्कर्षतः प्रत्येकमष्टौ भवग्रहणानि, कालादेशेन तु पश्चिमगमत्रयस्य

प्रथमगमे तृतीयगमे चोत्कर्षतोऽष्टाशीतिर्वर्षसहस्राणि षण्णवत्यधिकरात्रिन्दिवशताधिकानि द्वितीये तु षण्णवत्युत्तरं दिनशतमन्तर्मुहूर्त्तचतुष्टयाभ्यधिकमिति ॥ अथ चतुरिन्द्रियेभ्यस्तमुत्पादयन्नाह—'जई'त्यादि, नवरं 'एएसु चेव ठाणेसु'त्ति वक्ष्यमाणेष्ववगाहनादिषु नानात्वानि—द्वीन्द्रियत्रीन्द्रियप्रकरणापेक्षया चतुरिन्द्रियप्रकरणे विशेषभणितव्यानि भवन्ति, तान्येव दर्शयति—'सरीरे'त्यादि, 'सेसं तहेव'त्ति 'शेषम्' उपपातादिद्वारजातं तथैव—यथा त्रीन्द्रियस्य, यस्तु संवेधे विशेषो न दर्शितः स स्वयमभ्यूह्य इति ॥ अथ पञ्चेन्द्रियतिर्यग्भ्यस्तमुत्पादयन्नाह—'जई'त्यादि, 'उक्कोसेणं अट्ठ भवग्गहणाइं'ति अनेनेदमवगम्यते—यथोत्कर्षतः पञ्चेन्द्रियतिरश्चो निरन्तरमष्टौ भवा भवन्ति एवं समानभवान्तरिता अपि भवान्तरैः सहाष्टैव भवन्तीति, 'कालादेसेणं उवउज्जिऊण भाणियव्वं'ति तत्र प्रथमे गमे कालतः संवेधः सूत्रे दर्शित एव, द्वितीये तूत्कृष्टोऽसौ चतस्रः पूर्वकोट्यश्चतुर्भिरन्तर्मुहूर्त्तैरधिकाः, तृतीये तु ता एवाष्टाशीत्या वर्षसहस्रैरधिकाः, उत्तरगमेषु त्वतिदेशद्वारेण सूत्रोक्त एवासाववसेय इति ॥ अथ सञ्ज्ञिपञ्चेन्द्रियेभ्यस्तमुत्पादयन्नाह—'जइ सन्नी'त्यादि, 'एवं संवेहो नवसु गमएसु'इत्यादि, 'एवम्' उक्ताभिलापेन संवेधो नवस्वपि गमेषु यथाऽसञ्ज्ञिनां तथैव निरवशेष इह वाच्यः, असञ्ज्ञिनां सञ्ज्ञिनां च पृथिवीकायिकेषूत्पित्सूनां जघन्यतोऽन्तर्मुहूर्त्तायुष्कत्वात् उत्कर्षतश्च पूर्वकोट्यायुष्कत्वादिति । 'लद्धी से'इत्यादि, 'लब्धिः' परिमाणसंहननादिप्राप्तिः 'से' तस्य पृथिवीकायिकेषूत्पित्सोः सञ्ज्ञिन आद्ये गमत्रये 'एस चेव'त्ति या रत्नप्रभायामुत्पित्सोस्तस्यैव मध्यमेऽपि गमत्रये एषैव लब्धिः, विशेषस्त्वयं—'नवर'मित्यादि, नव च नानात्वानि

जाव संवेहोत्ति, जइ संखेज्जवासाउयसन्निमणुस्से० संखेज्जवासाउयाणं जहेव असुरकुमारेसु उववज्जमाणाणं तहेव नव गमगा भाणियव्वा, नवरं जोतिसियठितिं संवेहं च जाणेज्जा, सेसं तं चेव निरवसेसं। सेवं भंते! २ त्ति ॥ ( सूत्रं ७१४ ) ॥ २४–२३ ॥

'जहन्नेणं दो अट्ठभागपलिओवमाइं'ति द्वौ पल्योपमाष्टभागावित्यर्थः तत्रैकोऽसङ्ख्यातायुष्कसम्बन्धी द्वितीयस्तु तारकज्योतिष्कसम्बन्धीति, 'उक्कोसेणं चत्तारि पलिओवमाइं वाससयसहस्समब्भहियाइं'ति त्रीण्यसङ्ख्यातायुःसत्कानि एकं च सातिरेकं चन्द्रविमानज्योतिष्कसत्कमिति, तृतीयगमे 'ठिई जहन्नेणं पलिओवमं वाससयसहस्समब्भहियं'ति यद्यप्यसङ्ख्यातवर्षायुषां सातिरेका पूर्वकोटी जघन्यतः स्थितिर्भवति तथाऽपीह पल्योपमं वर्षलक्षाभ्यधिकमुक्तं, एतत्प्रमाणायुष्केषु ज्योतिष्केषूत्पत्स्यमानत्वाद्, यतोऽसङ्ख्यातवर्षायुः स्वायुषो बृहत्तरायुष्केषु देवेषु नोत्पद्यते, एतच्च प्रागुपदर्शितमेव, चतुर्थे गमे जघन्यकालस्थितिकोऽसङ्ख्यातवर्षायुरौघिकेषु ज्योतिष्केषूत्पन्नः, तत्र चासङ्ख्यातायुषो यद्यपि पल्योपमाष्टभागाद्धीनतरमपि जघन्यत आयुष्कं भवति तथाऽपि ज्योतिषां ततो हीनतरं नास्ति, स्वायुस्तुल्यायुर्बन्धकाश्चोत्कर्षतोऽसङ्ख्यातवर्षायुष इतीह जघन्यस्थितिकास्ते पल्योपमाष्टभागायुषो भवन्ति, ते च विमलवाहनादिकुलकरकालात्पूर्वतरकालभुवो हस्त्यादयः औघिकज्योतिष्का अप्येवंविधा एव तदुत्पत्तिस्थानं भवन्तीति 'जहन्नेणं अट्ठभागपलिओवमट्ठिईएसु' इत्याद्युक्तम्, 'ओगाहणा जहन्नेणं धणुहपुहुत्तं'ति यदुक्तं तत्पल्योपमाष्टभागमानायुषो विमलवाहनादिकुलकरकालात्पूर्वतरकालभाविनो हस्त्यादिव्यतिरिक्तक्षुद्रकायचतुष्पदानपेक्ष्यावगन्तव्यं, 'उक्कोसेणं सातिरेगाइं अट्ठारसधणुसयाइं'ति

एतच्च विमलवाहनकुलकरपूर्वतरकालभाविहस्त्यादीनपेक्ष्योक्तं, यतो विमलवाहनो नवधनुःशतमानावगाहनः तत्कालहस्त्यादयश्च तद्विगुणाः, तत्पूर्वतरकालभाविनश्च ते सातिरेकतत्प्रमाणा भवन्तीति, 'जहन्नकालट्ठिइयस्स एस चेव एक्को गमो'त्ति पञ्चमषष्ठगमयोरत्रैवान्तर्भावाद्, यतः पल्योपमाष्टभागमानायुषो मिथुनकतिरश्चः पञ्चमगमे षष्ठगमे च पल्योपमाष्टभागमानमेवायुर्भवतीति, प्राग् भावितं चैतदिति, सप्तमादिगमेषूत्कृष्टैव त्रिपल्योपमलक्षणा तिरश्चः स्थितिः, ज्योतिष्कस्य तु सप्तमे द्विविधा प्रतीतैव, अष्टमे पल्योपमाष्टभागरूपा, नवमे सातिरेकपल्योपमरूपा, संवेधश्चैतदनुसारेण कार्यः 'एते सत्त गम'त्ति प्रथमास्त्रयः मध्यमत्रयस्थाने एकः पश्चिमास्तु त्रय एवेत्येवं सप्त । असंख्यातवर्षायुष्कमनुष्याधिकारे—'ओगाहणा सातिरेगाइं नवधणुसयाइं'ति विमलवाहनकुलकरपूर्वकालीनमनुष्यापेक्षया, 'तिन्नि गाउयाइं'ति एतच्चैकान्तसुषमादिभाविमनुष्यापेक्षया, 'मज्झिमगमए'त्ति पूर्वोक्तनीतेस्त्रिभिरप्येक एवायमिति ॥ चतुर्विंशतितमशते त्रयोविंशतितमः ॥ २४–२३ ॥

अथ चतुर्विंशतितमोद्देशके किञ्चिल्लिख्यते—

सोहम्मदेवा णं भंते ! कओहिंतो उवव० किं नेरइएहिंतो उवव० ? भेदो जहा जोइसियउद्देसए, असंखेज्जवासाउयसन्निपंचिंदियतिरिक्खजोणिए णं भंते ! जे भविए सोहम्मगदेवेसु उवव० से णं भंते ! केवतिकाल० ?, गोयमा ! जह० पलिओवमट्ठितीएसु उक्कोसे० तिपलिओवमट्ठितीएसु उवव०, ते णं भंते ! अवसेसं

जहा जोइसिएसु उववज्जमाणस्स नवरं सम्मदिट्ठीवि मिच्छादि० णो सम्मामिच्छादिट्ठी णाणीवि अन्नाणीवि दो णाणा दो अन्नाणा नियमं ठिती जह० दो पलिओवमाइं उक्कोसेणं छप्पलिओवमाइं एवतियं १, सो चेवं जहन्नकालट्ठितिएसु उववन्नो एस चेव वत्तव्वया नवरं कालादेसेणं जहन्नेणं दो पलिओवमा उक्कोसेणं चत्तारि पलिओवमाइं एवतियं २, सो चेव उक्कोसकालट्ठितिएसु उववन्नो जहन्नेणं तिपलिओवमं उक्कोसेणवि तिपलिओवमं एस चेव वत्तव्वया नवरं ठिती जहन्नेणं तिन्नि पलिओवमाइं उक्कोसेणवि तिन्नि पलिओवमाइं सेसं तहेव कालादे० जह० छप्पलिओवमाइं उक्कोसेणवि छप्पलिओवमाइंति एवतियं ३, सो चेव अप्पणा जहन्नकालट्ठितिओ जाओ जह० पलिओवमट्ठितिएसु उक्कोसे० पलिओवमट्ठितिएसु एस चेव वत्तव्वया नवरं ओगाहणा जह० धणुहपुहुत्तं उक्कोसेणं दो गाउयाइं, ठिती जहन्नेणं पलिओवमं उक्कोसेणवि पलिओवमं सेसं तहेव, कालादे० जह० दो पलिओवमाइं उक्कोसेणंपि दो पलिओवमाइं एवतियं ६, सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ आदिल्लगमगसरिसा तिन्नि गमगा णेयव्वा नवरं ठितिं कालादेसं च जाणेज्जा ९ ॥ जइ संखेज्जवासाउयसन्निपंचिंदिय०संखेज्जवासाउयस्स जहेव असुरकुमारेसु उववज्जमाणस्स तहेव नववि गमा, नवरं ठितिं संवेहं च जाणे०, जाहे य अप्पणा जहन्नकालट्ठितिओ भवति ताहे तिसुवि गमएसु सम्मदिट्ठीवि मिच्छादि० णो सम्मामिच्छादिट्ठी दो नाणा दो अन्नाणा नियमं सेसं तं चेव ॥ जइ मणुस्सेहिंतो उववज्जंति भेदो जहेव जोतिसिएसु उववज्जमाणस्स जाव असंखेज्जवासाउयसन्निमणुस्से णं भंते! जे भविए सोहम्मे कप्पे

देवत्ताए उववज्जित्तए एवं जहेव असंखेज्जवासाउयस्स सन्निपंचिंदियतिरिक्खजोणिस्स सोहम्मे कप्पे उववज्ज-
माणस्स तहेव सत्त गमगा नवरं आदिल्लएसु दोसु गमएसु ओगाहणा जहन्ने० गाउयं उक्कोसेणं तिन्नि गाउ-
याइं, ततियगमे जहन्ने० तिन्नि गाउयाइं उक्कोसेणवि तिन्नि गाउयाइं, चउत्थगमए जहन्नेणं गाउयं उक्कोसेणवि
गाउयं, पच्छिमएसु गमएसु जह० तिन्नि गाउयाइं उक्को० तिन्नि गाउयाइं सेसं तहेव निरवसे० १॥ जइ संखेज्ज-
वासाउयसन्निमणुस्सेहिंतो एवं संखे० सन्निमणु० जहेव असुरकुमारेसु उववज्जमाणाणं तहेव णव गमगा
भा० नवरं सोहम्मदेवट्ठितिं संवेहं च जाणे०, सेसं तं चेव १॥ ईसाणदेवा णं भंते! कओहिंतो उवव० ?,
ईसाणदेवाणं एस चेव सोहम्मगदेवसरिसा वत्तव्वया नवरं असंखेज्जवासाउयसन्निपंचिंदियतिरिक्खजोणि-
यस्स जेसु ठाणेसु सोहम्मे उववज्जमाणस्स पलिओवमठितीसु ठाणेसु इहं सातिरेगं पलिओवमं कायव्वं,
चउत्थगमे ओगाहणा जहन्नेणं धणुहपुहुत्तं उक्कोसेणं सातिरेगाइं दो गाउयाइं सेसं तहेव १। असंखेज्जवासा-
उयसन्निमणुस्सस्सवि तहेव ठिती जहा पंचिंदियतिरिक्खजोणियस्स असंखेज्जवासाउयस्स ओगाहणावि जेसु
ठाणेसु गाउयं तेसु ठाणेसु इहं सातिरेगं गाउयं सेसं तहेव १। संखेज्जवासाउयाणं तिरिक्खजोणियाणं मणु-
स्साण य जहेव सोहम्मेसु उववज्जमाणाणं तहेव निरवसेसं णववि गमगा नवरं ईसाणठितिं संवेहं च जाणेज्जा
१॥ सणंकुमारदेवा णं भंते! कओहिंतो उवव० उववाओ जहा सक्करप्पभापुढविनेरइयाणं जाव पज्जत्तसंखे-
ज्जवासाउयसन्निपंचिंदियतिरिक्खजोणिए णं भंते! जे भविए सणंकुमारदेवेसु उवव० अवसेसा परिमाणा-

दीया भवादेसपज्जवसाणा सच्चेव वत्तवया भाणियवा जहा सोहम्मे उववज्जमाणस्स नवरं सणंकुमारट्ठितिं संवेहं च जाणेज्जा, जाहे य अप्पणा जहन्नकालट्ठितीओ भवति ताहे तिसुवि गमएसु पंच लेस्साओ आदिल्लाओ कायवाओ सेसं तं चेव ९ ॥ जइ मणुस्सेहिंतो उवव० मणुस्साणं जहेव सक्करप्पभाए उववज्जमाणाणं तहेव णववि गमा भाणियवा नवरं सणंकुमारट्ठितिं संवेहं च जाणेज्जा ९ ॥ माहिंदगदेवा णं भंते ! कओहिंतो उवव० जहा सणंकुमारगदेवाणं वत्तवया तहा माहिंदगदे० भाणि० नवरं माहिंदगदेवाणं ठिती सातिरेगा जाणियवा सा चेव, एवं बंभलोगदेवाणवि वत्तवया नवरं बंभलोगट्ठितिं संवेहं च जाणेज्जा एवं जाव सहस्सारो, णवरं ठितिं संवेहं च जाणेज्जा, लंतगादीणं जहन्नकालट्ठितियस्स तिरिक्खजोणियस्स तिसुवि गमएसु छप्पि लेस्साओ कायवाओ, संघयणाइं बंभलोगलंतएसु पंच आदिल्लगाणि महासुक्कसहस्सारेसु चत्तारि, तिरिक्खजोणियाणवि मणुस्साणवि, सेसं तं चेव ९ ॥ आणयदेवा णं भंते ! कओहिंतो उववज्जंति ? उववाओ जहा सहस्सारे देवाणं णवरं तिरिक्खजोणिया खोडेयवा जाव पज्जत्तसंखेज्जवासाउयसन्निमणुस्से णं भंते ! जे भविए आणयदेवेसु उववज्जित्तए मणुस्साण य वत्तवया जहेव सहस्सारेसु उववज्जमाणाणं णवरं तिन्नि संघयणाणि सेसं तहेव जाव अणुबंधो भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं सत्त भवग्गहणाइं, कालादेसेणं जहन्नेणं अट्ठारस सागरोवमाइं दोहिं वासपुहुत्तेहिं अब्भहियाइं उक्कोसेणं सत्तावन्नं सागरोवमाइं चउहिं पुवकोडीहिं अब्भहियाइं एवतियं०, एवं सेसावि अट्ठ गमगा भाणियवा नवरं ठितिं संवेहं

च जाणेज्जा, सेसं तं चेव ९। एवं जाव अच्चुयदेवा, नवरं ठितिं संवेहं च जाणेज्जा ९। चउसुवि संघयणा तिन्नि आणयादीसु। गेवेज्जगदेवा णं भंते! कओ उववज्जंति? एस चेव वत्तव्वया नवरं संघयणा दोवि, ठितिं संवेहं च जाणेज्जा। विजयवेजयंतजयंतअपराजितदेवा णं भंते! कतोहिंतो उववज्जंति?, एस चेव वत्तव्वया निरवसेसा जाव अणुबंधोत्ति, नवरं पढमं संघयणं, सेसं तहेव, भवादेसेणं जहन्नेणं तिन्नि भवग्गहणाइं उक्कोसेणं पंच भवग्गहणाइं, कालादेसेणं जहन्नेणं एक्कतीसं सागरोवमाइं दोहिं वासपुहुत्तेहिं अब्भहियाइं उक्कोसेणं छावट्ठिं सागरोवमाइं तिहिं पुव्वकोडीहिं अब्भहियाइं एवतियं, एवं सेसावि अट्ठ गमगा भाणियव्वा, नवरं ठितिं संवेहं च जाणेज्जा, मणूसे लद्धी णवसुवि गमएसु जहा गेवेज्जेसु उववज्जमाणस्स नवरं पढमसंघयणं। सव्वट्ठगसिद्धगदेवा णं भंते! कओहिंतो उवव०?, उववाओ जहेव विजयादीणं जाव से णं भंते! केवतिकालट्ठितिएसु उववज्जेज्जा?, गोयमा! जहन्नेणं तेत्तीसं सागरोवमट्ठिति० उक्कोसेणवि तेत्तीससागरोवमट्ठितीएसु उववन्नो, अवसेसा जहा विजयाइसु उववज्जंताणं नवरं भवादेसेणं तिन्नि भवग्गहणाइं कालादे० जहन्नेणं तेत्तीसं सागरोवमाइं दोहिं वासपुहुत्तेहिं अब्भहियाइं उक्कोसेणवि तेत्तीसं सागरोवमाइं दोहिं पुव्वकोडीहिं अब्भहियाइं एवतियं ९। सो चेव अप्पणा जहन्नकालट्ठितीओ जाओ एस चेव वत्तव्वया नवरं ओगाहणाठितिओ रयणिपुहुत्तवासपुहुत्ताणि सेसं तहेव संवेहं च जाणेज्जा ९। सो चेव अप्पणा उक्कोसकालट्ठितीओ जाओ एस चेव वत्तव्वया नवरं ओगाहणा जह० पंच धणुसयाइं उक्को० पंचधणुसयाइं, ठिती जह०

पुव्वकोडी उक्को० पुव्वकोडी, सेसं तहेव जाव भवादेसोत्ति, कालादे० जह० तेत्तीसं सागरोवमाइं दोहिं पुव्वकोडीहिं अब्भहियाइं उक्को० तेत्तीसं साग० दोहिवि पुव्वकोडीहिं अब्भहियाइं एवतियं कालं सेवेज्जा एवतियं कालं गतिरागतिं करेज्जा, एते तिन्नि गमगा सव्वट्ठसिद्धगदेवाणं। सेवं भंते ! २ त्ति भगवं गोयमे जाव विहरइ ॥ ( सूत्रं ७१९ ) ॥ २४-२४ ॥ समत्तं च चउवीसतिमं सयं ॥ २४॥

'जहन्नेणं पलिओवमट्ठिइएसु'त्ति सौधर्मे जघन्येनान्यस्यायुषोऽसत्त्वात्, 'उक्कोसेणं तिपलिओवमठिइएसु'त्ति यद्यपि सौधर्मे वहुतरमायुष्कमस्ति तथाऽप्युत्कर्षतस्त्रिपल्योपमायुष एव तिर्यञ्चो भवन्ति तदनतिरिक्तं च देवायुर्वध्नन्तीति, 'दो पलिओवमाइं'ति एकं तिर्यग्भवसत्कमपरं च देवभवसत्कं, 'छ पलिओवमाइं'ति त्रीणि पल्योपमानि तिर्यग्भवसत्कानि त्रीण्येव देवभवसत्कानीति, 'सो चेव अप्पणा जहन्नकालठिईओ जाओ'इत्यादिगमत्रयेऽप्येको गमः, भावना तु प्रदर्शितैव, 'जहन्नेणं धणुहपुहुत्तं'त्ति क्षुद्रकायचतुष्पदापेक्षं 'उक्कोसेणं दो गाउयाइं'ति यत्र क्षेत्रे काले वा गव्यूतमाना मनुष्या भवन्ति तत्सम्बन्धिनो हस्त्यादीनपेक्ष्योक्तमिति ॥ सङ्ख्यातायुःपञ्चेन्द्रियतिर्यगधिकारे—'जाहे व अप्पणा जहन्नकालट्ठिइओ भवई'त्यादौ 'नो सम्मामिच्छादिट्ठी'त्ति मिश्रदृष्टिर्निषेध्यो जघन्यस्थितिकस्य तदसम्भवादजघन्यस्थितिकेषु दृष्टित्रयस्यापि भावादिति, तथा ज्ञानादिद्वारेऽपि द्वे ज्ञाने वा अज्ञाने वा स्यातां, जघन्यस्थितेरन्ययोरभावादिति ॥ अथ मनुष्याधिकारे—'नवरं आदिल्लएसु दोसु गमएसु'इत्यादि, आद्यगमयोर्हि सर्वत्र धनुष्पृथक्त्वं जघन्यावगाहना उत्कृष्टा तु गव्यूतषट्कमुक्ता इह तु 'जहन्नेणं गाउय'मित्यादि, तृतीयगमे तु जघन्यत उत्कर्षतश्च षड् गव्यूता-

न्युक्तानि इह तु त्रीणि, चतुर्थे गमे तु प्राग् जघन्यतो धनुःपृथक्त्वमुत्कर्षतस्तु द्वे गव्यूते उक्ते इह तु जघन्यत उत्कर्षतश्च गव्यूतम्, एवमन्यदप्यूह्यम् ॥ ईशानकदेवाधिकारे—'सातिरेगं पलिओवमं कायव्वं'ति ईशाने सातिरेकपल्योपमस्य जघन्यस्थितिकत्वात्, तथा 'चउत्थगमए ओगाहणा जहन्नेणं धणुहपुहुत्तं'ति ये सातिरेकपल्योपमायुषस्तिर्यञ्चः सुषमांशोद्भवाः क्षुद्रतरकायास्तानपेक्ष्योक्तम्, 'उक्कोसेणं साइरेगाइं दो गाउयाइं'ति एतच्च यत्र काले सातिरेकगव्यूतमाना मनुष्या भवन्ति तत्कालभवान् हस्त्यादीनपेक्ष्योक्तं, तथा 'जेसु ठाणेसु गाउयं'ति सौधर्म्मदेवाधिकारे येषु स्थानेष्वसङ्ख्यातवर्षायुर्मनुष्याणां गव्यूतमुक्तं 'तेसु ठाणेसु इहं साइरेगं गाउयं'ति जघन्यतः सातिरेकपल्योपमस्थितिकत्वादीशानकदेवस्य प्राप्तव्यदेवस्थित्यनुसारेण चासङ्ख्यातवर्षायुर्मनुष्याणां स्थितिसद्भावात् तदनुसारेणैव च तेषामवगाहनाभावादिति ॥ सनत्कुमारदेवाधिकारे—'जाहे य अप्पणा जहन्ने'त्यादौ 'पंच लेस्साओ आदिल्लाओ कायव्वाओ'त्ति जघन्यस्थितिकस्तिर्यक् सनत्कुमारे समुत्पित्सुर्जघन्यस्थितिसामर्थ्यात्कृष्णादीनां चतसृणां लेश्यानामन्यतरस्यां परिणतो भूत्वा मरणकाले पद्मलेश्यामासाद्य म्रियते ततस्तत्रोत्पद्यते, यतोऽग्रेतनभवलेश्यापरिणामे सति जीवः परभवं गच्छतीत्यागमः, तदेवमस्य पञ्च लेश्या भवन्ति । 'लंतगाईणं जहण्णे'त्यादि, एतद्भावना चानन्तरोक्तन्यायेन कार्या, 'संघयणाइं बंभलोए लंतएसु पंच आइल्लगाणि'त्ति छेदवर्त्तिसंहननस्य चतुर्णामेव देवलोकानां गमने निबन्धनत्वात्, यदाह—"छेवट्ठेण उ गम्मइ चत्तारि उ जाव आइमा कप्पा। वड्ढेज्ज कप्पजुयलं संघयणे कीलियाईए ॥१॥" इति [ सेवार्त्तेन तु गच्छति चतुर आद्यान् कल्पान् यावत् कीलिकादिषु संहननेषु कल्पयुग्मं वर्धयेत् ॥ १ ॥ ] इति ॥ "जहन्नेणं तिन्नि भवग्गहणाइं'ति आनतादिदेवो मनुष्येभ्य

एवोत्पद्यते तेष्वेव च प्रत्यागच्छतीति जघन्यतो भवत्रयं भवतीति, एवं भवसप्तकमप्युत्कर्षतो भावनीयमिति, 'उक्कोसेणं सत्तावन्न'मित्यादि, आनतदेवानामुत्कर्षत एकोनविंशतिसागरोपमाण्यायुः, तस्य च भवत्रयभावेन सप्तपञ्चाशत्सागरोपमाणि मनुष्यभवचतुष्टयसम्बन्धिपूर्वकोटिचतुष्काभ्यधिकानि भवन्तीति ॥ चतुर्विंशतितमशते चतुर्विंशतितमः ॥ २४ ॥
॥ समाप्तं च विवरणतश्चतुर्विंशतितमं शतम् ॥ २४ ॥

चरमजिनवरेन्द्रप्रोदितार्थे परार्थे, निपुणगणधरेण स्थापितानिन्द्यसूत्रे ।
विवृतिमिह शते नो कर्त्तुमिष्टे बुधोऽपि, प्रचुरगमगभीरे किं पुनर्मादृशोऽज्ञः ? ॥ १ ॥

व्याख्यातं चतुर्विंशतितमशतम्, अथ पञ्चविंशतितममारभ्यते, तस्य चैवमभिसम्बन्धः—प्राक्तनशते जीवा उत्पादादिद्वारैश्चिन्तिता इह तु तेषामेव लेश्यादयो भावाश्चिन्त्यन्ते इत्येवंसम्बन्धस्यास्योद्देशकसङ्ग्रहगाथेयम्—

**लेसा य १ दव्व २ संठाण ३ जुम्म ४ पज्जव ५ नियंठ ६ समणा य ७। ओहे ८ भविया ९ भविए १० सम्मा ११ मिच्छे य १२ उद्देसा ॥ १ ॥ तेणं कालेणं २ रायगिहे जाव एवं वयासी—कति णं भंते ! लेस्साओ प० ?, गोयमा ! छल्लेसाओ प० तं०—कण्हलेसा जहा पढमसए वितिए उद्देसए तहेव लेस्साविभागो अप्पाबहुगं च जाव चउव्विहाणं देवाणं मीसगं अप्पाबहुगंति ॥ ( सूत्रं ७१६ ) ॥**

'लेसे'त्यादि, तत्र 'लेसा य'त्ति प्रथमोद्देशके लेश्यादयोऽर्था वाच्या इति लेश्योद्देशक एवायमुच्यते, इत्येवं सर्वत्र १

'दव'त्ति द्वितीये द्रव्याणि वाच्यानि २ 'संठाण'त्ति तृतीये संस्थानादयोऽर्थाः ३ 'जुम्म'त्ति चतुर्थे कृतयुग्मादयोऽर्थाः ४ 'पज्जव'त्ति पञ्चमे पर्यवाः ५ 'नियंठ'त्ति षष्ठे पुलाकादिका निर्ग्रन्थाः ६ 'समणा य'त्ति सप्तमे सामायिकादि-संयतादयोऽर्थाः ७ 'ओहे'त्ति अष्टमे नारकादयो यथोत्पद्यन्ते तथा वाच्यं, कथम् ?, ओघे–सामान्ये वर्त्तमाना भव्या-भव्यादिविशेषणैरविशेषिता इत्यर्थः ८ 'भविए'त्ति नवमे भव्यविशेषणा नारकादयो यथोत्पद्यन्ते तथा वाच्यम् ९ 'अभविए'त्ति दशमेऽभव्यत्वे वर्त्तमाना अभव्यविशेषणा इत्यर्थः १० 'सम्म'त्ति एकादशे सम्यग्दृष्टिविशेषणाः ११ 'मिच्छे य'त्ति द्वादशे मिथ्यात्वे वर्त्तमाना मिथ्यादृष्टिविशेषणा इत्यर्थः १२ 'उद्देस'त्ति एवमिह शते द्वादशोद्देशका भवन्तीति । तत्र प्रथमोद्देशको व्याख्यायते, तस्य चेदमादिसूत्रम्—'तेणं कालेण'मित्यादि, 'जहा पढमसए बितिए उद्देसए तहेव लेसाविभागो'त्ति स च–'नेरइयाणं भंते ! कति लेस्साओ पन्नत्ताओ ?' इत्यादि, 'अप्पाबहुयं च'त्ति तच्चैवम्–'एएसि णं भंते ! जीवाणं सलेस्साणं कण्हलेस्साण'मित्यादि, अथ कियद्दूरं तद्वाच्यमित्याह–'जाव चउविहाणं देवाण'मित्यादि, तच्चैवम्–'एएसि णं भंते ! भवणवासीणं वाणमंतराणं जोइसियाणं वेमाणियाणं देवाण य देवीण य कण्हलेसाणं जाव सुक्कलेसाण य कयरे२हिंतो ?' इत्यादि । अथ प्रथमशते उक्तमप्यासां स्वरूपं कस्मात्पुनरप्युच्यते ?, उच्यते, प्रस्तावान्तरायातत्वात्, तथाहि–इह संसारसमापन्नजीवानां योगाल्पबहुत्वं वक्तव्यमिति तत्प्रस्तावाल्लेश्याल्पबहुत्व-प्रकरणमुक्तं, तत एव लेश्याऽल्पबहुत्वप्रकरणानन्तरं संसारसमापन्नजीवांस्तद्योगाल्पबहुत्वं च प्रज्ञापयन्नाह—

**कतिविहा णं भंते ! संसारसमावन्नगा जीवा पन्नत्ता ?, गोयमा ! चोद्दसविहा संसारसमावन्नगा जीवा**

य, तं०– सुहुमअप्पज्जत्तगा १ सुहुमपज्जत्तगा २ बादरअपज्जत्तगा ३ बादरपज्जत्तगा ४ बेइंदिया अप्पज्जत्ता ५ बेइंदिया पज्जत्ता ६ एवं तेइंदिया ८ एवं चउरिंदिया १० असन्निपंचिंदिया अप्पज्जत्तगा ११ असन्निपंचिंदिया पज्जत्तगा १२ सन्निपंचिंदिया अपज्जत्तगा १३ सन्निपंचिंदिया पज्जत्तगा १४। एतेसि णं भंते! चोदसविहाणं संसारसमावन्नगाणं जीवाणं जहन्नुक्कोसगस्स जोगस्स कयरे २ जाव विसेसाहिया ?, गोयमा! सव्वत्थोवे सुहुमस्स अपज्जत्तगस्स जहन्नए जोए १ बादरस्स अपज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे २ बेंदियस्स अपज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे ३ एवं तेइंदियस्स ४ एवं चउरिंदियस्स ५ असन्निस्स पंचिंदियस्स अपज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे ६ सन्निस्स पंचिंदियस्स अपज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे ७ सुहुमस्स पज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे ८ बादरस्स पज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे ९ सुहुमस्स अपज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे १० बादरस्स अपज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे ११ सुहुमस्स पज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे १२ बादरस्स पज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे १३ बेंदियस्स पज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे १४ एवं तेंदिय एवं जाव सन्निपंचिंदियस्स पज्जत्तगस्स जहन्नए जोए असंखेज्जगुणे १८ बेंदियस्स अपज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे १९ एवं तेंदियस्सवि २० एवं चउरिंदियस्सवि २१ एवं जाव सन्निपंचिंदियस्स अपज्जत्तगस्स उक्कोसए जोए असंखे० २३ बेंदियस्स पज्जत्तगस्स उक्कोसए जोए असंखे० २४ एवं तेइंदियस्सवि पज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे

२५ चउरिंदियस्स पज्जत्तगस्स उक्कोसए असंखे० २६ असन्निपंचिंदियपज्जत्त० उक्कोसए जोए असंखेज्जगुणे २७ एवं सन्निपंचिंदियस्स पज्जत्तगस्स उक्कोसए जोए असंखेज्जगुणे २८ ( सूत्रं ७१७ ) ॥

'कइविहे'त्यादि, 'सुहुम'त्ति सूक्ष्मनामकर्मोदयात् 'अपज्जत्तग'त्ति अपर्याप्तका अपर्याप्तकनामकर्मोदयात्, एवमितरे तद्विपरीतत्वात्, 'बायर'त्ति बादरनामकर्मोदयात्, एते च चत्वारोऽपि जीवभेदाः पृथिव्याद्येकेन्द्रियाणां, 'जघन्नुक्कोसगस्स जोगस्स'त्ति जघन्यो—निकृष्टः काञ्चिद्व्यक्तिमाश्रित्य स एव च व्यक्त्यन्तरापेक्षयोत्कर्षः—उत्कृष्टो जघन्योत्कर्षः तस्य योगस्य—वीर्यान्तरायक्षयोपशमादिसमुत्थकायादिपरिस्पन्दस्य एतस्य च योगस्य चतुर्दशजीवस्थानसम्बन्धाज्जघन्योत्कर्षभेदाच्चाष्टाविंशतिविधस्याल्पबहुत्वादि जीवस्थानकविशेषाद्भवति, तत्र 'सव्वत्थोवे' इत्यादि सूक्ष्मस्य पृथिव्यादेः सूक्ष्मत्वात् शरीरस्य तस्याप्यपर्याप्तकत्वेनासम्पूर्णत्वात् तत्रापि जघन्यस्य विवक्षितत्वात् सर्वेभ्यो वक्ष्यमाणेभ्यो योगेभ्यः सकाशात्स्तोकः—सर्वस्तोको भवति जघन्यो योगः, स पुनर्वैग्रहिककार्म्मणऔदारिकपुद्गलग्रहणप्रथमसमयवर्त्ती, तदनन्तरं च समयवृद्ध्याऽजघन्योत्कृष्टो यावत्सर्वोत्कृष्टो न भवति, 'बायरस्से'त्यादि बादरजीवस्य पृथिव्यादेरपर्याप्तकजीवस्य जघन्यो योगः पूर्वोक्तापेक्षयाऽसङ्ख्यातगुणः—असङ्ख्यातगुणवृद्धो बादरत्वादेवेति, एवमुत्तरत्राप्यसङ्ख्यातगुणत्वं दृश्यम्, इह च यद्यपि पर्याप्तकत्रीन्द्रियोत्कृष्टकायापेक्षया पर्याप्तकानां द्वीन्द्रियाणां सञ्ज्ञिनामसञ्ज्ञिनां च पञ्चेन्द्रियाणामुत्कृष्टः कायः सङ्ख्यातगुणो भवति सङ्ख्यातयोजनप्रमाणत्वात् तथाऽपीह योगस्य परिस्पन्दस्य विवक्षितत्वात् तस्य च क्षयो-

पशमविशेपसामर्थ्याद् यथोक्तमसङ्ख्यातगुणत्वं न विरुध्यते, न ह्यल्पकायस्याल्प एव स्पन्दो भवति महाकायस्य वा महानेव, व्यत्ययेनापि तस्य दर्शनादिति, इह चेयं स्थापना—

| सुहुम | सुहुम | बादर | बादर | बेइंद्री | बेइंद्री | तेरिंद्री | तेरिंद्री | चउरिंद्री | चउरिंद्री | असन्नी | असन्नी | सन्नी | सन्नीप- |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अपज्जत्त | पज्जत्त | अपज्जत्त | पज्जत्त | अपज्जत्त | पज्जत्त | अप. | पज्जत्त | अपज्जत्त | पज्जत्त | अपज्जत्त | पज्जत्त | अपज्जत्त | र्या. |
| जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य | जघन्य |
| १ | ८ | असं २ | ९ | ३ | १४ | ४ | १५ | ५ | १६ | ६ | १७ | ७ | १८ |
| उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट | उत्कृष्ट |
| १० | १२ | ११ | १३ | १९ | २४ | २० | २५ | २१ | २६ | २२ | २७ | २३ | २८ |

योगाधिकारादेवेदमाह—

दो भंते ! नेरतिया पढमसमयोववन्नगा किं समजोगी किं विसमजोगी ?, गोयमा ! सिय समजोगी सिय विसमजोगी, से केणट्ठेणं भंते ! एवं वुच्चति सिय समजोगी सिय विसमजोगी ?, गोयमा ! आहारयाओ वा से अणाहारए अणाहारयाओ वा से आहारए सिय हीणे सिय तुल्ले सिय अब्भहिए जइ हीणे असंखेज्जइभागहीणे वा संखेज्जइभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अह अब्भहिए असंखेज्जइभागमब्भहिए वा संखेज्जइभागमब्भहिए वा संखेज्जगुणमब्भहिए वा असंखेज्जगुणमब्भहिए वा से तेणट्ठेणं जाव सिय विसमजोगी एवं जाव वेमाणियाणं ( सूत्रं ७१८ ) ॥

'दो भंते' इत्यादि, प्रथमः समय उपपन्नयोर्ययोस्तौ प्रथमसमयोपपन्नौ, उपपत्तिश्चेह नरकक्षेत्रप्राप्तिः सा च द्वयोरपि विग्रहेण ऋजुगत्या वा एकस्य वा विग्रहेणान्यस्य ऋजुगत्येति, 'समजोगि'त्ति समो योगो विद्यते ययोस्तौ समयोगिनौ एवं विषमयोगिनौ, 'आहारयाओ वा' इत्यादि, आहारकाद्वा—आहारकं नारकमाश्रित्य 'से'त्ति स नारकोऽनाहारकः अनाहारकाद्वा—अनाहारकं नारकमाश्रित्याहारकः, किम् ? इत्याह—'सिय हीणे'त्ति यो नारको विग्रहाभावेनागत्याहारक एवोत्पन्नोऽसौ निरन्तराहारकत्वादुपचित एव, तदपेक्षया च यो विग्रहगत्याऽनाहारको भूत्वोत्पन्नोऽसौ हीनः पूर्वमनाहारकत्वेनानुपचितत्वाद्धीनयोगत्वेन च विषमयोगी स्यादिति भावः, 'सिय तुल्ले'त्ति यौ समानसमयया विग्रहगत्याऽनाहारकौ भूत्वोत्पन्नौ ऋजुगत्या वाऽऽगत्योत्पन्नौ तयोरेक इतरापेक्षया तुल्यः समयोगी भवतीति-भावः, 'अब्भहिए'त्ति यो विग्रहाभावेनाहारक एवागतोऽसौ विग्रहगत्यनाहारकापेक्षयोपचिततरत्वेनाभ्यधिको विषमयोगीति भावः, इह च 'आहारयाओ वा से अणाहारए' इत्यनेन हीनतायाः 'अणाहारयाओ वा आहारए' इत्यनेन चाभ्यधिकताया निबन्धनमुक्तं, तुल्यतानिबन्धनं तु समानधर्मतालक्षणं प्रसिद्धत्वान्नोक्तमिति ॥ योगाधिकारादेवेदमपरमाह—

कतिविहे णं भंते ! जोए प० ?, गोयमा ! पन्नरसविहे जोए पं०, तं०—सच्चमणजोए मोसमणजोए सच्चामोसमणजोए असच्चामोसमणजोए सच्चवइजोए मोसवइजोए सच्चामोसवइजोए असच्चामोसवइजोए ओरालियसरीरकायजोए ओरालियमीसासरीरकायजोए वेउव्वियसरीरकायजोए वेउव्वियमीसासरीरकायजोगे आहारगसरीरकायजोगे आहारगमीसास० का० कम्मास०का० १५ ॥ एयस्स णं भंते ! पन्नरसविहस्स जहन्नुक्को-

सगस्स कयरे २ जाव विसेसा० ?, गोयमा ! सव्वत्थोवे कम्मगसरीरजहन्नजोए १ ओरालियमीसगस्स जहन्नजोए असंखे० २ वेउव्वियमीसगस्स जहन्नए असं० ३ ओरालियसरीरस्स जहन्नए जोए असं० ४ वेउव्वियसरीरस्स जहन्नए जोए असं० ५ कम्मगसरीरस्स उक्कोसए जोए असंखे० ६ आहारगमीसगस्स जहन्नए जोए असं० ७ तस्स चेव उक्कोसए जोए असं० ८ ओरालियमीसगस्स ९ वेउव्वियमीसगस्स १०, एएसि णं उक्कोसए जोए दोण्हवि तुल्ले असंखे०, असच्चामोसमणजोगस्स जहन्नए जोए असं० ११ आहारसरीरस्स जहन्नए जोए असंखे० १२ तिविहस्स मणजोगस्स १५ चउव्विहस्स वयजोगस्स १९ एएसि णं सत्तण्हवि तुल्ले जहन्नए जोए असं०, आहारगसरीरस्स उक्कोसए जोए असं० २० ओरालियसरीरस्स वेउव्वियस्स चउव्विहस्स य मणजोगस्स चउव्विहस्स य वइजोगस्स एएसि णं दसण्हवि तुल्ले उक्कोसए जोए असंखेज्जगुणे ३० सेवं भंते ! २ त्ति ( सूत्रं ७१९ ) ॥ पणवीसइमे सए पढमो उद्देसो २५–१ ॥

'कइविहे ण' मित्यादि, व्याख्या चास्य प्राग्वत् ॥ योगस्यैवाल्पबहुत्वं प्रकारान्तरेणाह—'एयस्स ण' मित्यादि, इहापि योगः परिस्पन्द एव, इह चेयं स्थापना—

| १ | २ | ३ | ४ | १ | २ | ३ | ४ | १ | २ | ३ | ४ मिश्र | ५ | ६ | ७ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सत्यमनो | असत्यमन | मिश्रमन | असत्यामृ- | सत्यवाक् | असत्यवाक् | मिश्रवाक् | असत्यामृ- | औदारिक | ओदारिकमिश्र | वैक्रिय | वैक्रिय | आहारक | आहारकमिश्र | कार्मण |
| जघन्य १२ | जघन्य १२ | जघन्य १२ | जघन्य १० | जघन्य १२ | जघन्य १२ | जघन्य १२ | जघन्य १२ | जघन्य ४ | जघन्य २ | जघन्य ५ | जघन्य ३ | जघन्य ११ | जघन्य ७ | जघन्य १ |
| उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट १४ | उत्कृष्ट ९ | उत्कृष्ट १४ | उत्कृष्ट ५ | उत्कृष्ट १३ | उत्कृष्ट ८ | उत्कृष्ट ६ |

प्रथमोद्देशके जीवद्रव्याणां लेश्यादीनां परिमाणमुक्तं, द्वितीये तु द्रव्यप्रकाराणां तदुच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

कतिविहा णं भंते ! दव्वा पन्नत्ता ?, गोयमा ! दुविहा दव्वा पं० तं०—जीवदव्वा य अजीवदव्वा य, अजीवदव्वा णं भंते ! कतिविहा प० ?, गोयमा ! दुविहा प०, तंजहा—रूविअजीवदव्वा य अरूविअजीवदव्वा य एवं एएणं अभिलावेणं जहा अजीवपज्जवा जाव से तेणट्ठेणं गोयमा ! एवं वुच्चइ ते णं नो संखेज्जा नो असंखेज्जा अणंता । जीवदव्वा णं भंते ! किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, से केणट्ठेणं भंते ! एवं वुच्चइ जीवदव्वा णं नो संखेज्जा नो असंखेज्जा अणंता ?, गोयमा ! असंखेज्जा नेरइया जाव असंखेज्जा वाउक्काइया वणस्सइकाइया अणंता असंखिज्जा बेंदिया एवं जाव वेमाणिया अणंता सिद्धा से तेणट्ठेणं जाव अणंता ( सूत्रं ७२० ) ॥

'कइविहा ण' मित्यादि, 'जहा अजीवपज्जव'त्ति यथा प्रज्ञापनाया विशेषाभिधाने पञ्चमे पदे जीवपर्यवाः पठितास्तथेहाजीवद्रव्यसूत्राण्यध्येयानि, तानि चैवम्—'अरूविअजीवदव्वा णं भंते ! कतिविहा पन्नत्ता ?, गोयमा ! दसविहा प०, तं०—धम्मत्थिकाए' इत्यादि, तथा 'रूविअजीवदव्वा णं भंते ! कतिविहा पन्नत्ता ?, गोयमा !

दसविहा प०, तं०—खंधा इत्यादि, तथा 'ते णं भंते ! किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! अणंता परमाणू अणंता दुपएसिया खंधा अणंता तिपएसिया खंधा जाव अणंता अणंतपएसिया खंध'त्ति ॥ द्रव्याधिकारादेवेदमाह—

जीवदव्वाणं भंते ! अजीवदव्वा परिभोगत्ताए हव्वमागच्छंति अजीवदव्वाणं जीवदव्वा परिभोगत्ताए हव्वमागच्छंति ?, गोयमा ! जीवदव्वाणं अजीवदव्वा परिभोगत्ताए हव्वमागच्छंति नो अजीवदव्वाणं जीवदव्वा परिभोगत्ताए हव्वमागच्छंति, से केणट्ठेणं भंते ! एवं वुच्चइ जाव हव्वमागच्छंति ?, गोयमा ! जीवदव्वाणं अजीवदव्वे परियादियंति अजीव० २ ओरालियं वेउव्वियं आहारगं तेयगं कम्मगं सोइंदियं जाव फासिंदियं मणजोगं वइजोगं कायजोगं आणापाणत्तं च निव्वत्तियंति से तेणट्ठेणं जाव हव्वमागच्छंति, नेरतिया णं भंते ! अजीवदव्वा परिभोगत्ताए हव्वमागच्छंति अजीवदव्वाणं नेरतिया परिभोगत्ताए० ?, गोयमा ! नेरतियाणं अजीवदव्वा जाव हव्वमागच्छंति नो अजीवदव्वाणं नेरतिया हव्वमागच्छंति, से केणट्ठेणं ?, गोयमा ! नेरतिया अजीवदव्वे परियादियंति अ० २ वेउव्वियतेयगकम्मगसोइंदियजाव फासिंदियं आणापाणुत्तं च निव्वत्तियंति, से तेणट्ठेणं गोयमा ! एवं वुच्चइ जाव वेमाणिया नवरं सरीरइंदियजोगा भाणियव्वा जस्स जे अत्थि ( सूत्रं ७२१ ) ॥

'जीवदव्वाणं भंते ! अजीवदव्वे' त्यादि, इह जीवद्रव्याणि परिभोजकानि सचेतनत्वेन ग्राहकत्वात् इतराणि तु परिभोग्यान्यचेतनतया ग्राह्यत्वादिति ॥ द्रव्याधिकारादेवेदमाह—

से नूणं भंते ! असंखेज्जे लोए अणंताइं दव्वाइं आगासे भइयव्वाइं ?, हंता गोयमा ! असंखेज्जे लोए जाव भवियव्वाइं ॥ लोगस्स णं भंते ! एगंमि आगासपएसे कतिदिसिं पोग्गला चिज्जंति ?, गोयमा ! निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं, लोगस्स णं भंते ! एगंमि आगासपएसे कतिदिसिं पोग्गला छिज्जंति एवं चेव, एवं उवचिज्जंति एवं अवचिज्जंति ( सूत्रं ७२२ ) ॥

'से नूण' मित्यादि, 'असंखेज्ज'त्ति असङ्ख्यातप्रदेशात्मके इत्यर्थः 'अणंताइं दव्वाइं'ति जीवपरमाण्वादीनि 'आगासे भइयव्वाइं'ति काक्काऽस्य पाठः सप्तम्याश्च षष्ठ्यर्थत्वादाकाशस्य 'भक्तव्यानि' भर्त्तव्यानि धारणीयानीत्यर्थः, पृच्छतोऽयमभिप्रायः—कथमसङ्ख्यातप्रदेशात्मके लोकाकाशेऽनन्तानां द्रव्याणामवस्थानं ?, 'हंता' इत्यादिना तत्र तेषामनन्तानामप्यवस्थानमावेदितम्, आवेदयतश्चायमभिप्रायः—यथा प्रतिनियतेऽपवरकाकाशे प्रदीपप्रभापुद्गलपरिपूर्णेऽप्यपरापरप्रदीपप्रभापुद्गला अवतिष्ठन्ते तथाविधपुद्गलपरिणामसामर्थ्यात् एवमसङ्ख्यातेऽपि लोके तेष्वेव २ प्रदेशेषु द्रव्याणां तथाविधपरिणामवशेनावस्थानादनन्तानामपि तेषामवस्थानमविरुद्धमिति ॥ असङ्ख्यातलोकेऽनन्तद्रव्याणामवस्थानमुक्तं, तच्चैकैकस्मिन् प्रदेशे तेषां चयापचयादिमत्स्वतीत्यत आह—'लोगस्से'त्यादि ॥ 'कतिदिसिं पोग्गला चिज्जंति'त्ति कतिभ्यो दिग्भ्य आगत्यैकत्राकाशप्रदेशे 'चीयन्ते' लीयन्ते 'छिज्जंति'त्ति व्यतिरिक्ता भवन्ति 'उवचिज्जंति'

त्ति स्कन्धरूपाः पुद्गलाः पुद्गलान्तरसम्पर्कादुपचिता भवन्ति 'अवचिज्जंति'त्ति स्कन्धरूपा एव प्रदेशविचटनेनापचीयन्ते । द्रव्याधिकारादेवेदमाह—

जीवे णं भंते ! जाइं दव्वाइं ओरालियसरीरत्ताए गेण्हइ ताइं किं ठियाइं गेण्हइ अठियाइं गेण्हइ ?, गोयमा ! ठियाइंपि गेण्हइ अठियाइंपि गेण्हइ, ताइं भंते ! किं दव्वओ गेण्हइ खेत्तओ गेण्हइ कालओ गेण्हइ भावओ गेण्हइ ?, गोयमा ! दव्वओवि गेण्हइ खेत्तओवि गेण्हइ कालओवि गेण्हइ भावओवि गेण्हइ ताइं दव्वओ अणंतपएसियाइं दव्वाइं खेत्तओ असंखेज्जपएसोगाढाइं एवं जहा पन्नवणाए पढमे आहारुद्देसए जाव निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं ॥ जीवे णं भंते ! जाइं दव्वाइं वेउव्वियसरीरत्ताए गेण्हइ ताइं किं ठियाइं गे० अठियाइं गे० ?, एवं चेव नवरं नियमं छद्दिसिं एवं आहारगसरीरत्ताएवि ॥ जीवे णं भंते ! जाइं दव्वाइं तेयगसरीरत्ताए गिण्हइ पुच्छा, गोयमा ! ठियाइं गेण्हइ नो अठियाइं गेण्हइ सेसं जहा ओरालियसरीरस्स कम्मगसरीरे एवं चेव एवं जाव भावओवि गिण्हइ, जाइं दव्वाइं दव्वओ गे० ताइं किं एगपएसियाइं गेण्हइ दुपएसियाइं गेण्हइ ? एवं जहा भासापदे जाव अणुपुव्विं गे० नो अणाणुपुव्विं गेण्हइ, ताइं भंते ! कतिदिसिं गेण्हइ ?, गोयमा ! निव्वाघाएणं जहा ओरालियस्स ॥ जीवे णं भंते ! जाइं दव्वाइं सोइंदियत्ताए गे० जहा वेउव्वियसरीरं एवं जाव जिब्भिंदियत्ताए फासिंदियत्ताए जहा ओरालियसरीरं मणजोगत्ताए जहा कम्मगसरीरं नवरं नियमं

**छद्दिसिं एवं वइजोगत्ताएंवि कायजोगत्ताएवि जहा ओरालियसरीरस्स । जीवे णं भंते ! जाइं दव्वाइं आणापाणत्ताए गे० जहेव ओरालियसरीरत्ताए जाव सिय पंचदिसिं । सेवं भंते २त्ति । केइ चउवीसदंडएणं एयाणि पदाणि भन्नंति जस्स जं अत्थि ( सूत्रं ७२३ ) ॥ २५-२ ॥**

'जीवे ण'मित्यादि, 'ठियाइं'ति स्थितानि-किं जीवप्रदेशावगाढक्षेत्रस्याभ्यन्तरवर्तीनि अस्थितानि च-तदनन्तरवर्तीनि, तानि पुनरौदारिकशरीरपरिणामविशेषादाकृष्य गृह्णाति, अन्ये त्वाहुः-स्थितानि तानि यानि नैजन्ते तद्विपरीतानि त्वस्थितानि, 'किं दव्वओ गेण्हंति' किं द्रव्यमाश्रित्य गृह्णाति ? द्रव्यतः किंस्वरूपाणि गृह्णातीत्यर्थः, एवं क्षेत्रतः-क्षेत्रमाश्रित्य कतिप्रदेशावगाढानीत्यर्थः ॥ वैक्रियशरीराधिकारे-'नियमं छद्दिसिं'ति यदुक्तं तत्रायमभिप्रायः-वैक्रियशरीरी पञ्चेन्द्रिय एव प्रायो भवति स च त्रसनाड्या मध्ये एव तत्र च षण्णामपि दिशामनावृतत्वमलोकेन विवक्षितलोकदेशस्येत्यत उच्यते-'नियमं छद्दिसिं'ति, यच्च वायुकायिकानां त्रसनाड्या बहिरपि वैक्रियशरीरं भवति तदिह न विवक्षितं अप्रधानत्वात्तस्य, तथाविधलोकान्तनिष्कुटे वा वैक्रियशरीरी वायुर्न संभवतीति ॥ तैजससूत्रे—'ठियाइं गेण्हइ'त्ति जीवावगाहक्षेत्राभ्यन्तरीभूतान्येव गृह्णाति 'नो अठियाइं गिण्हइ'त्ति न तदनन्तरवर्तीनि गृह्णाति, तस्याकर्षपरिणामाभावात्, अथवा स्थितानि-स्थिराणि गृह्णाति नो अस्थितानि-अस्थिराणि तथाविधस्वभावत्वात् 'जहा भासापदे'त्ति यथा प्रज्ञापनाया एकादशे पदे तथा वाच्यं, तच्च 'तिपएसियाइं गिण्हाति जाव अणंतपएसियाइं गिण्हइ' इत्यादि, श्रोत्रेन्द्रियसूत्रे-'जहा वेउव्वियसरीरं'ति यथा वैक्रियशरीरद्रव्यग्रहणं स्थितास्थितद्रव्यविषयं षड्दिक्कं च एवमिदमपि,

श्रोत्रेन्द्रियद्रव्यग्रहणं हि नाडीमध्य एव तत्र च 'सिय तिदिसि'मित्यादि नास्ति व्याघाताभावादिति । 'फासिंदियत्ताए जहा ओरालियसरीरं'ति, अयमर्थः—स्पर्शनेन्द्रियतया तथा द्रव्याणि गृह्णाति यथौदारिकशरीरं स्थितास्थितानि षड्दिगागतप्रभृतीनि चेति भावः,'मणजोगत्ताए जहा कम्मगसरीरं नवरं नियमं छद्दिसिं'ति मनोयोगतया तथा द्रव्याणि गृह्णाति यथा कार्म्मणं, स्थितान्येव गृह्णातीति भावः, केवलं तत्र व्याघातेनेत्याद्युक्तं इह तु नियमात् षड्दिशीत्येवं वाच्यं, नाडीमध्य एव मनोद्रव्यग्रहणभावात्, अत्रसानां हि तन्नास्तीति, 'एवं वइजोगत्ताएवि'त्ति मनोद्रव्यवद्वाग्द्रव्याणि गृह्णातीत्यर्थः, 'कायजोगत्ताए जहा ओरालियसरीरस्स'त्ति काययोगद्रव्याणि स्थितास्थितानि षड्दिगागतप्रभृतीनि चेत्यर्थः । 'केइ' इत्यादि तत्र पञ्च शरीराणि पञ्चेन्द्रियाणि त्रयो मनोयोगादयः आनप्राणं चेति सर्वाणि चतुर्दश पदानि तत एतदाश्रिताश्चतुर्दशैव दण्डका भवन्तीति ॥ पञ्चविंशतितमशते द्वितीयः ॥ २५।२ ॥

---

द्वितीयोद्देशके द्रव्याण्युक्तानि, तेषु च पुद्गला उक्तास्ते च प्रायः संस्थानवन्तो भवन्तीत्यतस्तृतीये संस्थानान्युच्यन्ते, इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

कति णं भंते ! संठाणा प० ?, गोयमा !-छ संठाणा प०, तं०—परिमंडले वट्टे तंसे चउरंसे आयते अणित्थंथे, परिमंडला णं भंते ! संठाणा दव्वट्ठयाए किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखे० नो असंखे० अणंता, वट्टा णं भंते ! संठाणा एवं चेव एवं जाव अणित्थंथा एवं पएसट्ठयाएवि, एएसि णं भंते !

जत्थ णं भंते ! एगे परिमंडले संठाणे जवमज्झे तत्थ परिमंडला संठाणा किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखे० नो असं० अणंता । वट्टा णं भंते ! संठाणा किं संखेज्जा असं० चेव एवं जाव आयता । जत्थ णं भंते ! एगे वट्टे संठाणे जवमज्झे तत्थ परिमंडला संठाणा एवं चेव वट्टा संठाणा एवं चेव एवं जाव आयता, एवं एक्केक्केणं संठाणेणं पंचवि चारेयव्वा, जत्थ णं भंते ! इमीसे रयणप्पभाए पुढवीए एगे परिमंडले संठाणे जवमज्झे तत्थ णं परिमंडलासंठाणा किं संखेज्जा पुच्छा, गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, वट्टा णं भंते ! संठाणा किं संखे० पुच्छा, गोयमा ! नो संखे० नो असंखेज्जा अणंता एवं चेव जाव आयता, जत्थ णं भंते ! इमीसे रयण० पुढवीए एगे वट्टे संठाणे जवमज्झे तत्थ णं परिमंडला संठाणा किं संखेज्जा० ? पुच्छा, गोयमा ! नो संखे० नो असं० अणंता, वट्टा संठाणा एवं चेव जाव आयता, एवं पुणरवि एक्केक्केणं संठाणेणं पंचवि चारेयव्वा जहेव हेट्ठिल्ला जाव आयताणं एवं जाव अहेसत्तमाए एवं कप्पेसुवि जाव ईसी-पब्भाराए पुढवीए ( सूत्रं ७२५ ) ॥

'कइ ण' मित्यादि, इह षष्ठसंस्थानस्य तदन्यसंयोगनिष्पन्नत्वेनाविवक्षणात् पञ्चेत्युक्तम् ॥ अथ प्रकारान्तरेण तान्याह—'जत्थ ण' मित्यादि, किल सर्वोऽप्ययं लोकः परिमण्डलसंस्थानद्रव्यैर्निरन्तरं व्याप्तस्तत्र च कल्पनया यानि २ तुल्यप्रदेशावगाहीनि तुल्यप्रदेशानि तुल्यवर्णादिपर्यवाणि च परिमण्डलसंस्थानवन्ति द्रव्याणि तानि तान्येकपङ्क्त्यां स्थाप्यन्ते, एकमेकैकजातीयेष्वेकैकपङ्क्त्यामौत्तराधर्येण निक्षिप्यमाणेष्वल्पबहुत्वभावाद् यवाकारः परिमण्डलसंस्थानसमुदायो भवति,

तत्र किल जघन्यप्रदेशिकद्रव्याणां वस्तुस्वभावेन स्तोकत्वादाद्या पङ्क्तिर्ह्रस्वा•ततः शेषाणां क्रमेण बहुबहुतरत्वाद्दीर्घदीर्घतरा ततः परेषां क्रमेणाल्पतरत्वात् ह्रस्वह्रस्वतरैव यावदुत्कृष्टप्रदेशानामल्पतमत्वेन ह्रस्वतमेत्येवं तुल्यैस्तदन्यैश्च परिमण्डलद्रव्यैर्यवाकारं क्षेत्रं निष्पाद्यत इति, इदमेवाश्रित्योच्यते–'जत्थ'त्ति यत्र देशे 'एगे'त्ति एकं 'परिमंडले'त्ति परिमण्डलं संस्थानं वर्त्तत इति गम्यते, 'जवमज्झे'त्ति यवस्येव मध्यं–मध्यभागो यस्य विपुलत्वसाधर्म्यात्तद् यवमध्यं यवाकारमित्यर्थः, तत्र यवमध्ये परिमण्डलसंस्थानानि–यवाकारनिर्वर्त्तकपरिमण्डलसंस्थानव्यतिरिक्तानि किं सङ्ख्यातानि ? इत्यादिप्रश्नः, उत्तरं त्वनन्तानि यवाकारनिर्वर्त्तकेभ्यस्तेषामनन्तगुणत्वात् तदपेक्षया च यवाकारनिष्पादकानामनन्तगुणहीनत्वादिति ॥ पूर्वोक्तामेव संस्थानप्ररूपणां रत्नप्रभादिभेदेनाह—'जत्थे'त्यादि सूत्रसिद्धम् ॥ अथ संस्थानान्येव प्रदेशतोऽवगाहतश्च निरूपयन्नाह—

वट्टे णं भंते ! संठाणे कतिपदेसिए कतिपदेसोगाढे प० ?, गोयमा ! वट्टे संठाणे दुविहे प०–घणवट्टे य पयरवट्टे य, तत्थ णं जे से पयरवट्टे से दुविहे प० तं०–ओयपएसे य जुम्मपएसे य, तत्थ णं जे से ओयपएसिए से जहन्नेणं पंचपएसिए पंचपएसोगाढे उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे, तत्थ णं जे से जुम्मपएसिए से जहन्नेणं बारसपएसिए बारसपएसोगाढे उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे, तत्थ णं जे से घणवट्टे से दुविहे प०, तं०–ओयपएसिए य जुम्मपएसिए य, तत्थ णं जे से ओयपएसिए से जह० सत्तपएसिए सत्तपएसोगाढे प० उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे प०, तत्थ णं जे से जुम्मपएसिए

से जहन्नेणं वत्तीसपएसिए वत्तीसपएसोगाढे प०, उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे ॥ तंसे णं भंते ! संठाणे कतिपदेसिए कतिपदेसोगाढे प० ?, गोयमा ! तंसे णं संठाणे दुविहे पं० तं० घणतंसे य पयरतंसे य, तत्थ णं जे से पयरतंसे से दुविहे पं०, तं०–ओयपएसिए य जुम्मपएसिए य, तत्थ णं जे से ओयपएसिए से जह० तिपएसिए तिपएसोगाढे प० उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे, तत्थ णं जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए छप्पएसोगाढे प० उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे प०, तत्थ णं जे से घणतंसे से दुविहे प०, तं०–ओयपएसिए जुम्मपएसिए य, तत्थ णं जे से ओयपएसिए से जहन्नेणं पणतीसपएसिए पणतीसपएसोगाढे उक्कोसेणं अणंतपएसिए तं चेव, तत्थ णं जे से जुम्मपएसिए से जहन्नेणं चउप्पएसिए चउप्पएसोगाढे प० उक्को० अणंतपएसिए तं चेव ॥ चउरंसे णं भंते ! संठाणे कतिपदेसिए ? पुच्छा, गोयमा ! चउरंसे संठाणे दुविहे प० भेदो जहेव वट्टस्स जाव तत्थ णं जे से ओयपएसिए से जहन्नेणं नवपएसिए नवपएसोगाढे प०, उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे प०, तत्थ णं जे से जुम्मपदेसिए से जहन्नेणं चउपएसिए चउपएसोगाढे प० उक्कोसेणं अणंतपएसिए तं चेव तत्थ णं जे से घणचउरंसे से दुविहे प०, तंजहा–ओयपएसिए जुम्मपएसिए, तत्थ णं जे से ओयपएसिए से जहन्नेणं सत्तावीसइपएसिए सत्तावीसतिपएसोगाढे उक्को० अणंतपएसिए तहेव तत्थ जे से जुम्मपएसिए से जहन्नेणं अट्ठपएसिए अट्ठपएसोगाढे प० उक्को० अणंतपएसिए तहेव ॥ आयए णं भंते ! संठाणे कतिपदेसिए कतिपएसोगाढे प० ?

गोयमा ! आयए णं संठाणे तिविहे प० तं०—सेढिआयते पयरायते घणायते, तत्थ णं जे से सेढिआयते से दुविहे प०, तं०—ओयपएसिए य जुम्मपएसिए य, तत्थ णं जे ओयप० से जह० तिपएसिए तिपएसोगाढे उक्को० अणंतपए तं चेव, तत्थ णं जे से जुम्मपएसे जह० दुपएसिए दुपएसोगाढे उक्कोसेणं अणंता तहेव तत्थ णं जे से पयरायते से दुविहे पं०, तं०—ओयपएसिए य जुम्मपएसिए य, तत्थ णं जे से ओयपएसिए से जहन्नेणं पन्नरसपएसिए पन्नरसपएसोगाढे उक्कोसेणं अणंत तहेव, तत्थ णं जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए छप्पएसोगाढे उक्कोसेणं अणंत तहेव, तत्थ णं जे से घणायते से दुविहे पं० तं०—ओयपएसिए जुम्मपएसिए, तत्थ णं जे से ओयपएसिए से जहन्नेणं पणयालीसपएसिए पणयालीसपएसोगाढे उक्कोसेणं अणंत० तहेव, तत्थ णं जे से जुम्मपएसिए से जह० बारसपएसिए बारसपएसोगाढे उक्कोसेणं अणंत० तहेव ॥ परिमंडले णं भंते ! संठाणे कतिपदेसिए ? पुच्छा, गोयमा ! परिमंडले णं संठाणे दुविहे पं०, तं०—घणपरिमंडले य पयरपरिमंडले य, तत्थ णं जे से पयरपरिमंडले से जहन्नेणं वीसतिपदेसिए वीसइपएसोगाढे उक्कोसेणं अणंतपदे० तहेव, तत्थ णं जे से घणपरिमंडले से जहन्नेणं चत्तालीसतिपदेसिए चत्तालीसपएसोगाढे प०, उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे पन्नत्ता ( सूत्रं ७२६ ) ॥

'वट्टे ण' मित्यादि, अथ परिमण्डलं पूर्वमादावुक्तं इह तु कस्मात्तत्त्यागेन वृत्तादिना क्रमेण तानि निरूप्यन्ते?, उच्यते, वृत्तादीनि चत्वार्यपि प्रत्येकं समसङ्ख्यविषमसङ्ख्यप्रदेशान्यतस्तत्साधर्म्यात्तेषां पूर्वमुपन्यासः परिमण्डलस्य पुनरेतदभावात्प-

श्चाद् विचित्रत्वाद्वा सूत्रगतेरिति, 'घणवट्टे'त्ति सर्वतः समं घनवृत्तं मोदकवत् 'पयरवट्टे'त्ति बाहल्यतो हीनं तदेव प्रतरवृत्तं मण्डकवत्, 'ओयपएसिए'त्ति विषमसङ्ख्यप्रदेशनिष्पन्नं 'जुम्मपएसिए'त्ति समसङ्ख्यप्रदेशनिष्पन्नं, 'तत्थ णं जे से ओयपएसिए पयरवट्टे से जहन्नेणं पंचपएसिए' इत्यादि, इत्थं पञ्चप्रदेशावगाढं पञ्चाणुकात्मकमित्यर्थः, उत्कर्षेणानन्तप्रदेशिकमसङ्ख्येयप्रदेशावगाढं लोकस्याप्यसङ्ख्येयप्रदेशात्मकत्वात्, 'जे से जुम्मपएसिए से जहन्नेणं बारसपएसिए' इति, एतस्य स्थापना- 'जे से ओयपएसिए घणवट्टे से जहन्नेणं सत्तपएसिए सत्तपएसोगाढे'त्ति, एतस्य स्थापना- अस्य मध्यपरमाणोरुपर्येकः स्थापितोऽधश्चैक इत्येवं सप्तप्रदेशिकं घनवृत्तं भवतीति, 'जे से जुम्मपएसिए से जहन्नेणं बत्तीसइपएसिए' इत्यादि, एतस्य स्थापना- अस्य चोपरीदृश एव प्रतरः स्थाप्यस्ततः सर्वे चतुर्विंशतिस्ततः प्रतरद्वयस्य मध्याणूनां चतुर्णामुपर्यन्ये चत्वारोऽधश्चेत्येवं द्वात्रिंशदिति ॥ त्र्यस्रसूत्रे—'जे से ओयपएसिए से जहन्नेणं तिपएसिए'त्ति, अस्य स्थापना- 'जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए'त्ति अस्य स्थापना- 'जे से ओयपएसिए से जहन्नेणं पणतीसपएसिए'त्ति, अस्य स्थापना- अस्य पञ्चदशप्रदेशिकस्य प्रतरस्योपरि दशप्रदेशिकः एतस्याप्युपरि षट्प्रदेशिकः एतस्याप्युपरि त्रिप्रदेशिकः प्रतरः एतस्याप्युपर्येकः प्रदेशो दीयते इत्येवं पञ्चत्रिंशत्प्रदेशा इति । 'जे से जुम्मपएसिए से जहन्नेणं चउप्पएसिए' इति, अस्य स्थापना- अत्रैकस्योपरि प्रदेशो दीयत इत्येवं चत्वार इति ॥ चतुरस्रसूत्रे—'जे से ओयपएसिए से जहन्नेणं नवपएसिए'त्ति एवं 'जे से जुम्मपएसिए से जहन्नेणं चउप्पएसिए'त्ति, एवं 'जे से ओयपएसिए से जहन्नेणं सत्तावीसपएसिए' त्ति, एवमेतस्य नवप्रदेशिक-

प्रतरस्योपर्यन्यदपि प्रतरद्वयं स्थाप्यत इत्येवं सप्तविंशतिप्रदेशिकं चतुरस्रं भवतीति, 'जे से जुम्मपएसिए से जहन्नेणं अट्ठपएसिए' त्येवं [ ] अस्योपर्यन्यश्चतुष्प्रदेशिकप्रतरो दीयत इत्येवमष्टप्रदेशिकं स्यादिति ॥ आयतसूत्रे—'सेढिआयए' त्ति श्रेण्यायतं-प्रदेशश्रेणीरूपं 'प्रतरायतं' कृतविष्कम्भश्रेणीद्वयादिरूपं 'घनायतं' बाहल्यविष्कम्भोपेतमनेकश्रेणीरूपं, तत्र श्रेण्यायतमोजःप्रदेशिकं जघन्यं त्रिप्रदेशिकं, तच्चैवं- [ ] १ तदेव युग्मप्रदेशिकं द्विप्रदेशिकं तच्चैवं- [ ] 'जे से ओयपएसिए से जहन्नेणं पन्नरसपएसिए'त्ति एवं- [ ] तदेव युग्मप्रदेशिकं जघन्यं षट्प्रदेशिकं तच्चैवं- [ ] एवं घनायतमोजःप्रदेशिकं जघन्यं पञ्चचत्वारिंशत्प्रदेशिकं तच्चैवम्- [ ] अस्योपर्यन्यत् प्रतरद्वयं स्थाप्यत इत्येवं पञ्चचत्वारिंशत्प्रदेशिकं जघन्यमोजःप्रदेशिकं घनायतं भवति, तदेव युग्मप्रदेशिकं द्वादशप्रदेशिकं, तच्चैवम्- [ ] एतस्य षट्प्रदेशिकस्योपरि षट्प्रदेशिक एवान्यः प्रतरः स्थाप्यते ततो द्वादशप्रदेशिकं भवतीति ॥ 'परिमंडले णं' मित्यादि, इह ओजोयुग्मभेदौ न स्तः, युग्मरूपत्वेनैकरूपत्वात्परिमण्डलस्येति, तत्र प्रतरपरिमण्डलं जघन्यतो विंशतिप्रदेशिकं भवति, तदेवं स्थापना- एतस्यैवोपरि विंशतिप्रदेशिकेऽन्यस्मिन् प्रतरे दत्ते चत्वारिंशत्प्रदेशिकं घनपरिमण्डलं भवतीति ॥ अनन्तरं परिमण्डलं प्ररूपितम्, अथ परिमण्डलमेवादौ कृत्वा संस्थानानि प्रकारान्तरेण प्ररूपयन्नाह—

**परिमंडले णं भंते ! संठाणे दव्वट्ठयाए किं कडजुम्मे तेओए दावरजुम्मे कलियोए ?, गोयमा ! नो कडजुम्मे णो तेयोए णो दावरजुम्मे कलियोए, वट्टे णं भंते ! संठाणे दव्वट्ठयाए एवं चेव एवं जाव आयते ॥ परिमंडला णं भंते ! संठाणा दव्वट्ठयाए किं कडजुम्मा तेयोया दावरजुम्मा कलियोगा पुच्छा, गोयमा ! ओघादेसेणं**

भवन्ति यावतां चतुष्कापहारेण निच्छेदता भवति कदाचित्पुनस्त्रीण्यधिकानि भवन्ति कदाचिद्वे कदाचिदेकमधिकमित्यत एवाह—'परिमंडला णं भंते' इत्यादि, 'ओघादेसेणं'ति सामान्यतः 'विहाणादेसेणं'ति विधानादेशो यत्समुदितानामप्येकैकस्यादेशनं तेन च कल्योजतैवेति ॥ अथ प्रदेशार्थचिन्तां कुर्वन्नाह—'परिमंडले ण'मित्यादि, तत्र परिमण्डलं संस्थानं प्रदेशार्थतया विंशत्यादिपु क्षेत्रप्रदेशेषु ये प्रदेशाः परिमण्डलसंस्थाननिष्पादका व्यवस्थितास्तदपेक्षयेत्यर्थः, 'सिय कडजुम्मे'त्ति तत्प्रदेशानां चतुष्कापहारेणापह्रियमाणानां चतुष्पर्यवसितत्वे कृतयुग्मं तत्स्यात्, यदा त्रिपर्यवसानं नत्तदा त्र्योजः, एवं द्वापरं कल्योजश्चेति, यस्मादेकत्रापि प्रदेशे वहवोऽणवोऽवगाहन्त इति ॥ अथावगाहप्रदेशनिरूपणायाह—'परिमंडले'त्यादि, 'कडजुम्मपएसोगाढे'त्ति यस्मात्परिमण्डलं जघन्यतो विंशतिप्रदेशावगाढमुक्तं विंशतेश्च चतुष्कापहारे चतुष्पर्यवसितत्वं भवति एवं परिमण्डलान्तरेऽपीति ॥ 'वट्टे ण' मित्यादि, 'सिय कडजुम्मपएसोगाढे'त्ति यत्प्रतरवृत्तं द्वादशप्रदेशिकं यच्च घनवृत्तं द्वात्रिंशत्प्रदेशिकमुक्तं तच्चतुष्कापहारे चतुरग्रत्वात्कृतयुग्मप्रदेशावगाढं 'सिय तेओयपएसोगाढे'त्ति यच्च घनवृत्तं सप्तप्रदेशिकमुक्तं तत्त्र्यग्रत्वात्त्र्योजःप्रदेशावगाढं 'सिय कलिओयपएसोगाढे'त्ति यत्प्रतरवृत्तं पञ्चप्रदेशिकमुक्तं तदेकाग्रत्वात्कल्योजप्रदेशावगाढमिति ॥ 'तंसे ण' मित्यादि, 'सिय कडजुम्मपएसोगाढे'त्ति यद् घनत्र्यस्रं चतुष्प्रदेशिकं तत्कृतयुग्मप्रदेशावगाढं 'सिय तेओगपएसोगाढे'त्ति यत् प्रतरत्र्यस्रं त्रिप्रदेशावगाढं घनत्र्यस्रं च पञ्चत्रिंशत्प्रदेशावगाढं तत्त्र्यग्रत्वात्त्र्योजःप्रदेशावगाढं, 'सिय दावरजुम्मपएसोगाढे'त्ति यत्प्रतरत्र्यस्रं षट्प्रदेशिकमुक्तं तद् द्व्यग्रत्वाद् द्वापरप्रदेशावगाढमिति ॥ 'चउरंसे ण'मित्यादि, 'जहा वट्टे'त्ति 'सिय कडजुम्मपएसोगाढे सिय-

तेओयपएसोगाढे सिय कलिओयपएसोगाढे' इत्यर्थः तत्र यत् प्रतरचतुरस्रं चतुष्प्रदेशिकं घनचतुरस्रं चाष्टप्रदेशिकमुक्तं तच्चतुरग्रत्वात्कृतयुग्मप्रदेशावगाढं, तथा यद् घनचतुरस्रं सप्तविंशतिप्रदेशिकमुक्तं तत्र्यग्रत्वात्त्र्योजःप्रदेशावगाढं, तथा यत्प्रतरचतुरस्रं नवप्रदेशिकमुक्तं तदेकाग्रत्वात् कल्योजःप्रदेशावगाढमिति॥ 'आयए ण' मित्यादि 'सिय कडजुम्मपएसोगाढे'त्ति यद् घनायतं द्वादशप्रदेशिकमुक्तं तत्कृतयुग्मप्रदेशावगाढं यावत्करणात् 'सिय तेओयपएसोगाढे सिय दावरजुम्मपएसोगाढे'त्ति दृश्यं, तत्र च यत् श्रेण्यायतं त्रिप्रदेशावगाढं यच्च प्रतरायतं पञ्चदशप्रदेशिकमुक्तं तत्त्र्यग्रत्वात्त्र्योजःप्रदेशावगाढं, यत्पुनः श्रेण्यायतं द्विप्रदेशिकं यच्च प्रतरायतं षट्प्रदेशिकं तद् द्व्यग्रत्वाद् द्वापरयुग्मप्रदेशावगाढं, 'सिय कलिओयपएसोगाढे'त्ति यद् घनायतं पञ्चचत्वारिंशत्प्रदेशिकं तदेकाग्रत्वात्कल्योजःप्रदेशावगाढमिति ॥ एवमेकत्वेन प्रदेशावगाढमाश्रित्य संस्थानानि चिन्तितानि अथ पृथक्त्वेन तानि तथैव चिन्तयन्नाह—'परिमंडला ण'-मित्यादि, 'ओघादेसेणवि'त्ति सामान्यतः समस्तान्यपि परिमण्डलानीत्यर्थः 'विहाणादेसेणवि'त्ति भेदतः एकैकं परिमण्डलमित्यर्थः कृतयुग्मप्रदेशावगाढान्येव विंशतिचत्वारिंशत्प्रभृतिप्रदेशावगाहित्वेनोक्तत्वात्तेषामिति ॥ 'वट्टा ण'मित्यादि, 'ओघादेसेणं कडजुम्मपएसोगाढे'त्ति वृत्तसंस्थानाः स्कन्धाः सामान्येन चिन्त्यमानाः कृतयुग्मप्रदेशावगाढाः सर्वेषां तत्प्रदेशानां मीलने चतुष्कापहारे तत्स्वभावत्वेन चतुष्पर्यवसितत्वात्, विधानादेशेन पुनर्द्वापरप्रदेशावगाढवर्जाः शेषावगाढा भवन्ति, यथा पूर्वोक्तेषु पञ्चसप्तादिषु जघन्यवृत्तभेदेषु चतुष्कापहारे द्व्यावशिष्टता नास्ति एवं सर्वेष्वपि तेषु वस्तुस्वभावत्वाद्, अत एवाह—'विहाणादेसेण'मित्यादि । एवं त्र्यस्रादिसंस्थानसूत्राण्यपि भावनीयानि ॥ एवं तावत्क्षेत्रत एक-

त्वपृथक्त्वाभ्यां संस्थानानि चिन्तितानि, अथ ताभ्यामेव कालतो भावतश्च तानि चिन्तयन्नाह—'परिमंडले ण'मित्यादि, अयमर्थः—परिमंडलेन संस्थानेन परिणताः स्कन्धाः कियन्तं कालं तिष्ठन्ति ? किं चतुष्कापहारेण तत्कालस्य समयाश्चतुरग्रा भवन्ति त्रिद्व्येकाग्रा वा ?, उच्यते, सर्वे संभवन्तीति, इह चैता वृद्धोक्ताः सङ्ग्रहगाथाः—"परिमंडले य १ वट्टे २ तंसे ३ चउरंस ४ आयए ५ चेव। घणपयरपढमवज्जं ओयपएसे य जुम्मे य ॥ १ ॥ पंच य बारसयं खलु सत्त य बत्तीसयं च वट्टंमि। तियछक्कयपणतीसा चउरो य हवंति तंसंमि ॥ २ ॥ नव चेव तहा चउरो सत्तावीसा य अट्ठ चउरंसे। तिगदुगपन्नरसे चेव छच्चेव य आयए होंति ॥ ३ ॥ पणयालीसा बारस छब्भेया आययम्मि संठाणे। परिमंडलम्मि वीसा चत्ता य भवे पएसग्गं ॥ ४ ॥ सव्वेवि आययम्मि गेण्हसु परिमंडलंमि कडजुम्मं। वज्जेज्ज कलिं तंसे दावरजुम्मं च सेसेसु ॥ ५ ॥" इति ॥ [ परिमण्डलं च वृत्तं त्र्यस्रं चतुरस्रमायतं चैव प्रथमवर्ज्यानि घनप्रतरभेदानि ओजःप्रदेशानि युग्मानि च ॥ १ ॥ पञ्च च द्वादश खलु सप्त च द्वात्रिंशच्च वृत्ते त्रयः षट् पञ्चत्रिंशच्चत्वारश्च भवन्ति त्र्यस्रे ॥ २ ॥ नव चैव तथा चत्वारः सप्तविंशतिश्चाष्टौ चतुरस्रे त्रयो द्वौ पञ्चदश चैव षट् चैव चायते भवन्ति ॥ ३ ॥ पञ्चचत्वारिंशद्द्वादशषट्प्रदेशा आयते भवन्ति संस्थाने परिमण्डले विंशतिश्चत्वारश्च भवेत् प्रदेशपरिमाणम् ॥ ४ ॥ आयते सर्वे राशय इति गृहाण परिमण्डले कृतयुग्मं त्र्यस्रे कलिं वर्जयेत् शेषेषु द्वापरयुग्मं च ॥ ५ ॥ ] द्रव्याद्यपेक्षया संस्थानपरिमाणस्याधिकृतत्वात्संस्थानविशेषितस्य लोकस्य तथैव परिमाणनिरूपणायाह—

सेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ

नो असंखे० अणंताओ, पाईणपडीणायताओ णं भंते ! सेढीओ दव्वट्ठयाए किं संखेज्जाओ एवं चेव ३, एवं दाहिणुत्तरायताओवि एवं उड्डमहायताओवि । लोगागाससेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ असंखेज्जाओ नो अणंताओ, पाईणपडीणायताओ णं भंते ! लोगागाससेढीओ दव्वट्ठयाए किं संखेज्जाओ एवं चेव, एवं दाहिणुत्तरायताओवि, एवं उड्डमहायताओवि । अलोयागाससेढीओ णं भंते ! दव्वट्ठयाए किं संखेज्जाओ असंखेज्जाओ अणंताओ ?, गोयमा ! नो संखेज्जाओ नो असंखेज्जाओ अणंताओ, एवं पाईणपडीणाययाओवि एवं दाहिणुत्तराययाओवि एवं उड्डमहायताओवि । सेढीओ णं भंते ! पएसट्ठयाए किं संखेज्जाओ जहा दव्वट्ठयाए तहा पएसट्ठयाएवि जाव उड्डमहाययाओवि सव्वाओ अणंत० । लोयागाससेढीओ णं भंते ! पएस० किं संखेज्जाओ पुच्छा, गोयमा ! सिय संखे० सिय असं० नो अणंताओ एवं पाईणपडीणायताओ दाहिणुत्तरायताओवि एवं चेव उड्डमहायताओवि नो संखेज्जाओ असंखे० नो अणंताओ ॥ अलोगागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय संखे० सिय असं० सिय अणंताओ पाईणपडीणाययाओ णं भंते ! अलोया० पुच्छा, गोयमा ! नो संखेज्जाओ नो असंखेज्जाओ अणंताओ, एवं दाहिणुत्तरायताओवि, उड्डमहायताओ पुच्छा, गोयमा ! सिय संखेज्जाओ सिय असं० सिय अणंताओ ( सूत्रं ७२८ ) ॥

'सेढी'त्यादि, श्रेणीशब्देन च यद्यपि पङ्क्तिमात्रमुच्यते तथाऽपीहाकाशप्रदेशपङ्क्तयः श्रेणयो ग्राह्याः, तत्र श्रेणयोऽविवक्षितलोकालोकभेदत्वेन सामान्याः १ तथा ता एव पूर्वापरायताः २ दक्षिणोत्तरायताः ३ ऊर्ध्वाधआयताः ४, एवं लो-

कसम्बन्धिन्योऽलोकसम्बन्धिन्यश्चेति, तत्र सामान्ये श्रेणीप्रश्ने 'अणंताओ'त्ति सामान्याकाशास्तिकायस्य श्रेणीनां विवक्षितत्वादनन्तास्ताः, लोकाकाशश्रेणीप्रश्ने त्वसङ्ख्याता एव ताः, असङ्ख्यातप्रदेशात्मकत्वाल्लोकाकाशस्य, अलोकाकाशश्रेणीप्रश्ने पुनरनन्तास्ताः, अनन्तप्रदेशात्मकत्वादलोकाकाशस्य । तथा 'लोगागाससेढीओ णं भंते ! पएसट्ठयाए' इत्यादौ 'सिय संखेज्जाओ सिय असंखेज्जाओ'त्ति अस्येयं चूर्णिकारव्याख्या—लोकवृत्तान्निष्क्रान्तस्यालोके प्रविष्टस्य दन्तकस्य याः श्रेणयस्ता द्वित्रादिप्रदेशा अपि संभवन्ति तेन ताः सङ्ख्यातप्रदेशा लभ्यन्ते शेषा असङ्ख्यातप्रदेशा लभ्यन्त इति, टीकाकारस्तु साक्षेपपरिहारं चेह प्राह—"परिमंडलं जहन्नं भणियं कडजुम्मवट्टियं लोए। तिरियाययसेढीणं संखेज्जपएसिया किह णु ? ॥ १ ॥ दो दो दिसासु एक्कक्कओ य विदिसासु एस कडजुम्मे । पढमपरिमंडलाओ वुड्ढी किर जाव लोगंतो ॥ २॥" इत्याक्षेपः, परिहारस्तु—"अट्ठंसया पसज्जइ एवं लोगस्स न परिमंडलया । वट्टालेहेण तओ वुड्ढी कडजुम्मिया जुत्ता ॥३॥" [ लोके कृतयुग्मवर्त्तितं जघन्यं परिमण्डलं भणितं तिर्यगायतश्रेणीनां सङ्ख्येयप्रदेशता कथं नु ? ॥१॥ द्वौ द्वौ दिक्षु एकैकश्च विदिक्षु एष कृतयुग्मः प्रथमपरिमण्डलाद् वृद्धिस्तस्य यावल्लोकान्तः ॥ २ ॥ एवं लोकस्याष्टांशता प्रसज्यते न परिमण्डलता ततो वृत्तालेखेन कृतयुग्मिका वृद्धिर्युक्ता ॥३॥] एवं च लोकवृत्तपर्यन्तश्रेणयः सङ्ख्यातप्रदेशिका भवन्तीति 'नो अणंताओ'त्ति लोकप्रदेशानामनन्तत्वाभावात्, 'उड्ढमहायययाओ' 'नो संखेज्जाओ असंखेज्जाओ'त्ति यतस्तासामुच्छ्रितानामूर्ध्वलोकान्तादधोलोकान्तेऽधोलोकान्तादूर्ध्वलोकान्ते प्रतिघातोऽतस्ता असङ्ख्यातप्रदेशा एवेति, या अप्यधोलोककोणतो ब्रह्मलोकतिर्यग्मध्यप्रान्ताद्वोत्तिष्ठन्ते ता अपि न सङ्ख्यातप्रदेशा लभ्यन्ते, अत एव सूत्रवचनादिति ॥

पू.
उ.  र
प.

'अलोगागाससेढीओ णं भंते ! पएसट्ठयाए' इत्यादि, 'सिय संखेज्जाओ सिय असंखेज्जाओ'त्ति यदुक्तं तत्सर्वं क्षुल्लकप्रतरप्रत्यासन्ना ऊर्द्ध्वाधआयता अधोलोकश्रेणीराश्रित्येत्यवसेयं, ता हि आदिमाः सङ्ख्यातप्रदेशास्ततोऽसङ्ख्यातप्रदेशास्ततः परं त्वनन्तप्रदेशाः, तिर्यगायतास्त्वलोकश्रेणयः प्रदेशतोऽनन्ता एवेति ॥

सेढीओ णं भंते ! किं साइयाओ सपज्जवसियाओ १ साईयाओ अपज्जवसि० २ अणादीयाओ सपज्जवसियाओ ३ अणादीयाओ अप० ४?, गोयमा ! नो सादीयाओ सप० नो सादीयाओ अप० णो अणादीयाओ सप० अणादीयाओ अप० एवं जाव उड्ढमहायताओ, लोयागाससेढीओ णं भंते ! किं सादीयाओ सप० पुच्छा, गो० ! सादीयाओ सपज्जवसियाओ नो सादीयाओ अपज्जवसियाओ नो अणादीयाओ सपज्जव० नो अणादीयाओ अपज्ज० एवं जाव उड्ढमहायताओ। अलोयागाससेढीओ णं भंते ! किं सादीयाओ सप० पुच्छा, गोयमा ! सिय साइयाओ सपज्जवसियाओ १ सिय साईयाओ अपज्जवसियाओ २ सिय अणादीयाओ सपज्जवसियाओ ३ सिय अणाइयाओ अपज्जवसियाओ ४, पाईणपडीणाययाओ दाहिणुत्तरायताओ य एवं चेव, नवरं नो सादीयाओ सपज्जवसियाओ सिय साईयाओ अपज्जवसियाओ सेसं तं चेव, उड्ढमहायताओ जाव ओहियाओ तहेव चउभंगो । सेढीओ णं भंते ! दव्वट्ठयाए किं कडजुम्माओ तेओयाओ ? पुच्छा, गोयमा ! कडजुम्माओ नो तेओयाओ नो दावरजुम्माओ नो कलियोगाओ एवं जाव उड्ढमहायताओ, लोगागाससेढीओ एवं चेव, एवं अलोगागासेढीओवि । सेढीओ णं भंते ! पएसट्ठयाए किं कडजुम्माओ

पुच्छा, एवं चेव एवं जाव उड्ढमहायताओ। लोयागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय कडजुम्माओ नो तेओयाओ सिय दावरजुम्माओ नो कलिओगाओ, एवं पाईणपडीणायताओवि दाहिणुत्तरायताओवि, उड्ढमहाययाओ णं पुच्छा, गोयमा ! कडजुम्माओ नो तेओगाओ नो दावरजुम्माओ नो कलियोगाओ। अलोगागाससेढीओ णं भंते ! पएसट्ठयाए पुच्छा, गोयमा ! सिय कडजुम्माओ जाव सिय कलिओगाओ, एवं पाईणपडीणायताओवि एवं दाहिणुत्तरायताओवि, उड्ढमहायताओवि एवं चेव, नवरं नो कलिओगाओ सेसं तं चेव ( सूत्रं ७२९ ) ॥ कति णं भंते! सेढीओ प०?, गोयमा! सत्त सेढीओ पन्नत्ताओ, तंजहा–उज्जुआयता एगओवंका दुहओवंका एगओखहा दुहओखहा चक्कवाला अद्धचक्कवाला ॥ परमाणुपोग्गलाणं भंते! किं अणुसेढीं गती पवत्तति विसेढिं गती पवत्तति ?, गोयमा ! अणुसेढीं गति पवत्तति नो विसेढीं गती पवत्तति। दुपएसियाणं भंते ! खंधाणं अणुसेढीं गती पवत्तति विसेढीं गती पवत्तति एवं चेव, एवं जाव अणंतपएसियाणं खंधाणं। नेरइयाणं भंते! किं अणुसेढीं गती पवत्तति विसेढीं गती पवत्तति एवं चेव, एवं जाव वेमाणियाणं ॥ (सूत्रं ७३०) इमीसे णं भंते! रयणप्पभाए पुढवि० केवतिया निरयावाससयसहस्सा पन्नत्ता ?, गोयमा! तीसं निरयावाससयसहस्सा प०, एवं जहा पढमसते पंचमुद्देसगे जाव अणुत्तरविमाणत्ति ॥ ( सूत्रं ७३१) कइविहे णं भंते! गणिपिडए प० ?, गोयमा! दुवालसंगे गणिपिडए पं० तं०–आयारो जाव दिट्ठिवाओ, से किं तं आयारो ?, आयारे णं समणाणं निग्गंथाणं आयारगो० एवं अंगपरूवणा भाणियव्वा जहा नंदीए, जाव

सुत्तत्थो खलु पढमो बीओ निजुत्तिमीसिओ भणिओ। तइओ य निरवसेसो एस विही होइ अणुओगे ॥१॥ (सूत्रं७३२) ॥ एएसि णं भंते! नेरतियाणं जाव देवाणं सिद्धाण य पंचगतिसमासेणं कयरे २? पुच्छा, गोयमा! अप्पाबहुयं जहा बहुवत्तवयाए अट्ठगइसमासअप्पाबहुगं च। एएसि णं भंते! सइंदियाणं एगिंदियाणं जाव अणिंदियाण य कयरे २?, एयंपि जहा बहुवत्तवयाए तहेव ओहियं पयं भाणियव्वं, सकाइयअप्पाबहुगं तहेव ओहियं भाणियव्वं ॥ एएसि णं भंते! जीवाणं पोग्गलाणं जाव सव्वपज्जवाण य कयरे २ जाव बहुवत्तव्वयाए, एएसि णं भंते! जीवाणं आउयस्स कम्मस्स बंधगाणं अबंधगाणं जहा बहुवत्तव्वयाए जाव आउयस्स कम्मस्स अबंधगा विसेसाहिया। सेवं भंते! सेवं भंतेत्ति ॥ (सूत्रं ७३३) ॥ २५–३ ॥

'सेढीओ णं भंते! किं साईयाओ' इत्यादिप्रश्नः, इह च श्रेण्योऽविशेषितत्वाद्या लोके चालोके च तासां सर्वासां ग्रहणं, सर्वग्रहणाच्च ता अनादिका अपर्यवसिताश्चेत्येक एव भङ्गकोऽनुमन्यते शेषभङ्गकत्रयस्य तु प्रतिषेधः। 'लोगागाससेढीओ ण' मित्यादौ तु 'साइयाओ सपज्जवसियाओ' इत्येको भङ्गकः सर्वश्रेणीभेदेष्वनुमन्यते; शेषाणां तु निषेधः, लोकाकाशस्य परिमितत्वादिति। 'अलोगागाससेढी' त्यादौ 'सिय साईयाओ सपज्जवसियाओ'त्ति प्रथमो भङ्गकः क्षुल्लकप्रतरप्रत्यासत्तौ ऊर्ध्वायतश्रेणीराश्रित्यावसेयः, 'सिय साइयाओ अपज्जवसियाओ'त्ति द्वितीयः, स च लोकान्तादवधेरारभ्य सर्वतोऽवसेयः, 'सिय अणाईयाओ सपज्जवसियाओ'त्ति तृतीयः, स च लोकान्तसन्निधौ श्रेणीनामन्तस्य विवक्षणात्, 'सिय अणाईयाओ अपज्जवसियाओ'त्ति चतुर्थः, स च लोकं परिहृत्य याः श्रेणयस्तदपेक्ष्येति। 'पाईणप-

डीणाययाओ' इत्यादौ 'नो साईयाओ सपज्जवसियाओ'त्ति अलोके तिर्यक्श्रेणीनां सादित्वेऽपि सपर्यवसितत्वस्याभावान्न प्रथमो भङ्गः, शेपास्तु त्रयः संभवन्त्यत एवाह–'सिय साइयाओ' इत्यादि। 'सेढीओ णं भंते! दव्वट्ठयाए किं कडजुम्माओ?' इत्यादि प्रश्नः, उत्तरं तु 'कडजुम्माओ'त्ति, कथं?, वस्तुस्वभावात्, एवं सर्वा अपि, यः पुनर्लोकालोकश्रेणीषु प्रदेशार्थतया विशेषोऽसावुच्यते–तत्र 'लोगागाससेढीओ णं भंते! पएसट्टयाए' इत्यादौ स्यात् कृतयुग्मा अपि स्यात् द्वापरयुग्मा इत्येतदेवं भावनीयं–रुचकार्द्धादारभ्य यत्पूर्वं दक्षिणं वा लोकार्द्धं तदितरेण तुल्यमतः पूर्वापरश्रेणयो दक्षिणोत्तरश्रेणयश्च समसङ्ख्यप्रदेशाः, ताश्च काश्चित् कृतयुग्माः काश्चिद् द्वापरयुग्माश्च भवन्ति न पुनस्त्र्योजप्रदेशाः कल्योजप्रदेशा वा, तथाहि–असद्भावस्थापनया दक्षिणपूर्वाद् रुचकप्रदेशात्पूर्वतो यल्लोकश्रेण्यर्द्धं तत्प्रदेशशतमानं भवति, यच्चापरदक्षिणाद्रुचकप्रदेशादपरतो लोकश्रेण्यर्द्धं तदपि प्रदेशशतमानं, ततश्च शतद्वयस्य चतुष्कापहारे पूर्वापरायतलोकश्रेण्याः कृतयुग्मता भवति, तथा दक्षिणपूर्वाद्रुचकप्रदेशाद्दक्षिणो योऽन्त्यः प्रदेशस्तत आरभ्य पूर्वतो यल्लोकश्रेण्यर्द्धं तन्नवनवतिप्रदेशमानं, यच्चापरदक्षिणायताद्रुचकप्रदेशाद्दक्षिणो योऽन्त्यः प्रदेशस्तत आरभ्यापरतो लोकश्रेण्यर्द्धं तदपि च नवनवतिप्रदेशमानं, ततश्च द्वयोर्नवनवत्योर्मीलने चतुष्कापहारे च पूर्वापरायतलोकश्रेण्या द्वापरयुग्मता भवति, एवमन्यास्वपि लोकश्रेणीषु भावना कार्या, इह चेयं सङ्ग्रहगाथा—"तिरियाययाउ कडवायराओ लोगस्स संखसंखा वा। सेढीओ कडजुम्मा उड्ढमहेआययमसंखा ॥ १ ॥" इति [ तिर्यगायताः कृतयुग्माः लोकस्य संख्याता असंख्याता वा। श्रेणयः कृतयुग्माः ऊर्ध्वाधआयताः असंख्याताः ॥ १ ] तथा 'अलोगागाससेढीओ णं भंते! पएसे'त्यादौ 'सिय कडजुम्माओ'त्ति याः क्षुल्लकप्रतर-

द्वयसामीप्यात्तिरश्चीनतयोत्थिता याश्च लोकमस्पृशन्त्यः स्थितास्ता वस्तुस्वभावात्कृतयुग्माः, यावत्करणात् 'सिय तेओ-याओ सिय दावरजुम्माओ'त्ति दृश्यं, तत्र च याः क्षुल्लकप्रतरद्वयस्याधस्तनादुपरितनाद्वा प्रतरादुत्थितास्तास्त्र्योजाः, यतः क्षुल्लकप्रतरद्वयस्याध उपरि च प्रदेशतो लोकस्य वृद्धिभावेनालोकस्य प्रदेशत एव हानिभावादेकैकस्य प्रदेशस्यालोकश्रेणीभ्यो-ऽपगमो भवतीति, एवं तदनन्तराभ्यामुत्थिता द्वापरयुग्माः, 'सिय कलिओगाओ'त्ति तदनन्तराभ्यामेवोत्थिताः कल्यो-जाः, एवं पुनः पुनस्ता एव यथासम्भवं वाच्या इति । 'उड्ढायययाण'मित्यादि, इह क्षुल्लकप्रतरद्वयमानेन या उत्थिता ऊर्ध्वा-यतास्ता द्वापरयुग्माः तत ऊर्ध्वमधश्चैकैकप्रदेशवृद्ध्या कृतयुग्माः क्वचिच्चैकप्रदेशवृद्ध्याऽन्यत्र वृद्ध्यभावेन त्र्योजाः, कल्यो-जास्त्विह न संभवन्ति वस्तुस्वभावात्, एतच्च भूमौ लोकमालिख्य केदाराकारप्रदेशवृद्धिमन्तं ततः सर्वं भावनीयमिति ॥ अथ प्रकारान्तरेण श्रेणीप्ररूपणायाह—'कइ ण'मित्यादि, 'श्रेणयः'प्रदेशपङ्क्तयो जीवपुद्गलसञ्चरणविशेषिताः तत्र'उज्जुयायत'त्ति ऋजुश्चासावायता चेति ऋज्वायता यया जीवादय ऊर्ध्वलोकादेरधोलोकादौ ऋजुतया यान्तीति, 'एगओ वंक'त्ति 'एकत' एकस्यां दिशि 'वक्रा' वक्रा यया जीवपुद्गला ऋजु गत्वा वक्रं कुर्वन्ति—श्रेण्यन्तरेण यान्तीति, स्थापना चेवम्—[ ] 'दुहओ-वंक'त्ति यस्यां वारद्वयं वक्रं कुर्वन्ति सा द्विधावक्रा, इयं चोर्ध्वक्षेत्रादाग्नेयदिशोऽधःक्षेत्रे वायव्यदिशि गत्वा य उत्पद्यते तस्य भवति, तथाहि—प्रथमसमये आग्नेय्यास्तिर्यग् नैर्ऋत्यां याति ततस्तिर्यगेव वायव्यां ततोऽधो वायव्यामेवेति, त्रिसमयेयं त्रसनाड्या मध्ये वहिर्वा भवतीति, 'एगओखह'त्ति यया जीवः पुद्गलो वा नाड्या वामपार्श्वादेस्तां प्रविष्टस्तयैव गत्वा पुनस्तद्वामपार्श्वादावुत्पद्यते सा एकतःखा, एकस्यां दिशि वामादिपार्श्वलक्षणायां खस्य—आकाशस्य लोकनाडी-

व्यतिरिक्तलक्षणस्य भावादिति, इयं च द्वित्रिचतुर्वक्रोपेताऽपि क्षेत्रविशेषाश्रितेति भेदेनोक्ता, स्थापना चेयम् 'दुहओखह'त्ति नाड्या वामपार्श्वादेर्नाडीं प्रविश्य तयैव गत्वाऽस्या एव दक्षिणपार्श्वादौ ययोत्पद्यते सा द्विधाखा, नाडीबहिर्भूतयोर्वामदक्षिणपार्श्वलक्षणयोर्द्वयोराकाशयोस्तया स्पृष्टत्वादिति, स्थापना चेयम् 'चक्कवाल'त्ति चक्रवालं–मण्डलं, ततश्च यया मण्डलेन परिभ्रम्य परमाण्वादिरुत्पद्यते सा चक्रवाला, सा चैवम्—० 'अद्धचक्कवाल'त्ति चक्रवालार्द्धरूपा, सा चैवम् ॥ अनन्तरं श्रेणय उक्ताः, अथ ता एवाधिकृत्य परमाण्वादिगतिप्रज्ञापनायाह— 'परमाणुपोग्गलाणं भंते ! इत्यादि, 'अणुसेढिं'न्ति अनुकूला–पूर्वादिदिगभिमुखा श्रेणिर्यत्र तदनुश्रेणि, तद्यथा भवत्येवं गतिः प्रवर्तते, 'विसेढिं'ति विरुद्धा विदिगाश्रिता श्रेणी यत्र तद्विश्रेणि, इदमपि क्रियाविशेषणम् ॥ अनुश्रेणिविश्रेणिगमनं नारकादिजीवानां प्रागुक्तं, तच्च नरकावासादिषु स्थानेषु भवतीतिसम्बन्धात्पूर्वोक्तमपि नरकावासादिकं प्ररूपयन्नाह—'इमीसे ण'मित्यादि, इदं च नरकावासादिकं छद्मस्थैरपि द्वादशाङ्गप्रभावादवसीयत इति तत्प्ररूपणायाह— 'कइविहे ण' मित्यादि, 'से किं तं आयारो'त्ति प्राकृतत्वात्, अथ कोऽसावाचारः ?, अथवा किं तद्वस्तु यदाचार इत्येवं व्याख्येयम्, 'आयारेणं'ति आचारेण शास्त्रेण करणभूतेन अथवा आचारे अधिकरणभूते णमित्यलङ्कारे 'आयारगो' इत्यनेनेदं सूचितम्–'आयारगोयरविणयवेणइयसिक्खाभासाअभासाचरणकरणजायामायावित्तीओ आघविज्जंति'त्ति, तत्राचारो–ज्ञानाद्यनेकभेदभिन्नः गोचरो–भिक्षाग्रहणविधिलक्षणः विनयो–ज्ञानादिविनयः वैनयिकं–विनयफलं कर्मक्षयादि शिक्षा–ग्रहणासेवनाभेदभिन्ना अथवा 'वेणइय'त्ति वैनयिको विनयो वा–शिष्यस्तस्य शिक्षा वैनयिकशिक्षा विने-

यशिक्षा वा भापा–सत्याऽसत्यामृपा च अभापा–मृषा सत्यामृषा च चरणं–व्रतादि करणं–पिण्डविशुद्ध्यादि यात्रा–संयमयात्रा मात्रा–तदर्थमाहारमात्रा वृत्तिः-विविधैरभिग्रहविशेषैर्वर्त्तनं आचारश्च गोचरश्चेत्यादिर्द्वन्द्वस्ततश्च ता आख्यायन्ते–अभिधीयन्ते, इह च यत्र क्वचिदन्यतरोपादानेऽन्यतरगतार्थाभिधानं तत्सर्वं तत्प्राधान्यख्यापनार्थमेवावसेयमिति। 'एवं अंगपरूवणा भाणियव्वा जहा नंदीए'त्ति एवमिति–पूर्वप्रदर्शितप्रकारवता सूत्रेणाचाराद्यङ्गप्ररूपणा भणितव्या यथा नन्द्यां सा च तत एवावधार्या, अथ कियद्दूरमियमङ्गप्ररूपणा नन्द्युक्ता वक्तव्या इत्याह—'जाव सुत्तत्थो'गाहा, सूत्रार्थमात्रप्रतिपादनपरः सूत्रार्थोऽनुयोग इति गम्यते, खलुशब्दस्त्वेवकारार्थः स चावधारणे इति, एतदुक्तं भवति–गुरुणा सूत्रार्थमात्राभिधानलक्षण एव प्रथमोऽनुयोगः कार्यो, मा भूत् प्राथमिकविनेयानां मतिमोह इति, द्वितीयोऽनुयोगः सूत्रस्पर्शकनिर्युक्तिमिश्रः कार्य इत्येवंभूतो भणितो जिनादिभिः, 'तृतीयश्च'तृतीयः पुनरनुयोगो निरवशेषो निरवशेषस्य प्रसक्तानुप्रसक्तस्यार्थस्य कथनात्, 'एषः' अनन्तरोक्तः प्रकारत्रयलक्षणो 'भवति' स्यात् 'विधिः' विधानम् 'अनुयोगे' सूत्रस्यार्थेनानुरूपतया योजनलक्षणे विषयभूते इति गाथार्थः ॥ १ ॥ अनन्तरमङ्गप्ररूपणोक्ता, अङ्गेषु च नारकादयः प्ररूप्यन्त इति तेषामेवाल्पबहुत्वप्रतिपादनायाह—'एएसि ण'मित्यादि, 'पंचगइसमासेणं'ति पञ्चगत्यन्तर्भावेन, एषां चाल्पबहुत्वं तथा वाच्यं यथा बहुवक्तव्यतायां–प्रज्ञापनायास्तृतीयपदे इत्यर्थः, तच्चैवमर्थतः–"नरनेरइया देवा सिद्धा तिरिया कमेण इह होंति। थोवमसंखअसंखा अणंतगुणिया अणंतगुणा ॥१॥" [नरा नैरयिका देवाः सिद्धास्तिर्यञ्चः क्रमेणेह भवन्ति। स्तोका असङ्ख्या असङ्ख्याः अनन्तगुणिता अनन्तगुणाः ॥२॥] 'अट्ठगइसमासप्पाबहुयं च'त्ति अष्टगतिसमासेन यदल्पबहुत्वं तदपि यथा बहुवक्तव्यतायां तथा वाच्यम्,

*

अष्टगतयश्चैवं—नरकगतिस्तथा तिर्यग्नरामरगतयः स्त्रीपुरुषभेदाद्द्वेधा सिद्धिगतिश्चेत्यष्टौ, अल्पबहुत्वं चैवमर्थतः—"नारी १ नर २ नेरइया ३ तिरित्थि ४ सुर ५ देवि ६ सिद्ध ७ तिरिया य ८। थोव असंखगुणा चउ संखगुणा णंतगुण दोन्नि ॥१॥" [ नार्यो नरा नैरयिकास्तिर्यक्स्त्रियः सुरा देव्यः सिद्धास्तिर्यञ्चश्च स्तोका असङ्ख्यगुणाश्चत्वारः सङ्ख्यगुणा अनन्तगुणौ द्वौ ॥१॥] 'सइंदियाणं एगेंदियाण'मित्यादौ यावत्करणाद् द्वीन्द्रियादीनि चत्वारि पदानि वाच्यानि 'एयंपि जहा बहुवत्तवयाए तहेव'त्ति एतदप्यल्पबहुत्वं यथा बहुवक्तव्यतायामुक्तं तथा वाच्यं, तच्च पर्याप्तकापर्याप्तकभेदेनापि तत्रोक्तं इह तु यत्सामान्यतस्तदेव वाच्यमिति दर्शयितुमाह—'ओहियं पदं भाणियव्वं'ति तच्चैवमर्थतः—"पण १ चउ २ ति ३ दुय ४ अणिंदिय ५ एगिंदि ६ सइंदिया ७ कमा हुंति । थोवा १ तिन्नि य अहिया ४ दोणंतगुणा ६ विसेसहिया ७ ॥ [ पञ्चचतुस्त्रिद्वीन्द्रिया अनिन्द्रियाः एकेन्द्रियाः सेन्द्रियाः क्रमाद् भवन्ति स्तोकास्त्रयोऽधिका द्वौ अनन्तगुणौ विशेषाधिकाश्च ॥१॥ ] 'सकाइयअप्पाबहुगं तहेव ओहियं भाणियव्वं'ति सकायिकपृथिव्यप्तेजोवायुवनस्पतित्रसकायिकाकायिकनां यथाऽल्पबहुत्वं सामान्यतस्तत्रोक्तं तथैवेहापि भणितव्यं, तच्चैवमर्थतः—"तस १ तेउ २ पुढवि ३ जल ४ वाउकाय ५ अकाय ६ वणस्सइ ७ सकाया ८ । थोव १ असंखगुणा २ हिय तिन्नि उ ५ दोणंतगुण ७ अहिया ८ ॥" [त्रसास्तैजसाः पृथ्वी जलं वायुकाया अकाया वनस्पतयः सकायाः स्तोका असङ्ख्यातगुणास्त्रयोऽधिका द्वावनन्तगुणावधिकाश्च ॥१॥] अल्पबहुत्वाधिकारादेवेदमाह—'एएसि णं'मित्यादि, 'जीवाणं पोग्गलाणं' इह यावत्करणादिदं दृश्यं—'समयाणं दव्वाणं पएसाणं'ति 'जहा बहुवत्तव्वयाए'त्ति, तदेवमर्थतः—"जीवा १ पोग्गल २ समया ३ दव्व ४ पएसा य ५ पज्जवा ६ चेव । थोवा १ णंता २ णंता

३ विसेसअहिया ४ दुवेऽणंता ६ ॥ १ ॥" [ जीवाः पुद्गलाः समया द्रव्याणि प्रदेशाः पर्यवाश्चैव स्तोका अनन्ता अनन्ता विशेषाधिका द्वावनन्तौ ॥ १ ॥ ] इह भावना—यतो जीवाः प्रत्येकमनन्तानन्तैः पुद्गलैर्वद्धाः प्रायो भवन्ति, पुद्गलास्तु जीवैः संवद्धा असंवद्धाश्च भवन्तीत्यतः स्तोकाः पुद्गलेभ्यो जीवाः, यदाह—"जं पोग्गलावबद्धा जीवा पाएण होंति तो थोवा । जीवेहिं विरहिया अविरहिया व पुण पोग्गला संति ॥ २ ॥" [ यत्पुद्गलावबद्धाः प्रायेण जीवास्ततः स्तोका भवन्ति जीवैर्विरहिता अविरहिताश्च पुनः पुद्गलाः सन्ति ॥ १ ॥ ] जीवेभ्योऽनन्तगुणाः पुद्गलाः, कथं ?, यत्तैजसादिशरीरं येन जीवेन परिगृहीतं तत्ततो जीवात्पुद्गलपरिमाणमाश्रित्यानन्तगुणं भवति, तथा तैजसशरीरात्प्रदेशतोऽनन्तगुणं कार्म्मणं, एवं चैते जीवप्रतिवद्धे अनन्तगुणे, जीवविमुक्ते च ते ताभ्यामनन्तगुणे भवतः, शेषशरीरचिन्ता त्विह न कृता, यस्मात्तानि मुक्तान्यपि स्वस्वस्थाने तयोरनन्तभागे वर्त्तन्ते, तदेवमिह तैजसशरीरपुद्गला अपि जीवेभ्योऽनन्तगुणाः किं पुनः कार्म्मणादिपुद्गलराशिसहिताः, तथा पञ्चदशविधप्रयोगपरिणताः पुद्गलाः स्तोकास्तेभ्यो मिश्रपरिणताः अनन्तगुणास्तेभ्योऽपि विस्रसापरिणता अनन्तगुणास्त्रिविधा एव च पुद्गलाः सर्व एव भवन्ति, जीवाश्च सर्वेऽपि प्रयोगपरिणतपुद्गलानां प्रतनुकेऽनन्तभागे वर्तन्ते, यस्मादेवं तस्माज्जीवेभ्यः सकाशात्पुद्गला बहुभिरनन्तानन्तकैर्गुणिताः सिद्धा इति, आह च—"जं जेण परिग्गहियं तेयादि जिएण देहमेकेक्कं । तत्तो तमणंतगुणं पोग्गलपरिणामओ होइ ॥ १ ॥ तेयाओ पुण कम्मगमणंतगुणियं जओ विणिद्दिट्ठं । एवं ता अवबद्धाइं तेयगकम्माइं जीवेहिं ॥ २ ॥ इत्तोऽणंतगुणाइं तेसिं चिय जाणि होंति मुक्काइं । इह पुण थोवत्ताओ अग्गहणं सेसदेहाणं ॥ ३ ॥ जं तेसिं मुक्काइंपि होंति सट्ठाणऽणंतभागंमि । तेणं तदग्गहणमिहं

वद्धावद्धाण दोण्हंपि ॥४॥ इह पुण तेयसरीरगवद्धच्चिय पोग्गला अणंतगुणा। जीवेहिंतो किं पुण सहिता अवसेसरासीहिं ? ॥ ५ ॥ थोवा भणिया सुत्ते पन्नरसविहप्पओगपाओग्गा। तत्तो मीसपरिणया णंतगुणा पोग्गला भणिया ॥ ६ ॥ तो वीससापरिणया तत्तो भणिया अणंतसंगुणिया। एवं तिविहपरिणया सव्वेवि य पोग्गला लोए ॥ ७ ॥ जं जीवा सव्वेवि य एक्कंमि पओगपरिणयाणंपि। वट्टंति पोग्गलाणं अणंतभागंमि तणुयम्मि ॥८॥ वहुएहिं अणन्ताणंतएहिं तेण गुणिया जिएहिंतो। सिद्धा हवंति सव्वेवि पोग्गला सव्वलोगंमि ॥९॥" [जीवेन येन यत्तैजसादिशरीरमेकैकं परिगृहीतं तदनन्तगुणं ततो भवति पुद्गलपरिणामात् ॥१॥ तैजसात्पुनः कार्मणमनन्तगुणितं यतो विनिर्दिष्टम्। एवं तावज्जीवैर्वद्धानि तैजसकार्मणानि ॥२॥ इतोऽनन्तगुणानि तेभ्यश्चैव यानि मुक्तानि भवन्ति। शेषदेहानां पुनरिहाग्रहणं स्तोकत्वात् ॥३॥ यत्तानि मुक्तान्यपि स्वस्थानानन्तभागे भवन्ति। तेन तदग्रहणमिह द्वयोरपि वद्धावद्धयोः ॥४॥ इह पुनस्तैजसशरीरवद्धा एव पुद्गला अनन्तगुणाः। जीवेभ्योऽवशेषराशिभिः सहिताः किं पुनः ?॥ ५ ॥ सूत्रे पञ्चदशविधप्रयोगप्रायोग्याः स्तोका भणिताः। ततो मिश्रपरिणताः पुद्गला अनन्तगुणा भणिताः ॥ ६ ॥ ततो विश्रसापरिणतास्ततोऽनन्तगुणिता भणिताः। एवं त्रिविधपरिणताः सर्वेऽपि च लोके पुद्गलाः॥ ७ ॥ सर्वेऽपि न जीवाः प्रयोगपरिणतानां पुद्गलानामेकस्मिन् यत् तनुकेऽनन्तभागे वर्त्तन्ते॥ ८॥ ततः तेन जीवेभ्यो वहुभिर्यदनन्तानन्तैर्गुणिताः पुद्गलाः सर्वलोके सिद्धा भवन्ति सर्वेऽपि ॥९॥ ] ननु पुद्गलेभ्योऽनन्तगुणाः समया इति यदुक्तं तन्न संगतं, तेभ्यस्तेषां स्तोकत्वात्, स्तोकत्वं च मनुष्यक्षेत्रमात्रवर्त्तित्वात् समयानां पुद्गलानां च सकललोकवर्त्तित्वादिति, अत्रोच्यते, समयक्षेत्रे ये केचन द्रव्यपर्यायाः सन्ति तेषामेकैकस्मिन् साम्प्रतसमयो वर्त्तते, एवं च साम्प्रतः

समयो यस्मात्समयक्षेत्रद्रव्यपर्यवगुणो भवति तस्मादनन्ताः समया एकैकस्मिन् समये भवन्तीति, आह च—"होंति य अणंतगुणिया अद्धासमया उ पोग्गलेहिंतो । नणु थोवा ते नरखेत्तमेत्तवत्तणाओत्ति ॥१॥ भन्नइ समयक्खेत्तंमि सन्ति जे केइ दव्वपज्जाया । वट्टइ संपयसमओ तेसिं पत्तेयमेक्केक्के ॥ २ ॥ एवं संपयसमओ जं समयक्खेत्तपज्जवब्भत्थो । तेणाणंता समया भवंति एक्केक्कसमयंमि ॥ ३ ॥" [ पुद्गलेभ्योऽनन्तगुणा अद्धासमया भवन्ति । ननु ते स्तोकाः स्युर्नरक्षेत्रमात्रे वर्त्तमानत्वात् ॥ १ ॥ भण्यते समयक्षेत्रे ये केचिद् द्रव्यपर्यायाः सन्ति तेषां प्रत्येकमेकैकस्मिन् साम्प्रतसमयो वर्त्तते ॥ २ ॥ एवं साम्प्रतसमयो यत्समयक्षेत्रपर्यवाभ्यस्तस्तेनानन्ताः समया एकैकस्मिन् समये भवन्ति ॥ ३ ॥ ] एवं च वर्त्तमानोऽपि समयः पुद्गलेभ्योऽनन्तगुणो भवति, एकद्रव्यस्यापि पर्यवाणामनन्तानन्तत्वात्, किञ्च—न केवलमित्थं पुद्गलेभ्योऽनन्तगुणाः समयाः सर्वलोकद्रव्यप्रदेशपर्यायेभ्योऽप्यनन्तगुणास्ते संभवन्ति, तथाहि—यत् समस्तलोकद्रव्यप्रदेशपर्यवराशेः समयक्षेत्रद्रव्यप्रदेशपर्यवराशिना भक्ताल्लभ्यते तावत्सु समयेषु तात्त्विकेषु गतेषु लोकद्रव्यप्रदेशपर्यवसङ्ख्यासमाना औपचारिकसमयसङ्ख्या लभ्यते, एतद्भावना चैवं—किलासद्भावकल्पनया लक्षं लोकद्रव्यप्रदेशपर्यवाणां तस्य समयक्षेत्रद्रव्यप्रदेशपर्यवराशिना कल्पनया सहस्रमानेन भागे हृते शतं लब्धं, ततश्च किल तात्त्विकसमयशते गते लोकद्रव्यप्रदेशपर्यवसङ्ख्यातुल्या समयक्षेत्रद्रव्यप्रदेशपर्यवरूपसमयसङ्ख्या लभ्यते, समयक्षेत्रापेक्षयाऽसङ्ख्यातगुणलोकस्य कल्पनया शतगुणत्वात्, तथाऽन्येष्वपि तावत्सु तात्त्विकसमयेषु गतेषु तावन्त एवौपचारिकसमया भवन्तीति, एवमसङ्ख्यातेषु कल्पनया शतमानेषु तात्त्विकसमयेषु पौनःपुन्येन गतेष्वनन्ततमायां कल्पनया सहस्रतमायां वेलायां गता भवन्ति तात्त्विकसमयालोकद्रव्यप्रदेशपर्यव-

मात्राः कल्पनया लक्षप्रमाणाः, एवं चैकैकस्मिंस्तात्त्विकसमयेऽनन्तानामौपचारिकसमयानां भावात्सर्वलोकद्रव्यप्रदेशपर्यवरा-शेरपि समया अनन्तगुणाः प्राप्नुवन्ति किं पुनः पुद्गलेभ्य इति, यदाह—"जं सव्वलोगदव्वप्पएसपज्जवगणस्स भइयस्स । लब्भइ समयक्खेत्तप्पएसपज्जायपिंडेण ॥ १ ॥ एवइसमएहिं गएहिं लोगपज्जवसमा समयसंखा । लब्भइ अन्नेहिंपि य तत्ति-यमेत्तेहिं तावइया ॥ २ ॥ एवमसंखेज्जेहिं समएहिं गएहिं तो गया होंति । समयाओ लोगदव्वप्पएसपज्जायमेत्ताओ ॥ ३ ॥ इय सव्वलोगपज्जवरासीओवि समया अणंतगुणा । पावंति गणेहंता किं पुण ता पोग्गलेहिंतो ?॥ ४ ॥" [यत्समयक्षेत्रप्रदेश-पर्यायपिण्डेन भक्तस्य सर्वलोकद्रव्यप्रदेशपर्यवगणस्य लभ्यते ॥१॥ एतावत्सु समयेषु गतेषु लोकपर्यायसमा समयसङ्ख्या लभ्यते अन्यैरपि तावन्मात्रैस्तावती ॥२॥ एवमसङ्ख्येयेषु समयेषु गतेषु ते लोकद्रव्यप्रदेशपर्यायप्रमाणाः समया गता भवंति ॥ ३ ॥ एवं सर्वलोकपर्यवराशेरपि समया अनन्तगुणा गण्यमाना भवन्ति किं पुनस्ते पुद्गलेभ्यः ? ॥ ४ ॥] अन्यस्तु प्रेरयति—उत्कृष्टतोऽपि षण्मासमात्रमेव सिद्धिगतेरन्तरं भवति तेन च सेत्स्यद्भ्यः सिद्धेभ्योऽपि च जीवेभ्योऽसङ्ख्यातगुणा एव समया भवन्ति कथं पुनः सर्वजीवेभ्योऽनन्तगुणा भविष्यन्तीति, इहाप्यौपचारिकसमयापेक्षया समयानामनन्तगुणत्वं वाच्यमिति, अथ समयेभ्यो द्रव्याणि विशेषाधिकानीति, कथम् ?, अत्रोच्यते, यस्मात्सर्वे समयाः प्रत्येकं द्रव्याणि शेषाणि च जीवपु-द्गलधर्मास्तिकायादीनि तेष्वेव क्षिप्तानीत्यतः केवलेभ्यः समयेभ्यः सकाशात् समस्तद्रव्याणि विशेषाधिकानि भवन्ति न सङ्ख्यातगुणादीनि, समयद्रव्यापेक्षया जीवादिद्रव्याणामल्पतरत्वादिति, उक्तञ्च—"एत्तो समएहिंतो होंति विसेसाहियाइं दव्वाइं । जं भेया सव्वेच्चिय समया दव्वाइं पत्तेयं ॥ १ ॥ सेसाइं जीवपोग्गलधम्माधम्मंबराइं छूढाइं । दव्वट्ठाए समएसु

तेण दव्वा विसेसहिया ॥२॥" [ भेदा यत्सर्वेऽपि समयाः प्रत्येकं द्रव्याणीतः समयेभ्यो द्रव्याणि विशेषाधिकानि भवन्ति ॥१॥ शेषाणि जीवपुद्गलधर्माधर्माकाशानि प्रक्षिप्तानि द्रव्यार्थतया समयेषु तेन द्रव्याणि विशेषाधिकानि ॥२॥ ] नन्वद्धासमयानां कस्माद्द्रव्यत्वमेवेष्यते ? समयस्कन्धापेक्षया प्रदेशार्थत्वस्यापि तेषां युज्यमानत्वात्, तथाहि–यथा स्कन्धो द्रव्यं सिद्धं स्कन्धावयवा अपि यथा प्रदेशाः सिद्धाः एवं समयस्कन्धवर्त्तिनः समया भवन्ति प्रदेशाश्च द्रव्यं चेति, अत्रोच्यते, परमाणूनामन्योऽन्यसव्यपेक्षत्वेन स्कन्धत्वं युक्तं, अद्धासमयानां पुनरन्योऽन्यापेक्षिता नास्ति, यतः कालसमयाः प्रत्येकत्वे च काल्पनिकस्कन्धाभावे च वर्त्तमानाः प्रत्येकवृत्तय एव तत्स्वभावत्वात् तस्मात्तेऽन्योऽन्यनिरपेक्षाः अन्योऽन्यनिरपेक्षत्वाच्च न ते वास्तवस्कन्धनिष्पादकास्ततश्च नैषां प्रदेशार्थतेति, उक्तञ्चात्र—"आहऽद्धासमयाणं किं पुण दवट्ठए व नियमेणं। तेसि पएसट्ठाविहु जुज्जइ खंधं समासज्ज ॥ १ ॥ [ ग्रन्थाग्रम् १७००० ] सिद्धं खंधो दवं तदवयवाविय जहा पएसत्ति। इय तवत्ती समया होंति पएसा य दवं च ॥ २ ॥ भन्नइ परमाणूणं अन्नोन्नमवेक्ख खंधया सिद्धा। अद्धासमयाणं पुण अन्नोन्नावेक्खया नत्थि ॥ ३ ॥ अद्धासमया जम्हा पत्तेयत्ते य खंधभावे य। पत्तेयवत्तिणो च्चिय ते तेणऽन्नोन्ननिरवेक्खा ॥४॥" [ आहाद्धासमयानां किं पुनर्नियमेन द्रव्यार्थतैव तेषां स्कन्धं समाश्रित्य प्रदेशार्थताऽपि युज्यते ॥१॥ स्कन्धो द्रव्यं सिद्धं तदवयवा अपि च यथा प्रदेशा इति। एवं तद्वर्त्तिनः समयाः प्रदेशा भवन्ति द्रव्यं च ॥ २ ॥ भण्यते परमाणूनामन्योऽन्यापेक्षया स्कन्धता सिद्धा। अद्धासमयानां पुनरन्योऽन्यापेक्षता नास्ति ॥ ३ ॥ अद्धासमया यस्मात्प्रत्येकत्वे स्कन्धभावे च। प्रत्येकवर्त्तिनश्चैव ते तेनान्योऽन्यनिरपेक्षाः ॥ ४ ॥ ] अथ द्रव्येभ्यः प्रदेशा अनन्तगुणा इत्येतत्कथम् ?, उच्यते,

त्थिकायअधम्मत्थिकाय जाव अद्धासमयाणं दव्वट्ठयाए० एएसि णं अप्पाबहुगं जहा बहुवत्तव्वयाए तहेव निर-
वसेसं ॥ धम्मत्थिकाए णं भंते ! किं ओगाढे अणोगाढे ?, गोयमा ! ओगाढे नो अणोगाढे, जइ ओगाढे किं
संखेज्जपएसोगाढे असंखेज्जपएसोगाढे अणंतपएसोगाढे ?, गोयमा ! नो संखेज्जपएसोगाढे असंखेज्जपएसोगाढे
नो अणंतपएसोगाढे, जइ असंखेज्जपएसोगाढे किं कडजुम्मपएसोगाढे ? पुच्छा, गोयमा ! कडजुम्मपएसोगा-
ढे नो तेओगे नो दावरजुम्मे नो कलियोगपएसोगाढे, एवं अधम्मत्थिकायेवि, एवं आगासत्थिकायेवि, जीव-
त्थिकाये पुग्गलत्थिकाये अद्धासमए एवं चेव ॥ इमा णं भंते ! रयणप्पभा पुढवी किं ओगाढा अणोगाढा
जहेव धम्मत्थिकाए एवं जाव अहेसत्तमा, सोहम्मे एवं चेव, एवं जाव ईसिपब्भारा पुढवी ॥ ( सूत्रं ७३४ )

'कति ण'मित्यादि, 'जुम्म'त्ति सञ्ज्ञाशब्दत्वाद्राशिविशेषाः । 'नेरइयाणं भंते ! कइ जुम्मा ?' इत्यादौ 'अट्ठो तहे-
व'त्ति स चार्थः—'जेणं नेरइया चउक्कएणं अवहारेणं २ अवहीरमाणा २ चउपज्जवसिया ते णं नेरइया कडजुम्मे'त्यादि
इति । वनस्पतिकायिकसूत्रे 'उववायं पडुच्च'त्ति, यद्यपि वनस्पतिकायिका अनन्तत्वेन स्वभावात् कृतयुग्मा एव प्राप्नु-
वन्ति तथाऽपि गत्यन्तरेभ्य एकादिजीवानां तत्रोत्पादमङ्गीकृत्य तेषां चतूरूपत्वमयौगपद्येन भवतीत्युच्यते, उद्धर्त्तनामप्य-
ङ्गीकृत्य स्यादेतत् केवलं सेह न विवक्षितेति ॥ अथ कृतयुग्मादिभिरेव राशिभिर्द्रव्याणां प्ररूपणायेदमाह—'कतिविहा णं
भंते ! सव्वदव्वा' इत्यादि, तत्र 'कतिविधानि' कतिस्वभावानि कतीत्यर्थः, 'धम्मत्थिकाए ण'मित्यादि 'कलियोगे'त्ति एक-
त्वाद्धर्मास्तिकायस्य चतुष्कापहाराभावेनैकस्यैवावस्थानात्कल्योज एवासाविति, 'जीवत्थी'त्यादि, जीवद्रव्याणामवस्थिता-

नन्तत्वात्कृतयुग्मतैव, 'पोग्गलत्थिकाए' इत्यादि, पुद्गलास्तिकायस्यानन्तभेदत्वेऽपि सङ्घातभेदभाजनत्वाच्चातुर्विध्यमध्येयं, अद्धासमयानां त्वतीतानागतानामवस्थितानन्तत्वात्कृतयुग्मत्वमत एवाह—'अद्धासमए जहा जीवत्थिकाए'त्ति ॥ उक्ता द्रव्यार्थता, अथ प्रदेशार्थता तेषामेवोच्यते—'धम्मत्थी'त्यादि, सर्वाण्यपि द्रव्याणि कृतयुग्मानि प्रदेशार्थतया । अवस्थितासङ्ख्यातप्रदेशत्वादवस्थितानन्तप्रदेशत्वाच्चेति ॥ अथैतेषामेवाल्पबहुत्वमुच्यते—'एएसि ण' मित्यादि, 'जहा बहुवत्तव्वयाए'त्ति यथा प्रज्ञापनायास्तृतीयपदे, तच्चैवमर्थतः—धर्मास्तिकायादयस्त्रयो द्रव्यार्थतया तुल्या एकैकद्रव्यरूपत्वात्, तदन्यापेक्षया चाल्पे, जीवास्तिकायस्ततोऽनन्तगुणो जीवद्रव्याणामनन्तत्वात्, एवं पुद्गलास्तिकायाद्धासमयाः, प्रदेशार्थचिन्तायां त्वाद्यौ प्रत्येकमसङ्ख्येयप्रदेशत्वेन तुल्यौ तदन्येभ्यः स्तोकौ च, जीवपुद्गलाद्धासमयाकाशास्तिकायास्तु क्रमेणानन्तगुणा इत्यादि ॥ अथ द्रव्याण्येव क्षेत्रापेक्षया कृतयुग्मादिभिः प्ररूपयन्नाह—'धम्मत्थिकाए' इत्यादि, 'असंखेज्जपएसोगाढे'त्ति असङ्ख्यातेषु लोकाकाशप्रदेशेष्ववगाढोऽसौ लोकाकाशप्रमाणत्वात्तस्येति, 'कडजुम्मपएसोगाढे'त्ति लोकस्यावस्थितासङ्ख्येयप्रदेशत्वेन कृतयुग्मप्रदेशता, लोकप्रमाणत्वेन च धर्मास्तिकायस्यापि कृतयुग्मतैव, एवं सर्वास्तिकायानां लोकावगाहित्वात्तेषां नवरमाकाशास्तिकायस्यावस्थितानन्तप्रदेशत्वादात्मावगाहित्वाच्च कृतयुग्मप्रदेशावगाढताऽद्धासमयस्य चावस्थितासङ्ख्येयप्रदेशात्मकमनुष्यक्षेत्रावगाहित्वादिति । अथावगाहप्रस्तावादिदमाह—'इमा ण'मित्यादि ॥ अथ कृतयुग्मादिभिरेव जीवादीनि षड्विंशतिपदान्येकत्वपृथक्त्वाभ्यां निरूपयन्नाह—

जीवे णं भंते ! दव्वट्टयाए किं कडजुम्मे पुच्छा, गोयमा ! नो कडजुम्मे नो तेयोगे नो दावरजुम्मे कलिओए,

एवं नेरइएवि एवं जाव सिद्धे । जीवा णं भंते ! दव्वट्ठयाए किं कडजुम्मा ? पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मा नो तेयोगा नो दावर० नो कलिओगा, विहाणादेसेणं नो कडजुम्मा नो तेयोगा नो दावरजुम्मा कलियोगा, नेरइया णं भंते ! दव्वट्ठयाए पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं णो कडजुम्मा णो तेयोगा णो दावरजुम्मा कलिओगा एवं जाव सिद्धा ॥ जीवे णं भंते ! पए-सट्ठयाए किं कड० पुच्छा, गोयमा ! जीवपएसे पडुच्च कडजुम्मे नो तेयोगे नो दावर० नो कलियोगे, सरीर-पएसे पडुच्च० सिय कडजुम्मे जाव सिय कलियोगे, एवं जाव वेमाणिए । सिद्धे णं भंते ! पएस० किं कडजु-म्मे ? पुच्छा, गोयमा ! कडजुम्मे नो तेयोगे नो दावरजुम्मे नो कलिओए । जीवा णं भंते ! पएसट्ठयाए किं कडजुम्मे ? पुच्छा, गोयमा ! जीवपएसे पडुच्च ओघादेसेणवि विहाणादेसेणवि कडजुम्मा नो तेयोगा नो दावर० नो कलिओगा, सरीरपएसे पडुच्च ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं कडजुम्मावि जाव कलियोगावि, एवं नेरइयावि, एवं जाव वेमाणिया । सिद्धा णं भंते ! पुच्छा, गोयमा ! ओघादेसेणवि विहाणादेसेणवि कडजुम्मा नो तेयोगा नो दावरजुम्मा नो कलिओगा ॥ ( सूत्रं ७३५ )

'जीवे ण'मित्यादि, द्रव्यार्थतयैको जीवः एकमेव द्रव्यं तस्मात्कल्योजो न शेषाः । 'जीवा ण'मित्यादि, जीवा अव-स्थितानन्तत्वादोघादेशेन—सामान्यतः कृतयुग्माः, 'विहाणादेसेणं'ति भेदप्रकारेणैकैकश इत्यर्थः कल्योजा एकत्वात्तत्स्वरू-पस्य । 'नेरइया ण'मित्यादौ 'ओघादेसेणं'ति सर्व एव परिगण्यमानाः 'सिय कडजुम्म'त्ति कदाचिच्चतुष्कापहारेण

चतुरस्रा भवन्ति, एवं 'सिय तेओयाओ' इत्याद्यप्यवगन्तव्यमिति ॥ उक्ता द्रव्यार्थतया जीवादयः, अथ तथैव प्रदेशार्थतयोच्यन्ते—'जीवे ण'मित्यादि, 'जीवपएसे पडुच्च कडजुम्म'त्ति असङ्ख्यातत्वादवस्थितत्वाच्च जीवप्रदेशानां चतुरस्र एव जीवः प्रदेशतः, 'सरीरपएसे पडुच्चे'त्यादि, औदारिकादिशरीरप्रदेशानामनन्तत्वेऽपि संयोगवियोगधर्म्मत्वादयुगपच्चतुर्विधता स्यात् । 'जीवा ण'मित्यादि, 'ओघादेसेणवि विहाणादेसेणवि कडजुम्म'त्ति समस्तजीवानां प्रदेशा अनन्तत्वादवस्थितत्वाच्च एकैकस्य जीवस्य प्रदेशा असङ्ख्यातत्वादवस्थितत्वाच्च चतुरस्रा एव, शरीरप्रदेशापेक्षया त्वोघादेशेन सर्वजीवशरीरप्रदेशानामयुगपच्चातुर्विध्यमनन्तत्वेऽपि तेषां सङ्घातभेदभावेनानवस्थितत्वात्, 'विहाणादेसेणं कडजुम्मावी'त्यादि, विधानादेशेनैकैकजीवशरीरस्य प्रदेशगणनायां युगपच्चातुर्विध्यं भवति, यतः कस्यापि जीवशरीरस्य कृतयुग्मप्रदेशता कस्यापि त्र्योजप्रदेशतेत्येवमादीति ॥ अथ क्षेत्रतो जीवादि तथैवाह—

जीवे णं भंते ! किं कडजुम्मपएसोगाढे पुच्छा, गोयमा ! सिय कडजुम्मपएसोगाढे जाव सिय कलिओगपएसोगाढे, एवं जाव सिद्धे । जीवा णं भंते ! किं कडजुम्मपएसोगाढा पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोग० नो दावर० नो कलियोग०, विहाणादेसेणं कडजुम्मपएसोगाढावि जाव कलियोगपएसोगाढावि, नेरइयाणं पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मपएसोगाढा जाव सिय कलियोगपएसोगाढा, विहाणादेसेणं कडजुम्मपएसोगाढावि जाव कलियोगपएसोगाढावि, एवं एगिंदियसिद्धवज्जा सव्वेवि, सिद्धा एगिंदिया य जहा जीवा । जीवे णं भंते ! किं कडजुम्मसमयट्ठितीए जाव सिय क० पुच्छा, गोयमा ! कड-

जुम्मसमयट्ठितीए नो तेयोग० नो दावर० नो कलियोगसमयट्ठितीए। नेरइए णं भंते ! पुच्छा, गोयमा ! सिय कडजुम्मसमयट्ठितीए जाव सिय कलियोगसमयट्ठितीए, एवं जाव वेमाणिए, सिद्धे जहा जीवे। जीवा णं भंते ! पुच्छा, गोयमा ! ओघादेसेणवि विहाणादेसेणवि कडजुम्मसमयट्ठितीया नो तेओग० नो दावर० नो कलिओग०। नेरइया णं० पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मसमयट्ठितीया जाव सिय कलियोगसमयट्ठितीयावि, विहाणादेसेणं कडजुम्मसमयट्ठितीयावि जाव कलियोगसमयट्ठितीयावि, एवं जाव वेमाणिया, सिद्धा जहा जीवा ॥ ( सूत्रं ७३६ )

'जीवे ण'मित्यादि, औदारिकादिशरीराणां विचित्रावगाहनत्वाच्चतुरग्रादित्वमस्तीत्यत एवाह—'सिय कडजुम्मे'त्यादि। जीवा णं भंते !' इत्यादि, समस्तजीवैरवगाढानां प्रदेशानामसङ्ख्यातत्वादवस्थितत्वाच्चतुरग्रता एवेत्योघादेशेन कृतयुग्मप्रदेशावगाढाः, विधानादेशतस्तु विचित्रत्वादवगाहनाया युगपच्चतुर्विधास्ते, नारकाः पुनरोघतो विचित्रपरिणामत्वेन विचित्रशरीरप्रमाणत्वेन विचित्रावगाहप्रदेशप्रमाणत्वादयौगपद्येन चतुर्विधा अपि, विधानतस्तु विचित्रावगाहनत्वादेकदाऽपि चतुर्विधास्ते भवन्ति, 'एवं एगिंदियसिद्धवज्जा सव्वेवि'त्ति असुरादयो नारकवद्वक्तव्या इत्यर्थः, तत्रौघतस्ते कृतयुग्मादयोऽयौगपद्येन विधानतस्तु युगपदेवेति, 'सिद्धा एगिंदिया य जहा जीव'त्ति सिद्धा एकेन्द्रियाश्च यथा जीवास्तथा वाच्या इत्यर्थः, ते चौघतः कृतयुग्मा एव विधानतस्तु युगपच्चतुर्विधा अपि, युक्तिस्तूभयत्रापि प्राग्वत् ॥ अथ स्थितिमाश्रित्य जीवादि तथैव प्ररूप्यते—'जीवे ण'मित्यादि, तत्रातीतानागतवर्त्तमानकालेषु जीवोऽस्तीति सर्वाद्धाया अनन्त-

समयात्मकत्वादवस्थितत्वाच्चासौ कृतयुग्मसमयस्थितिक एव, नारकादिस्तु विचित्रसमयस्थितिकत्वात्कदाचिच्चतुरस्रः कदाचिदन्यत्रितयवर्त्तीति । 'जीवा ण'मित्यादि, बहुत्वे जीवा ओघतो विधानतश्च चतुरस्रसमयस्थितिका एव अनाद्यनन्तत्वेनानन्तसमयस्थितिकत्वात्तेषां, नारकादयः पुनर्विचित्रसमयस्थितिकाः, तेषां च सर्वेषां स्थितिसमयमीलने चतुष्कापहारे चौघादेशेन स्यात् कृतयुग्मसमयस्थितिका इत्यादि, विधानतस्तु युगपच्चतुर्विधा अपि ॥ अथ भावतो जीवादि तथैव प्ररूप्यते—

जीवे णं भंते ! कालवन्नपज्जवेहिं किं कडजुम्मे ? पुच्छा, गोयमा ! जीवपएसे पडुच्च णो कडजुम्मे जाव णो कलियोगे सरीरपएसे पडुच्च सिय कडजुम्मे जाव सिय कलियोगे, एवं जाव वेमाणिए, सिद्धो ण चेव पुच्छिज्जति । जीवा णं भंते ! कालवन्नपज्जवेहिं पुच्छा, गोयमा ! जीवपएसे पडुच्च ओघादेसेणवि विहाणादेसेणवि णो कडजुम्मा जाव णो कलिओगा, सरीरपएसे पडुच्च ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं कडजुम्मावि जाव कलि०, एवं जाव वेमा०, एवं नीलवन्नपज्जवेहिं दंडओ भा० एगत्तपुहत्तेणं एवं जाव लुक्खफासपज्जवेहिं ॥ जीवे णं भंते ! आभिणिबोहियणाणपज्जवेहिं किं कडजुम्मे पुच्छा, गोयमा ! सिय कडजुम्मे जाव सिय कलियोगे, एवं एगिंदियवज्जं जाव वेमाणिए । जीवा णं भंते ! आभिणिबोहियणाणपज्जवेहिं पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं कडजुम्मावि जाव कलियोगावि, एवं एगिंदियवज्जं जाव वेमाणिया, एवं सुयणाणपज्जवेहिवि, ओहिणाणपज्जवेहिवि एवं

चेव, नवरं विकलिंदियाणं नत्थि ओहिनाणं, मणपज्जवनाणंपि एवं चेव, नवरं जीवाणं मणुस्साण य, सेसाणं नत्थि, जीवे णं भंते ! केवलनाणप० किं कडजुम्मा पुच्छा, गोयमा ! कडजुम्मे णो तेयोगे णो दावरजुम्मे णो कलियोगे, एवं मणुस्सेवि, एवं सिद्धेवि, जीवा णं भंते ! केवलनाणपुच्छा, गोयमा ! ओघादेसेणवि विहाणादे० कडजुम्मा नो तेओ० नो दावर० णो कलियो०, एवं मणुस्सावि, एवं सिद्धावि । जीवे णं भंते! मइअन्नाणपज्जवेहिं किं कडजुम्मे० ?, जहा आभिणिबोहियणाणपज्जवेहिं तहेव दो दंडगा, एवं सुयन्नाणपज्जवेहिवि, एवं विभंगनाणपज्जवेहिवि । चक्खुदंसणअचक्खुदंसणओहिदंसणपज्जवेहिवि एवं चेव, नवरं जस्स जं अत्थि तं भाणियव्वं, केवलदंसणपज्जवेहिं जहा केवलनाणपज्जवेहिं ॥ ( सूत्रं ७३७ )

'जीवे ण'मित्यादि, 'जीवपएसे पडुच णो कडजुम्म'त्ति अमूर्त्तत्वाज्जीवप्रदेशानां न कालादिवर्णपर्यवानाश्रित्य कृतयुग्मादिव्यपदेशोऽस्ति, शरीरवर्णापेक्षया तु क्रमेण चतुर्विधोऽपि स्याद् अत एवाह—'सरीरे'त्यादि, 'सिद्धो न चेव पुच्छिज्जइ'त्ति अमूर्त्तत्वेन तस्य वर्णाद्यभावात् । 'आभिणिवोहियनाणपज्जवेहिं'ति आभिनिबोधिकज्ञानस्यावरणक्षयोपशमभेदेन ये विशेषास्तस्यैव च ये निर्विभागपलिच्छेदास्ते आभिनिबोधिकज्ञानपर्यवास्तैः, तेषां चानन्तत्वेऽपि क्षयोपशमस्य विचित्रत्वेनानवस्थितपरिणामत्वादयौगपद्येन जीवश्चतुरग्रादिः स्यात्, 'एवं एगिंदियवज्जं'ति एकेन्द्रियाणां सम्यक्त्वाभावान्नास्ति आभिनिबोधिकमिति न तदपेक्षया तेषां कृतयुग्मादिव्यपदेश इति । 'जीवा ण'मित्यादि, बहुत्वे समस्तानामाभिनिबोधिकज्ञानपर्यवाणां मीलने चतुष्कापहारे चायुगपच्चतुरग्रादित्वमोघतः स्याद्विचित्रत्वेन क्षयोपशमस्य तत्पर्यायाणामनव-

स्थितत्वात्, विधानतस्त्वेकदैव चत्वारोऽपि तद्भेदाः स्युरिति, केवलज्ञानपर्यवपक्षे च सर्वत्र चतुरग्रत्वमेव वाच्यं, तस्यानन्तपर्यायत्वादवस्थितत्वाच्च, एतस्य च पर्याया अविभागपलिच्छेदरूपा एवावसेया न तु तद्विशेषा एकविधत्वात्तस्येति । 'दो दंडग'त्ति एकत्वबहुत्वकृतौ द्वौ दण्डकाविति ॥ पूर्वं 'सरीरपएसे पडुच्चे'त्युक्तमिति शरीरप्रस्तावाच्छरीराणि प्ररूपयन्नाह—

कति णं भंते ! सरीरगा पन्नत्ता ?, गोयमा ! पंच सरीरगा प०, तं०—ओरालिए जाव कम्मए, एत्थ सरीरगपदं निरवसेसं भाणियवं जहा पन्नवणाए ॥ ( सूत्रं ७३८ ) जीवा णं भंते ! किं सेया णिरेया ?, गोयमा ! जीवा सेयावि निरेयावि, से केणट्ठेणं भंते ! एवं वुच्चति जीवा सेयावि निरेयावि ?, गोयमा ! जीवा दुविहा पन्नत्ता, तंजहा—संसारसमावन्नगा य असंसारसमावन्नगा य, तत्थ णं जे ते असंसारसमावन्नगा ते णं सिद्धा, सिद्धा णं दुविहा पन्नत्ता, तंजहा—अणंतरसिद्धा य परंपरसिद्धा य, तत्थ णं जे ते परंपरसिद्धा ते णं निरेया, तत्थ णं जे ते अणंतरसिद्धा ते णं सेया, ते णं भंते ! किं देसेया सवेया ?, गोयमा ! णो देसेया सवेया, तत्थ णं जे ते संसारसमावन्नगा ते दुविहा पं०, तंजहा—सेलेसिपडिवन्नगा य असेलेसिपडिवन्नगा य, तत्थ णं जे ते सेलेसीपडिवन्नगा ते णं निरेया, तत्थ णं जे ते असेलेसीपडिवन्नगा ते णं सेया, ते णं भंते ! किं देसेया सवेया ?, गोयमा ! देसेयावि सवेयावि, से तेणट्ठेणं जाव निरेयावि । नेरइया णं भंते ! किं देसेया सवेया ?, गोयमा ! देसेयावि सवेयावि, से केणट्ठेणं जाव सवेयावि ?, गोयमा ! नेरइया दुविहा पं०, तं०—विग्गहगतिस-

मावन्नगा य अविग्गहगइसमावन्नगा य, तत्थ णं जे ते विग्गहगतिसमावन्नगा ते णं सव्वेया, तत्थ णं जे ते अविग्गहगतिसमावन्नगा ते णं देसेया, से तेणट्ठेणं जाव सव्वेयावि, एवं जाव वेमाणिया ॥ ( सूत्रं ७३९)

'कइ ण'मित्यादि, 'एत्थ सरीरगपय'मित्यादि, शरीरपदं च प्रज्ञापनायां द्वादशं पदं, तच्चैवं-'नेरइयाणं भंते ! कति सरीरा पन्नत्ता ?, गो० ! तओ सरीरा पन्नत्ता, तं०-वेउव्विए तेयए कम्मए य' इत्यादि ॥ शरीरवन्तश्च जीवाश्चलस्वभावा भवन्तीति सामान्येन जीवानां चलत्वादि पृच्छन्नाह—'जीवा ण'मित्यादि, 'सेय'त्ति सहैजेन-चलनेन सैजाः 'निरेय'त्ति निश्चलनाः 'अणंतरसिद्धा य'त्ति न विद्यते अन्तरं-व्यवधानं सिद्धत्वस्य येषां तेऽनन्तरास्ते च ते सिद्धाश्चेत्यनन्तरसिद्धाः ये सिद्धत्वस्य प्रथमसमये वर्त्तन्ते, ते च सैजाः, सिद्धिगमनसमयस्य सिद्धत्वप्राप्तिसमयस्य चकत्वादिति, परम्परसिद्धास्तु सिद्धत्वस्य द्व्यादिसमयवृत्तयः, 'देसेय'त्ति देशैजाः-देशतश्चलाः 'सव्वेय'त्ति सर्वैजाः-सर्वतश्चलाः 'नो देसेया सव्वेय'त्ति सिद्धानां सर्वात्मना सिद्धौ गमनात्सर्वैजत्वमेव, 'तत्थ णं जे ते सेलेसीपडिवन्नगा ते णं निरेय'त्ति निरुद्धयोगत्वेन स्वभावतोऽचलत्वात्तेषां 'देसेयावि सव्वेयावि'त्ति इलिकागत्या उत्पत्तिस्थानं गच्छंतो देशैजाः प्राक्तनशरीरस्थस्य देशस्य विवक्षया निश्चलत्वात्, गेन्दुकगत्या तु गच्छन्तः सर्वैजाः, सर्वात्मना तेषां गमनप्रवृत्तत्वादिति । 'विग्गहगइसमावन्नग'त्ति विग्रहगतिसमापन्नका ये मृत्वा विग्रहगत्योत्पत्तिस्थानं गच्छन्ति 'अविग्गहगइसमावन्नग'त्ति अविग्रहगतिसमापन्नकाः-विग्रहगतिनिषेधादृजुगतिका अवस्थिताश्च, तत्र विग्रहगतिसमापन्ना गेन्दुकगत्या गच्छन्तीतिकृत्वा सर्वैजाः, अविग्रहगतिसमापन्नकास्त्ववस्थिता एवेह विवक्षिता इति संभाव्यते, ते च देहस्था एव मारणान्तिकसमुद्घातात् देशैने-

लिकागत्योत्पत्तिक्षेत्रं स्पृशन्तीति देशैजाः स्वक्षेत्रावस्थिता वा हस्तादिदेशानामेजनादिति ॥ उक्ता जीववक्तव्यता अथाजीववक्तव्यतामाह—

परमाणुपोग्गला णं भंते ! किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, एवं जाव अणंतपएसिया खंधा । एगपएसोगाढा णं भंते ! पोग्गला किं संखेज्जा असंखेज्जा अणंता ?, एवं चेव, एवं जाव असंखेज्जपएसोगाढा । एगसमयठितीया णं भंते ! पोग्गला किं संखेज्जा ?, एवं चेव, एवं जाव असंखेज्जसमयट्ठितीया । एगगुणकालगा णं भंते ! पोग्गला किं संखेज्जा० ?, एवं चेव, एवं जाव अणंतगुणकालगा, एवं अवसेसावि वण्णगंधरसफासा णेयव्वा जाव अणंतगुणलुक्खत्ति । एएसि णं भंते ! परमाणुपोग्गलाणं दुपएसियाण य खंधाणं दव्वट्ठयाए कयरे२हिंतो अप्पा वा बहुया वा तुल्ला वा वि० ?, गोयमा ! दुपएसिएहिंतो खंधेहिंतो परमाणुपोग्गला दव्वट्ठयाए बहुगा, एएसि णं भंते! दुपएसियाणं तिप्पएसाण य खंधाणं दव्वट्ठयाए कयरे२हिंतो बहुया० ?, गोयमा ! तिपएसियखंधेहिंतो दुपएसिया खंधा दव्वट्ठयाए बहुया, एवं एएणं गमएणं जाव दसपएसिएहिंतो खंधेहिंतो नवपएसिया खंधा दव्वट्ठयाए बहुया । एएसि णं भंते ! दसपएसिए पुच्छा, गोयमा ! दसपएसिएहिंतो खंधेहिंतो संखेज्जपएसिया खंधा दव्वट्ठयाए बहुया, एएसि णं भंते ! संखेज्ज० पुच्छा, गोयमा ! संखेज्जपएसिएहिंतो खंधेहिंतो असंखेज्जपएसिया खंधा दव्वट्ठयाए बहुया, एएसि णं भंते ! असंखेज्ज० पुच्छा, गो० !, अणंतपएसिएहिंतो खंधेहिंतो असंखेज्जप

एसिया खंधा दव्वट्ठयाए बहुया, एएसि णं भंते ! परमाणुपोग्गलाणं दुपएसियाण य खंधाणं पएसट्ठयाए कयरे-२ हिंतो बहुया ?, गोयमा ! परमाणुपोग्गलेहिंतो दुपएसिया खंधा पएसट्ठयाए बहुया, एवं एएणं गमएणं जाव नवपएसिएहिंतो खंधेहिंतो दसपएसिया खंधा पएसट्ठयाए बहुया, एवं सव्वत्थ पुच्छियव्वं, दसपएसिएहिंतो खंधेहिंतो संखेज्जपएसिया खंधा पएस० बहुया, संखेज्जपएसिएहिंतो असंखेज्जपएसिया खंधा पएसट्ठयाए बहुया, एएसि णं भंते ! असंखेज्जपएसियाणं पुच्छा, गोयमा ! अणंतपएसिएहिंतो खंधेहिंतो असंखेज्जपएसिया खंधा पएसट्ठयाए बहुया ॥ एएसि णं भंते ! एगपएसोगाढाणं दुपएसोगाढाण य पोग्गलाणं दव्वट्ठयाए कयरे२हिंतो जाव विसेसाहिया वा ?, गोयमा ! दुपएसोगाढेहिंतो पोग्गलेहिंतो एगपएसोगाढा पोग्गला दव्वट्ठयाए विसेसाहिया, एवं एएणं गमएणं तिपएसोगाढेहिंतो पोग्गलेहिंतो दुपएसोगाढा पोग्गला दव्वट्ठयाए विसेसा० जाव दसपएसोगाढेहिंतो पोग्गले हिंतो नवपएसोगाढा पोग्गला दव्वट्ठयाए विसेसाहिया, दसपएसोगाढेहिंतो पोग्गलेहिंतो संखिज्जपएसोगाढा पोग्गला दव्वट्ठयाए बहुया, संखेज्जपएसोगाढेहिंतो पोग्गलेहिंतो असंखेज्जपएसोगाढा पोग्गला दव्वट्ठयाए बहुया, पुच्छा सव्वत्थ भाणि० । एएसि णं भंते ! एगपएसोगाढाणं दुपएसोगाढाण य पोग्गलाणं पएसट्ठयाए कयरे२हिंतो० विसेसा० ?, गोयमा ! एगपएसोगाढेहिंतो पोग्गलेहिंतो दुपएसोगाढा पोग्गला पएसट्ठयाए विसेसा०, एवं जाव नवपएसोगाढेहिंतो पोग्गलेहिंतो दसपएसोगाढा पोग्गला पएस० विसेसाहिया, दसपएसोगाढेहिंतो पोग्गलेहिंतो संखेज्जपएसोगाढा पोग्गला पएसट्ठयाए

बहुया, संखेज्जपएसोगाढेहिंतो पोग्गलेहिंतो असंखेज्जपएसोगाढा पोग्गला पएसट्ठयाए बहुया। एएसि णं भंते! एगसमयट्ठितीयाणं दुसमयट्ठितीयाण य पोग्गलाणं दव्वट्ठयाए जहा ओगाहणाए वत्तव्वया एवं ठितीएवि। एएसि णं भंते! एगगुणकालयाणं दुगुणकालयाण य पोग्गलाणं दव्वट्ठयाए एएसि णं जहा परमाणुपोग्गलादीणं तहेव वत्तव्वया निरवसेसा, एवं सव्वेसिं वन्नगंधरसाणं, एएसि णं भंते! एगगुणकक्खडाणं दुगुणकक्खडाण य पोग्गलाणं दव्वट्ठयाए कयरे२हिंतो० विसेसाहिया?, गोयमा! एगगुणकक्खडेहिंतो पोग्गलेहिंतो दुगुणकक्खडा पोग्गला दव्वट्ठयाए विसेसाहिया, एवं जाव नवगुणकक्खडेहिंतो पोग्गलेहिंतो दसगुणकक्खडा पोग्गला दव्वट्ठयाए विसे०, दसगुणकक्खडेहिंतो पोग्गलेहिंतो संखिज्जगुणकक्खडा पोग्गला दव्वट्ठयाए बहुया, संखेज्जगुणकक्खडेहिंतो पोग्गलेहिंतो असंखेज्जगुणकक्खडा पोग्गला दव्वट्ठयाए बहुया, असंखेज्जगुणकक्खडेहिंतो पोग्गलेहिंतो अणंतगुणकक्खडा पोग्गला दव्वट्ठयाए बहुया, एवं पएसट्ठयाए सव्वत्थ पुच्छा भाणियव्वा, जहा कक्खडा एवं मउयगरुयलहुयावि, सीयउसिणनिद्धलक्खा जहा वन्ना ॥ ( सूत्रं ७४० )

'परमाणुपोग्गलाण'मित्यादि, तत्र बहुवक्तव्यतायां द्व्यणुकेभ्यः परमाणवो बहवः सूक्ष्मत्वादेकत्वाच्च, द्विप्रदेशकास्त्वणुभ्यः स्तोकाः स्थूलत्वादिति वृद्धाः वस्तुस्वभावादिति चान्ये, एवमुत्तरत्रापि पूर्वे २ बहवस्तदुत्तरे तु स्तोकाः, दशप्रदेशिकेभ्यः पुनः सङ्ख्यातप्रदेशिका बहवः, सङ्ख्यातस्थानानां बहुत्वात्, स्थानबहुत्वादेव च सङ्ख्यातप्रदेशिकेभ्योऽसङ्ख्यातप्रदेशिका बहवः, अनन्तप्रदेशिकेभ्यस्तु असङ्ख्यातप्रदेशिका एव बहवस्तथाविधसूक्ष्मपरिणामात् । प्रदेशार्थचिन्तायां परमाणुभ्यो

। पोग्गला दव्वट्ठयाए संखेज्जगुणकक्खडा पोग्गला दव्वट्ठयाए संखेज्जगुणा असंखेज्जगुणकक्खडा पोग्गला याए असंखेज्जगुणा अणंतगुणकक्खडा दव्वट्ठयाए अणंतगुणा, पएसट्ठयाए एवं चेव नवरं संखेज्जगुणकक्खडा पोग्गला पएसट्ठयाए असं० सेसं तं चेव, दव्वट्ठपएसट्ठयाए सव्वत्थोवा एगगुणकक्खडा पोग्गला दव्वट्ठपएसट्ठयाए संखेज्जगुणकक्खडा पोग्गला दव्वट्ठयाए संखेज्जगु० ते चेव पएसट्ठयाए संखेज्जगुणा असंखेज्जगुणकक्खडा दव्वट्ठयाए असंखेज्जगुणा ते चेव पएसट्ठयाए असंखेज्जगुणा अणंतगुणकक्खडा दव्वट्ठयाए अणंतगुणा ते चेव पएसट्ठयाए अणंतगुणा एवं मउयगरुयलहुयाणवि अप्पाबहुयं, सीयउसिणनिद्धलुक्खाणं जहा वन्नाणं तहेव ॥ (सूत्रं ७४१)

'एएसि णं'मित्यादि, 'परमाणुपोग्गला अपएसट्ठयाए'त्ति इह प्रदेशार्थताऽधिकारेऽपि यदप्रदेशार्थतयेत्युक्तं तत्परमाणूनामप्रदेशत्वात्, 'परमाणुपोग्गला दव्वट्ठअपएसट्ठयाए'त्ति परमाणवो द्रव्यविवक्षायां द्रव्यरूपाः अर्थाः प्रदेशविवक्षायां चाविद्यमानप्रदेशार्था इतिकृत्वा द्रव्यार्थाप्रदेशार्थास्ते उच्यन्ते तद्भावस्तत्ता तया, 'सव्वत्थोवा एगपएसोगाढा पोग्गला दव्वट्ठयाए'त्ति इह क्षेत्राधिकारात्क्षेत्रस्यैव प्राधान्यात्परमाणुद्व्यणुकाद्यनन्ताणुकस्कन्धा अपि विशिष्टैकक्षेत्रप्रदेशावगाढा आधाराधेययोरभेदोपचारादेकत्वेन व्यपदिश्यन्ते ततश्च 'सव्वत्थोवा एगपएसोगाढा पोग्गला दव्वट्ठयाए'त्ति, लोकाकाशप्रदेशपरिमाणा एवेत्यर्थः, तथाहि—न स कश्चिदेवंभूत आकाशप्रदेशोऽस्ति य एकप्रदेशावगाहपरिणामपरिणतानां परमाण्वादीनामवकाशदानपरिणामेन न परिणत इति, तथा 'संखेज्जपएसोगाढा पोग्गला दव्वट्ठयाए संखेज्जगुण'त्ति अत्रापि क्षेत्रस्यैव प्राधान्यात्तथाविधस्कन्धाधारक्षेत्रप्रदेशापेक्षयैव भावना कार्या, नवरमसंमोहेन सुखप्रतिपत्त्यर्थमुदाहरणं दर्श्यते—

'जहा किल पंच ते सवलोगपएसा, एते य पत्तेयचिंताए पंचेव, संजोगओ पुण एतेसु चेव अणेगे संजोगा लब्भंति' इमा एएसिं ठवणा— [diagram] एतेषां च सम्पूर्णासम्पूर्णान्यग्रहणान्यमोक्षणद्वारेणाऽऽधेयवशादनेके संयोगभेदा भावनीयाः, तथा 'असंखेज्जपए- सोगाढा पोग्गला दव्वट्ठयाए असंखेज्जगुण'त्ति भावनैवमेव असङ्ख्येयप्रदेशात्मकत्वादवगाहक्षेत्रस्यासङ्ख्येयगुणा इत्ययमस्य भावार्थ इति ॥ पुद्गलानेव कृतयुग्मादिभिर्निरूपयन्नाह—

परमाणुपोग्गले णं भंते ! दव्वट्ठयाए किं कडजुम्मे तेयोए दावर०कलियोगे ?, गोयमा ! नो कडजुम्मे नो तेयोए नो दावर० कलियोगे एवं जाव अणंतपएसिए खंधे । परमाणुपोग्गला णं भंते ! दव्वट्ठयाए किं कडजुम्मा पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं नो कडजुम्मा नो तेयोगा नो दावर० कलियोगा एवं जाव अणंतपएसिया खंधा। परमाणुपोग्गले णं भंते ! पएसट्ठयाए किं कडजुम्मे पुच्छा, गोयमा ! नो कडजुम्मा नो तेयोगा नो दावर० कलियोगे दुपएसिए पुच्छा गोयमा ! नो कड० नो तेयोय० दावर० नो कलियोगे, तिपए० पुच्छा गोयमा ! नो कडजुम्मे तेयोए नो दावर० नो कलियोए चउप्पएसिए पुच्छा गोयमा ! कडजुम्मे नो तेओए नो दावर० नो कलियोगे पंचपएसिए जहा परमाणुपोग्गले छप्पएसिए जहा दुप्पएसिए सत्तपएसिए जहा तिपएसिए अट्ठपएसिए जहा चउप्पएसिए नवपएसिए जहा परमाणुपोग्गले दसपएसिए जहा दुप्पएसिए, संखेज्जपएसिए णं भंते ! पोग्गले पुच्छा, गोयमा ! सिय कडजुम्मे

जाव सिय कलियोए एवं असंखेज्जपएसिएवि अणंतपएसिएवि । परमाणुपोग्गला णं भंते ! पएसट्ठयाए किं कड० पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा, विहाणादेसेणं नो कड० नो तेयोया नो दावर० कलियोगा, दुप्पएसियाणं पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा नो तेयोया सिय दावरजुम्मा नो कलियोगा, विहाणादेसेणं नो कडजुम्मा नो तेयोया दावरजुम्मा नो कलियोगा, तिपएसिया णं पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा विहाणादेसेणं नो कडजुम्मा तेयोगा नो दावर० नो कलियोगा, चउप्पएसियाणं पुच्छा, गोयमा ! ओघादेसेणवि विहाणादेसेणवि कडजुम्मा नो तेयोगा नो दावर० नो कलियोगा, पंचपएसिया जहा परमाणुपोग्गला, छप्पएसिया जहा दुप्पएसिया, सत्तपएसिया जहा तिपएसिया, अट्ठपएसिया जहा चउपएसिया, नवपएसिया जहा परमाणुपोग्गला, दसपएसिया जहा दुपएसिया, संखेज्जपएसिया णं पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा विहाणादेसेणं कडजुम्मावि जाव कलियोगावि एवं असंखेज्जपएसियावि अणंतपएसियावि ॥ परमाणुपोग्गले णं भंते ! किं कडजुम्मपएसोगाढे ? पुच्छा, गोयमा ! कडजुम्मपएसोगाढे नो तेयोग० नो दावरजुम्म० कलियोगपएसोगाढे । दुपएसिएणं पुच्छा, गोयमा ! नो कडजुम्मपएसोगाढे णो तेयोग० सिय दावरजुम्मपएसोगाढे सिय कलियोगपएसोगाढे । तिपएसिए णं पुच्छा, गोयमा ! णो कडजुम्मपएसोगाढे सिय तेयोगपएसोगाढे सिय दावरजुम्मपएसोगाढे सिय कलियोगपएसोगाढे ३ । चउप्पएसिए णं

पुच्छा, गोयमा ! सिय कडजुम्मपएसोगाढे जाव सिय कलियोगपएसोगाढे ४, एवं जाव अणंतपएसिए ॥ परमाणुपोग्गला णं भंते ! किं कड० पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा णो तेयोग० नो दावर० नो कलियोग०, विहाणादेसेणं नो कडजुम्मपएसोगाढा णो तेयोग० नो दावर० कलिओगपएसोगाढा । दुप्पएसिया णं पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोग० नो दावर० नो कलिओग०, विहाणादेसेणं नो कडजुम्मपएसोगाढा नो तेयोगपएसोगाढा दावरजुम्मपएसोगाढावि कलियोगपएसोगाढावि । तिप्पएसियाणं पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोग० नो दावर० नो कलि० विहादेसेणं नो कडजुम्मपएसोगाढा तेओगपएसोगाढावि दावरजुम्मपएसोगाढावि कलिओगपएसोगाढावि ३ । चउप्पएसियाणं पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोग० नो दावर० नो कलिओग० विहाणादेसेणं कडजुम्मपएसोगाढावि जाव कलिओगपएसोगाढावि ४ एवं जाव अणंतपएसिया ॥ परमाणुपोग्गले णं भंते ! किं कडजुम्मसमयट्ठितीए ? पुच्छा, गोयमा ! सिय कडजुम्मसमयट्ठितीए जाव सिय कलिओगसमयट्ठितीए, एवं जाव अणंतपएसिए । परमाणुपोग्गला णं भंते ! किं कडजुम्म० ?, पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मसमयठितीया जाव सिय कलियोगसमयट्ठितीया ४, विहाणादेसेणं कडजुम्मसमयट्ठितीयावि जाव कलियोगसमयट्ठितीयावि ४, एवं जाव अणंतपएसिया । परमाणुपोग्गले णं भंते ! कालवन्नपज्जवेहिं किं कडजुम्मे तेओगे जहा ठितीए वत्तव्वया एवं वन्नेसुवि सव्वेसु गंधेसुवि एवं चेव रसेसुवि

जाव महुरो रसोत्ति, अणंतपएसिए णं भंते! खंधे कक्खडफासपज्जवेहिं किं कडजुम्मे पुच्छा, गोयमा! सिय कडजुम्मे जाव सिय कलिओगे। अणंतपएसिया णं भंते! खंधा कक्खडफासपज्जवेहिं किं कडजुम्मा पुच्छा, गोयमा! ओघादेसेणं सिय कडजुम्मा जाव सिय कलियोगा ४, विहाणादेसेणं कडजुम्मावि जाव कलियोगावि ४, एवं मउयगरुयलहुयावि भाणियव्वा, सीयउसिणनिद्धलुक्खा जहा वन्ना॥ (सूत्रं ७४२) परमाणुपोग्गले णं भंते! किं सड्ढे अणड्ढे?, गोयमा! नो सड्ढे अणड्ढे। दुपएसिए णं पुच्छा गो०! सड्ढे नो अणड्ढे, तिपएसिए जहा परमाणुपोग्गले, चउपएसिए जहा दुपएसिए, पंचपएसिए जहा तिपएसिए छप्पएसिए जहा दुपएसिए सत्तपएसिए जहा तिपएसिए अट्ठपएसिए जहा दुपएसिए नवपएसिए जहा तिपएसिए दसपएसिए जहा दुपएसिए, संखेज्जपएसिए णं भंते! खंधे पुच्छा, गोयमा! सिय सड्ढे सिय अणड्ढे, एवं असंखेज्जपएसिएवि, एवं अणंतपएसिएवि। परमाणुपोग्गला णं भंते! किं सड्ढा अणड्ढा?, गोयमा! सड्ढा वा अणड्ढा वा एवं जाव अणंतपएसिया॥ (सूत्रं ७४३)

'परमाणु'इत्यादि, परमाणुपुद्गला ओघादेशतः कृतयुग्मादयो भजनया भवन्ति अनन्तत्वेऽपि तेषां सङ्घातभेदतोऽनवस्थितस्वरूपत्वात्, विधानतस्त्वेकैकशः कल्योजा एवेति। 'पंचपएसिए जहा परमाणुपोग्गल'त्ति एकाग्रत्वात्कल्योज इत्यर्थः 'छप्पएसिए जहा दुप्पएसिए'त्ति द्व्यग्रत्वाद्द्वापरयुग्म इत्यर्थः, एवमन्यदपि॥ 'संखेज्जपएसिए ण'मित्यादि, सङ्ख्यातप्रदेशिकस्य विचित्रसङ्ख्यत्वाद्भजनया चातुर्विध्यमिति। 'दुप्पएसिया ण'मित्यादि, द्विप्रदेशिका यदा समसङ्ख्या भवन्ति तदा

प्रदेशतः कृतयुग्माः, यदा तु विषमसङ्ख्यास्तदा द्वापरयुग्माः, 'विहाणादेसेण'मित्यादि, ये द्विप्रदेशिकास्ते प्रदेशार्थतया एकैकशश्चिन्त्यमाना द्विप्रदेशत्वादेव द्वापरयुग्मा भवन्ति। 'तिप्पएसिया ण'मित्यादि, समस्तत्रिप्रदेशिकमीलने तत्प्रदेशानां च चतुष्कापहारे चतुरग्रादित्वं भजनया स्यादनवस्थितसङ्ख्यत्वात्तेषां, यथा चतुर्णां तेषां मीलने द्वादश प्रदेशास्ते च चतुरग्राः पञ्चानां त्र्योजाः षण्णां द्वापरयुग्माः सप्तानां कल्योजा इति, विधानादेशेन च त्र्योजा एव त्र्यणुकत्वात्स्कन्धानामिति। 'चउप्पएसिया ण'मित्यादि, चतुष्प्रदेशिकानामोघतो विधानतश्च प्रदेशाश्चतुरग्रा एव। 'पंचपएसिया जहा परमाणुपोग्गल'त्ति सामान्यतः स्यात्कृतयुग्मादयः प्रत्येकं चैकाग्रा एवेत्यर्थः। 'छप्पएसिया जहा दुप्पएसिय'त्ति ओघतः स्यात्कृतयुग्मद्वापरयुग्माः, विधानतस्तु द्वापरयुग्मा इत्यर्थः, एवमुत्तरत्रापि ॥ अथ क्षेत्रतः पुद्गलांश्चिन्तयन्नाह—'परमाणु' इत्यादि, परमाणुः कल्योजःप्रदेशावगाढ एव एकत्वात् द्विप्रदेशिकस्तु द्वापरयुग्मप्रदेशावगाढो वा कल्योजःप्रदेशावगाढो वा स्यात् परिणामविशेषात्, एवमन्यदपि सूत्रं नेयम् ॥ 'परमाणुपोग्गला ण'मित्यादि, तत्रौघतः परमाणवः कृतयुग्मप्रदेशावगाढा एव भवन्ति सकललोकव्यापकत्वात्तेषां, सकललोकप्रदेशानां चासङ्ख्यातत्वादवस्थितत्वाच्च चतुरग्रतेति, विधानतस्तु कल्योजःप्रदेशावगाढाः सर्वेषामेकैकप्रदेशावगाढत्वादिति, द्विप्रदेशावगाढास्तु सामान्यतश्चतुरग्रा एवोक्तयुक्तितः, विधानतस्तु द्विप्रदेशिकाः ये द्विप्रदेशावगाढास्ते द्वापरयुग्माः ये त्वेकप्रदेशावगाढास्ते कल्योजाः, एवमन्यदप्यूह्यम्। 'अणंतपएसिए णं भंते! खंधे'त्ति, इह कर्कशादिस्पर्शाधिकारे यदनन्तप्रदेशिकस्यैव स्कन्धस्य ग्रहणं तत्तस्यैव बादरस्य कर्कशादिस्पर्शचतुष्टयं भवति न तु परमाण्वादेरित्यभिप्रायेणेति, अत एवाह—सीओसिणनिद्धलुक्खा जहा वन्न'त्ति एत-

त्पर्यवाधिकारे परमाण्वादयोऽपि वाच्या इति भावः ॥ पुद्गलाधिकारादिदमाह—'परमाणु'इत्यादि, 'सिय सड्ढे सिय अणड्ढे'त्ति यः समसङ्ख्यप्रदेशात्मकः स्कन्धः स सार्द्धः इतरस्त्वनर्द्ध इति । 'परमाणुपोग्गले'त्यादि, यदा वहवोऽणवः समसङ्ख्या भवन्ति तदा सार्द्धाः यदा तु विषमसङ्ख्यास्तदाऽनर्द्धाः, सङ्घातभेदाभ्यामनवस्थितरूपत्वात्तेषामिति ॥ पुद्गलाधिकारादेवेदमुच्यते—

परमाणुपोग्गले णं भंते ! किं सेए निरेए ?, गोयमा ! सिय सेए सिय निरेए, एवं जाव अणंतपएसिए । परमाणुपोग्गला णं भंते ! किं सेया निरेया ?, गोयमा ! सेयावि निरेयावि, एवं जाव अणंतपएसिया ॥ परमाणुपुग्गले णं भंते ! सेए कालओ केवचिरं होइ ?, गोयमा ! जह० एक्कं समयं उक्कोसे० आवलियाए असंखेज्जइभागं, परमाणुपोग्गले णं भंते ! निरेए कालओ केवचिरं होइ ?, गोयमा ! जह० एक्कं समयं उक्कोसेणं असंखेज्जं कालं, एवं जाव अणंतपएसिए, परमाणुपोग्गला णं भंते ! सेया कालओ केवचिरं होन्ति ?, गोयमा ! सव्वद्धं, परमाणुपोग्गला णं भंते ! निरेया कालओ केवचिरं होइ ?, गोयमा ! सव्वद्धं, एवं जाव अणंतपएसिया ॥ परमाणुपोग्गलस्स णं भंते ! सेयस्स केवतियं कालं अंतरं होइ ?, गोयमा ! सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं । निरेयस्स केवतियं कालं अंतरं होइ ?, गोयमा ! सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं । दुपएसियस्स णं भंते ! खंधस्स सेयस्स

पुच्छा, गोयमा ! सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं अणंतं कालं। निरेयस्स केवतियं कालं अंतरं होइ ?, गोयमा ! सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं अणंतं कालं, एवं जाव अणंतपएसियस्स। परमाणुपोग्गला णं भंते ! सेयाणं केवतियं कालं अंतरं होइ ?, गोयमा ! नत्थि अंतरं, एवं जाव अणंतपएसियाणं खंधाणं॥ एएसि णं भंते ! परमाणुपोग्गलाणं सेयाणं निरेयाण य कयरे-२ हिंतो जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा परमाणुपोग्गला सेया निरेया असंखेज्जगुणा एवं जाव असंखिज्जपएसियाणं खंधाणं। एएसि णं भंते! अणंतपएसियाणं खंधाणं सेयाणं निरेयाण य कयरे २ जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा अणंतपएसिया खंधा निरेया सेया अणंतगुणा॥ एएसि णं भंते ! परमाणुपोग्गलाणं संखेज्जपएसियाणं असंखेज्जपएसियाणं अणंतपएसियाण य खंधाणं सेयाणं निरेयाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे २ जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा अणंतपएसिया खंधा निरेया दव्वट्ठयाए १ अणंतपएसिया खंधा सेया दव्वट्ठयाए अणंतगुणा २ परमाणुपोग्गला सेया दव्वट्ठयाए अणंतगुणा ३ संखेज्जपएसिया खंधा सेया दव्वट्ठयाए असंखेज्जगुणा ४ असंखेज्जपएसिया खंधा सेया दव्वट्ठयाए असंखेज्जगुणा ५ परमाणुपोग्गला निरेया दव्वट्ठयाए असंखेज्जगुणा ६ संखेज्जपएसिया खंधा निरेया दव्वट्ठयाए संखेज्जगुणा ७ असंखेज्जपएसिया खंधा निरेया दव्वट्ठयाए असंखेज्जगुणा ८ पएसट्ठयाए एवं चेव नवरं

परमाणुपोग्गला अपएसट्ठयाए भाणियव्वा, संखेज्जपएसिया खंधा निरेया पएसट्ठयाए असंखेज्जगुणा सेसं तं चेव, दव्वट्ठपएसट्ठयाए सव्वत्थोवा अणंतपएसिया खंधा निरेया दव्वट्ठयाए १ ते चेव पएसट्ठयाए अणंतगुणा २ अणंतपएसिया खंधा सेया दव्वट्ठयाए अणंतगुणा ३ ते चेव पएसट्ठयाए अणंतगुणा ४ परमाणुपोग्गला सेया दव्वट्ठयाए अपएसट्ठयाए अणंतगुणा ५ संखेज्जपएसिया खंधा सेया दव्वट्ठयाए असंखेज्जगुणा ६ ते चेव पएसट्ठयाए असंखेज्जगुणा ७ असंखेज्जपएसिया खंधा सेया दव्वट्ठयाए असंखेज्जगुणा ८ ते चेव पएसट्ठयाए असंखेज्जगुणा ९ परमाणुपोग्गला निरेया दव्वट्ठअपएसट्ठयाए असंखिज्जगुणा १० संखिज्जपएसिया खंधा निरेया दव्वट्ठयाए असंखेज्जगुणा ११ ते चेव पएसट्ठयाए संखिज्जगुणा १२ असंखिज्जपएसिया खंधा निरेया दव्वट्ठयाए असंखेज्जगुणा १३ ते चेव पएसट्ठयाए असंखिज्जगुणा १४। परमाणुपोग्गले णं भंते! किं देसेए सव्वेए निरेए?, गोयमा! नो देसेए सिय सव्वेए सिय निरेए, दुपएसिए णं भंते! खंधे पुच्छा, गोयमा! सिय देसेए सिय सव्वेए सिय निरेए एवं जाव अणंतपएसिए। परमाणुपोग्गला णं भंते! किं देसेया सव्वेया निरेया?, गोयमा! नो देसेया सव्वेयावि निरेयावि, दुपएसिया णं भंते! खंधा पुच्छा, गोयमा! देसेयावि सव्वेयावि निरेयावि, एवं जाव अणंतपएसिया। परमाणुपोग्गले णं भंते! सव्वेए कालओ केवच्चिरं होइ?, गोयमा! जहन्नेणं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, निरेये कालओ केवच्चिरं होइ?, गोयमा! जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं। दुपएसिए णं भंते! खंधे देसेए कालओ केवच्चिरं होइ?, गोयमा! जहन्नेणं एक्कं समयं

उक्कोसेणं आवलियाए असंखेज्जइभागं, सवेए कालओ केवचिरं होइ ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, निरेए कालओ केवचिरं होइ ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं, एवं जाव अणंतपएसिए । परमाणुपोग्गला णं भंते ! सवेया कालओ केवचिरं होंति ?, गोयमा ! सवद्धं, निरेया कालओ केवचिरं होइ ?, सवद्धं । दुप्पएसिया णं भंते ! खंधा देसेया कालओ केवचिरं० ?, सवद्धं, सवेया कालओ केवचिरं ?, सवद्धं, निरेया कालओ केवचिरं० ?, सवद्धं, एवं जाव अणंतपएसिया । परमाणुपोग्गलस्स णं भंते ! सवेयस्स केवतियं कालं अंतरं होइ ?, गोयमा ! सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं । निरेयस्स केवतियं अंतरं होइ ?, सट्ठाणंतरं पडुच्च जह० एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं । दुपएसियस्स णं भंते ! खंधस्स देसेयस्स केवतियं कालं अंतरं होइ ?, सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं असंखिज्जं कालं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं अणंतं कालं, सवेयस्स केवतियं कालं ? एवं चेव जहा देसेयस्स, निरेयस्स केवतियं ?, सट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं, परट्ठाणंतरं पडुच्च जहन्नेणं एक्कं समयं उक्कोसेणं अणंतं कालं, एवं जाव अणंतपएसियस्स ॥ परमाणुपोग्गलाणं भंते ! सवेयाणं केवतियं कालं अंतरं होइ ?, नत्थि अंतरं, निरेयाणं केवतियं ?, नत्थि अंतरं, दुपएसियाणं भंते ! खंधाणं देसे-

याणं केवतियं कालं ?, नत्थि अंतरं, सव्वेयाणं केवतियं कालं ?, नत्थि अंतरं, निरेयाणं केवतियं कालं ?, नत्थि अंतरं, एवं जाव अणंतपएसियाणं। एएसि णं भंते! परमाणुपोग्गलाणं सव्वेयाणं निरेयाण य कयरे २ जाव विसेसाहिया वा ?, गोयमा! सव्वत्थोवा परमाणुपोग्गला सव्वेया निरेया असंखेज्जगुणा। एएसि णं भंते! दुपएसियाणं खंधाणं देसेयाणं सव्वेयाणं निरेयाण य कयरे २ जाव विसेसाहिया वा ?, गोयमा! सव्वत्थोवा दुपएसिया खंधा सव्वेया देसेया असंखेज्जगुणा निरेया असंखिज्जगुणा, एवं जाव असंखेज्जपएसियाणं खंधाणं। एएसि णं भंते! अणंतपएसियाणं खंधाणं देसेयाणं सव्वेयाणं निरेयाण य कयरे २ जाव विसेसाहिया वा ?, गोयमा! सव्वत्थोवा अणंतपएसिया खंधा सव्वेया निरेया अणंतगुणा देसेया अणंतगुणा। एएसि णं भंते! परमाणुपोग्गलाणं संखेज्जपएसियाणं असंखेज्जपएसियाणं अणंतपएसियाण य खंधाणं देसेयाणं सव्वेयाणं निरेयाणं दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे २ जाव विसेसाहिया वा?, गोयमा! सव्वत्थोवा अणंतपएसिया खंधा सव्वेया दव्वट्ठयाए १ अणंतपएसिया खंधा निरेया दव्वट्ठयाए अणंतगुणा २ अणंतपएसिया खंधा देसेया दव्वट्ठयाए अणंतगुणा ३ असंखेज्जपएसिया खंधा सव्वेया दव्वट्ठयाए असंखेज्जगुणा ४ संखेज्जपएसिया खंधा सव्वेया दव्वट्ठयाए असंखेज्जगुणा ५ परमाणुपोग्गला सव्वेया दव्वट्ठयाए असंखेज्जगुणा ६ संखेज्जपएसिया खंधा देसेया दव्वट्ठयाए असंखेज्जगुणा ७ असंखेज्जपएसिया खंधा देसेया दव्वट्ठयाए असंखेज्जगुणा ८ परमाणुपोग्गला निरेया दव्वट्ठयाए असंखेज्जगुणा ९ संखेज्जपएसिया खंधा निरेया दव्वट्ठयाए संखेज्जगुणा १० असंखे-

ज्जपएसिया खंधा निरेया दव्वट्ठयाए असंखिज्जगुणा ११, एवं पएसट्ठयाएवि नवरं परमाणुपोग्गला अपएसट्ठयाए भाणियव्वा संखिज्जपएसिया खंधा निरेया पएसट्ठयाए असंखिज्जगुणा सेसं तं चेव, दव्वट्ठपएसट्ठयाए सव्वत्थोवा अणंतपएसिया खंधा सव्वेया दव्वट्ठयाए १ ते चेव पएसट्ठयाए अणंतगुणा २ अणंतपएसिया खंधा निरेया दव्वट्ठयाए अणंतगुणा ३ ते चेव पएसट्ठयाए अनंतगुणा ४ अणंतपएसिया खंधा देसेया दव्वट्ठयाए अणंतगुणा ५ ते चेव पएसट्ठयाए अणंतगुणा ६ असंखिज्जपएसिया खंधा सव्वेया दव्वट्ठयाए अणंतगुणा ७ ते चेव पएसट्ठयाए असंखेज्जगुणा ८ संखिज्जपएसिया खंधा सव्वेया दव्वट्ठयाए असंखेज्जगुणा ९ ते चेव पएसट्ठयाए असंखेज्जगुणा १० परमाणुपोग्गला सव्वेया दव्वट्ठअपएसट्ठयाए असंखेज्जगुणा ११ संखेज्जपएसिया खंधा देसेया दव्वट्ठयाए असंखेज्जगुणा १२ ते चेव पएसट्ठयाए असंखेज्जगुणा १३ असंखेज्जपएसिया खंधा देसेया दव्वट्ठयाए असंखेज्जगुणा १४ ते चेव पएस० असंखे० १५ परमाणुपोग्गला निरेया दव्वट्ठअपदेसट्ठयाए असंखेज्जगुणा १६ संखेज्जपएसिया खंधा निरेया दव्वट्ठयाए संखेज्जगुणा १७ ते चेव पएसट्ठयाए संखेज्जगुणा १८ असंखेज्जपएसिया निरेया दव्वट्ठ० असंखेज्जगुणा १९ ते चेव पएसट्ठयाए असंखेज्जगुणा २० ( सूत्रं ७४४ ) कति णं भंते ! धम्मत्थिकायस्स मज्झपएसा पन्नत्ता ?, गोयमा ! अट्ठ धम्मत्थिकायस्स मज्झपएसा पन्नत्ता। कति णं भंते ! अधम्मत्थिकायस्स मज्झपएसा प०, एवं चेव, कति णं भंते ! आगासत्थिकायस्स मज्झपएसा प०, एवं चेव। कति णं भंते ! जीवत्थिकायस्स मज्झपएसा प०, गोयमा ! अट्ठ जीवत्थिकायस्स मज्झपएसा प०, एए णं

भंते ! अट्ठ जीवत्थिकायस्स मज्झपएसा कतिसु आगासपएसेसु ओगाहंति ?, गोयमा ! जहन्नेणं एक्कंसि वा दोहिं वा तीहिं वा चउहिं वा पंचहिं वा छहिं वा उक्कोसेणं अट्ठसु नो चेव णं सत्तसु । सेवं भंते २ त्ति ॥ ( सूत्रं ७४५ ) ॥ २५ शते ४ उद्देशकः ॥

'परमाणु'इत्यादि, 'सेए'त्ति चलः, सैजत्वं चोत्कर्षतोऽप्यावलिकाअसङ्ख्येयभागमात्रमेव, निरेजताया औत्सर्गिकत्वात्, अत एव निरेजत्वमुत्कर्षतोऽसङ्ख्येयं कालमुक्तमिति, 'निरेए'त्ति निश्चलः । बहुत्वसूत्रे 'सव्वद्धं'ति सर्वाद्धां-सर्वकालं परमाणवः सैजाः सन्ति, नहि कश्चित् स समयोऽस्ति कालत्रयेऽपि यत्र परमाणवः सर्व एव न चलन्तीत्यर्थः, एवं निरेजा अपि सर्वाद्धामिति ॥ अथ परमाण्वादीनां सैजत्वाद्यन्तरमाह—'परमाणु'इत्यादि, 'सट्ठाणंतरं पडुच्च'त्ति स्वस्थानं-परमाणोः परमाणुभाव एव तत्र वर्त्तमानस्य यदन्तरं-चलनस्य व्यवधानं निश्चलत्वभवनलक्षणं तत्स्वस्थानान्तरं तत्प्रतीत्य 'जहन्नेणं एक्कं समयं'ति निश्चलताजघन्यकाललक्षणं 'उक्कोसेणं असंखेज्जं कालं'ति निश्चलताया एवोत्कृष्टकाललक्षणं, तत्र जघन्यतोऽन्तरं परमाणुरेकं समयं चलनादुपरम्य पुनश्चलतीत्येवं, उत्कर्षतश्च स एवासङ्ख्येयं कालं क्वचित्स्थिरो भूत्वा पुनश्चलतीत्येवं दृश्यमिति, 'परट्ठाणंतरं पडुच्च'त्ति परमाणोर्यत्परस्थाने-द्व्यणुकादावन्तर्भूतस्यान्तरं-चलनव्यवधानं तत्परस्थानान्तरं तत्प्रतीत्येति 'जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं'ति, परमाणुपुद्गलो हि भ्रमन् द्विप्रदेशादिकं स्कन्धमनुप्रविश्य जघन्यतस्तेन सहैकं समयं स्थित्वा पुनर्भ्राम्यति उत्कर्षतस्त्वसङ्ख्येयं कालं द्विप्रदेशादितया स्थित्वा पुनरेकतया भ्राम्यतीति । 'निरेयस्से'त्यादि, निश्चलः सन् जघन्यतः समयमेकं परिभ्रम्य पुनर्निश्चलस्तिष्ठति, उत्कर्षतस्तु निश्चलः सन्नावलि-

काया असङ्ख्येयं भागं चलनोत्कृष्टकालरूपं परिभ्रम्य पुनर्निश्चल एव भवतीति स्वस्थानान्तरमुक्तं, परस्थानान्तरं तु निश्चल सन् ततः स्वस्थानाच्चलितो जघन्यतो द्विप्रदेशादौ स्कन्धे एकं समयं स्थित्वा पुनर्निश्चल एव तिष्ठति, उत्कर्षतस्त्वसङ्ख्येयं कालं तेन सह स्थित्वा पृथग् भूत्वा पुनस्तिष्ठति। 'दुपएसियस्से'त्यादि, 'उक्कोसेणं अणंतं कालं'त्ति, कथम् ?, द्विप्रदेशिकः संश्लिष्टस्ततोऽनन्तैः पुद्गलैः सह कालभेदेन सम्बन्धं कुर्वन्ननन्तेन कालेन पुनस्तेनैव परमाणुना सह सम्बन्धं प्रतिपद्य पुनश्चलतीत्येवमिति ॥ सैजादीनामेवाल्पबहुत्वमाह—'एएसि णं'मित्यादि, 'निरेया असंखेज्जगुण'त्ति स्थिति-क्रियाया औत्सर्गिकत्वाद्बहुत्वमिति, अनन्तप्रदेशिकेषु सैजा अनन्तगुणाः वस्तुस्वभावात् ॥ एतदेव द्रव्यार्थप्रदेशार्थोभया-र्थैर्निरूपयन्नाह—'एएसि णं'मित्यादि, तत्र द्रव्यार्थतायां सैजत्वनिरेजत्वाभ्यामष्टौ पदानि, एवं प्रदेशार्थतायामपि, उभ-यार्थतायां तु चतुर्दश सैजपक्षे निरेजपक्षे च परमाणुषु द्रव्यार्थप्रदेशार्थपदयोर्द्रव्यार्थाप्रदेशार्थतेत्येवमेकीकरणेनाभिलापात्, अथ 'पएसट्ठयाए एवं चेव' इत्यत्रातिदेशे यो विशेषोऽसावुच्यते—'नवरं परमाणु' इत्यादि, परमाणुपदे प्रदेशार्थतायाः स्थानेऽप्रदेशार्थतयेति वाच्यं, अप्रदेशार्थत्वात्परमाणूनां, तथा द्रव्यार्थतासूत्रे सङ्ख्यातप्रदेशिका निरेजा निरेजपरमाणुभ्यः सङ्ख्यातगुणा उक्ताः प्रदेशार्थतासूत्रे तु ते तेभ्योऽसङ्ख्येयगुणा वाच्याः, यतो निरेजपरमाणुभ्यो द्रव्यार्थतया निरेजसङ्ख्यात-प्रदेशिकाः सङ्ख्यातगुणा भवन्ति, तेषु च मध्ये बहूनामुत्कृष्टसङ्ख्यातकप्रमाणप्रदेशत्वान्निरेजपरमाणुभ्यस्ते प्रदेशतोऽसङ्ख्येय-गुणा भवन्ति उत्कृष्टसङ्ख्यातकस्योपर्येकप्रदेशप्रक्षेपेऽप्यसङ्ख्यातकस्य भावादिति ॥ अथ परमाण्वादीनेव सैजत्वादिना निरूप-यन्नाह—'परमाणु' इत्यादि, इह सर्वेषामल्पबहुत्वाधिकारे द्रव्यार्थचिन्तायां परमाणुपदस्य सर्वैजत्वनिरेजत्वविशेषणात्

सङ्ख्येयादीनां तु त्रयाणां प्रत्येकं देशैजसर्वैजनिरेजत्वैर्विशेषणादेकादश पदानि भवन्ति, एवं प्रदेशार्थतायामपि, उभयार्थतायां चैतान्येव विंशतिः, सर्वैजपक्षे निरेजपक्षे च परमाणुषु द्रव्यार्थप्रदेशार्थपदयोर्द्रव्यार्थाप्रदेशार्थतेत्येवमेकीकरणेनाभिलापादिति ॥ अनन्तरं पुद्गलास्तिकायः प्रदेशतश्चिन्तितः, अथान्यानप्यस्तिकायान् प्रदेशत एव चिन्तयन्नाह—'कइ णं भंते !' इत्यादि, 'अट्ठ धम्मत्थिकायस्स मज्झपएस'त्ति, एते च रुचकप्रदेशाष्टकावगाहिनोऽवसेया इति चूर्णिकारः, इह च यद्यपि लोकप्रमाणत्वेन धर्मास्तिकायादेर्मध्यं रत्नप्रभावकाशान्तर एव भवति न रुचके तथाऽपि दिशामनुदिशां च तत्प्रभवत्वाद्धर्मास्तिकायादि मध्यं तत्र विवक्षितमिति संभाव्यते, 'जीवत्थिकायस्स'त्ति प्रत्येकं जीवानामित्यर्थः, ते च सर्वस्यामवगाहनायां मध्यभाग एव भवन्तीति मध्यप्रदेशा उच्यन्ते, 'जहन्नेणं एक्कंसि वे'त्यादि सङ्कोचविकाशधर्मत्वात्तेषाम् 'उक्कोसेणं अट्ठसु'त्ति एकैकस्मिंस्तेषामवगाहनात्, 'नो चेव णं सत्तसुवि'त्ति वस्तुस्वभावादिति ॥ ॥ पञ्चविंशतितमशते चतुर्थः ॥ २५ । ४ ॥

—•◦:◦•—

चतुर्थोद्देशके पुद्गलास्तिकायादयो निरूपितास्ते च प्रत्येकमनन्तपर्यवा इति पञ्चमे पर्यवाः प्ररूप्यन्त इत्येवंसम्बन्धस्यास्येदमादि सूत्रम्—

कतिविहा णं भंते ! पज्जवा पन्नत्ता ?, गोयमा ! दुविहा पज्जवा पं०, तं०—जीवपज्जवा य अजीवपज्जवा य, पज्जवपदं निरवसेसं भाणियव्वं जहा पन्नवणाए । ( सूत्रं ७४६ ) आवलियाणं भंते ! किं संखेज्जा समया असं-

खेज्जा समया अणंता समया ?, गोयमा ! नो संखेज्जा समया असंखेज्जा समया नो अणंता समया, आणापाणूणं भंते ! किं संखेज्जा एवं चेव, थोवे णं भंते ! किं संखेज्जा ?, एवं चेव, एवं लवेवि मुहुत्तेवि एवं अहोरत्तेवि, एवं पक्खे मासे उडू अयणे संवच्छरे जुगे वाससये वाससहस्से वाससयसहस्से पुव्वंगे पुव्वे तुडियंगे तुडिए अडडंगे अडडे अववंगे अववे हूहुयंगे हुहुए उप्पलंगे उप्पले पउमंगे पउमे नलिणंगे नलिणे अच्छिणिउपूरंगे अच्छणिउपूरे अउयंगे अउये नउयंगे नउए पउयंगे पउए चूलियंगे चूलिए सीसपहेलियंगे सीसपहेलिया पलिओवमे सागरोवमे ओसप्पिणी एवं उस्सप्पिणीवि, पोग्गलपरियट्टे णं भंते ! किं संखेज्जा समया असंखेज्जा समया अणंता समया ? पुच्छा, गोयमा ! नो संखेज्जा समया नो असंखेज्जा समया अणंता समया, एवं तीयद्धाअणागयद्धसव्वद्धा ॥ आवलियाओ णं भंते ! किं संखेज्जा समया ? पुच्छा, गोयमा ! नो संखेज्जा समया सिय असंखिज्जा समया सिय अणंता समया, आणापाणूणं भंते ! किं संखेज्जा समया ३ ?, एवं चेव, थोवाणं भंते ! किं संखेज्जा समया ३, एवं जाव ओसप्पिणीओत्ति, पोग्गलपरियट्टाणं भंते ! किं संखेज्जा समया ? पुच्छा, गोयमा ! णो संखेज्जा समया णो असंखेज्जा समया अणंता समया, आणापाणूणं भंते ! किं संखेज्जाओ आवलियाओ पुच्छा, गोयमा ! संखेज्जाओ आवलियाओ णो असंखिज्जाओ आवलियाओ नो अणंताओ आवलियाओ, एवं थोवेवि एवं जाव सीसपहेलियत्ति । पलिओवमे णं भंते ! किं संखेज्जा ३ ? पुच्छा, गोयमा ! णो संखेज्जाओ आवलियाओ असंखिज्जाओ आवलियाओ नो अणंताओ आवलियाओ,

एवं सागरोवमेवि एवं ओसप्पिणीवि उस्सप्पिणीवि, पोग्गलपरियट्टे पुच्छा, गोयमा ! नो संखेज्जाओ आवलियाओ णो असंखेज्जाओ आवलियाओ अणंताओ आवलियाओ, एवं जाव सव्वद्धा। आणापाणूणं भंते ! किं संखेज्जाओ आवलियाओ ? पुच्छा, गोयमा ! सिय संखेज्जाओ आवलियाओ सिय असंखेज्जाओ सिय अणंताओ, एवं जाव सीसपहेलियाओ, पलिओवमाणं पुच्छा, गोयमा ! णो संखेज्जाओ आवलियाओ सिय असंखेज्जाओ आवलियाओ सिय अणंताओ आवलियाओ एवं जाव उस्सप्पिणीओ, पोग्गलपरियट्टाणं पुच्छा, गोयमा ! णो संखेज्जाओ आवलियाओ णो असंखेज्जाओ आवलियाओ अणंताओ आवलियाओ। थोवे णं भंते ! किं संखेज्जाओ आणापाणूओ असंखेज्जाओ जहा आवलियाए वत्तव्वया एवं आणापाणूवि निरवसेसा, एवं एतेणं गमएणं जाव सीसपहेलिया भाणियव्वा। सागरोवमे णं भंते ! किं संखेज्जा पलिओवमा ? पुच्छा, गोयमा ! संखेज्जा पलिओवमा णो असंखेज्जा पलिओवमा णो अणंता पलिओवमा, एवं ओसप्पिणीएवि उस्सप्पिणीएवि, पोग्गलपरियट्टे णं पुच्छा, गोयमा ! णो संखेज्जा पलिओवमा णो असंखेज्जा पलिओवमा अणंता पलिओवमा एवं जाव सव्वद्धा। सागरोवमाणं भंते ! किं संखेज्जा पलिओवमा ? पुच्छा, गोयमा ! सिय संखेज्जा पलिओवमा सिय असंखिज्जा पलिओवमा सिय अणंता पलिओवमा, एवं जाव ओसप्पिणीवि उस्सप्पिणीवि। पोग्गलपरियट्टाणं पुच्छा, गोयमा ! णो संखेज्जा पलिओवमा णो असंखेज्जा पलिओवमा अणंता पलिओवमा। ओसप्पिणी णं भंते ! किं संखेज्जा सागरोवमा जहा पलिओवमस्स वत्तव्वया तहा

सागरोवमस्सवि, पोग्गलपरियट्टे णं भंते ! किं संखेज्जाओ ओसप्पिणीओ पुच्छा, गोयमा ! णो संखे-
ज्जाओ ओसप्पिणीओ णो असंखिज्जा अणंताओ ओसप्पिणिउस्सप्पिणीओ एवं जाव सव्वद्धा, पोग्गल-
परियट्टा णं भंते ! किं संखेज्जाओ ओसप्पिणिउस्सप्पिणीओ पुच्छा, गोयमा ! णो संखेज्जाओ ओसप्पिणिउ-
स्सप्पिणीओ णो असंखे० अणंताओ ओसप्पिणिउस्सप्पिणीओ। तीतद्धा णं भंते ! किं संखेज्जा पोग्गलपरि-
यट्टा ? पुच्छा, गोयमा ! नो संखेज्जा पोग्गलपरियट्टा नो असंखेज्जा अणंता पोग्गलप०, एवं अणागयद्धावि,
एवं सव्वद्धावि। (सूत्रं ७४७) अणागयद्धा णं भंते ! किं संखेज्जाओ तीतद्धाओ असंखे० अणंताओ ?,
गोयमा ! णो संखेज्जाओ तीतद्धाओ णो असंखेज्जाओ तीतद्धाओ णो अणंताओ तीतद्धाओ, अणागयद्धा णं
तीतद्धाओ समयाहिया, तीतद्धा णं अणागयद्धाओ समयूणा। सव्वद्धा णं भंते ! किं संखेज्जाओ तीतद्धाओ ?
पुच्छा, गोयमा ! णो संखेज्जाओ तीतद्धाओ णो असंखे० णो अणंताओ तीयद्धाओ, सव्वद्धा णं तीयद्धाओ
सातिरेगदुगुणा तीतद्धाणं सव्वद्धाओ थोवूणए अद्धे, सव्वद्धा णं भन्ते ! किं संखेज्जाओ अणागयद्धाओ पुच्छा,
गोयमा ! णो संखेज्जाओ अणागयद्धाओ णो असंखेज्जाओ अणागयद्धाओ णो अणंताओ अणागयद्धाओ
सव्वद्धा णं अणागयद्धाओ थोवूणगदुगुणा अणागयद्धा णं सव्वद्धाओ सातिरेगे अद्धे (७४८) ॥

'कइविहे'त्यादि, 'पज्जव'त्ति पर्यवा गुणा धर्म्मा विशेषा इति पर्यायाः, 'जीवपज्जवा य'त्ति जीवधर्म्मा एवमजीवपर्यवा अपि, 'पज्जवपयं निरवसेसं भाणियव्वं'ति 'जहा पन्नवणाए'त्ति पर्यवपदं च–विशेषपदं प्रज्ञापनायां पञ्चमं, तच्चैवं–

'जीवपज्जवा णं भंते ! किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा णो असंखेज्जा अणंता' इत्यादीति ॥ विशेषाधिकारात्कालविशेषसूत्रम्—'आवलिया ण'मित्यादि, वहुत्वाधिकारे 'आवलियाओ ण'मित्यादौ 'नो संखेज्जा समय'त्ति एकस्यामपि तस्यामसङ्ख्याताः समयाः वहुषु पुनरसङ्ख्याता अनन्ता वा स्युर्न तु सङ्ख्येया इति । 'अणागयद्धा णं तीतद्धाओ समयाहिय'त्ति अनागतकालोऽतीतकालात्समयाधिकः, कथं ?, यतोऽतीतानागतौ कालावनादित्वानन्तत्वाभ्यां समानौ, तयोश्च मध्ये भगवतः प्रश्नसमयो वर्त्तते, स चाविनष्टत्वेनातीते न प्रविशति अविनष्टत्वसाधर्म्यादनागते क्षिप्तस्ततः समयातिरिक्ता अनागताद्धा भवति, अत एवाह—अनागतकालादतीतः कालः समयोनो भवतीति, एतदेवाह—'तीतद्धा ण'मित्यादि, 'सव्वद्धा णं तीतद्धाओ सातिरेगदुगुण'त्ति सर्वाद्धा—अतीतानागताद्धाद्वयं, सा चातीताद्धातः सकाशात् सातिरेकद्विगुणा भवति, सातिरेकत्वं च वर्त्तमानसमयेनात एवातीताद्धा सर्वाद्धायाः स्तोकोनमर्द्धं, ऊनत्वं च वर्त्तमानसमयेनैव, एतदेवाह—'तीतद्धा णं सव्वद्धाए थोवूणए अद्धे'त्ति, इह कश्चिदाह—अतीताद्धातोऽनागताद्धाऽनन्तगुणा, यतो यदि ते वर्त्तमानसमये समे स्यातां ततस्तदतिक्रमे अनागताद्धा समयेनोना स्यात्ततो द्व्यादिभिः एवं च समत्वं नास्ति ततोऽनन्तगुणा, सा चातीताद्धायाः सकाशाद्, अत एवानन्तेनापि कालेन गतेन नासौ क्षीयत इति, अत्रोच्यते, इह समत्वमुभयोरप्याद्यन्ताभावमात्रेण विवक्षितमिति चादावेव निवेदितमिति ॥ पर्यवा उद्देशकादावुक्तास्ते च भेदा अपि भवन्तीति निगोदभेदान् दर्शयन्नाह—

**कतिविहा णं भंते ! णिओदा पन्नत्ता ?, गोयमा ! दुविहा णिओदा प०, तं०—णिओगा य णिओयजीवा य'**

णिओदा णं भंते ! कतिविहा पन्नत्ता ?, गोयमा ! दुविहा पन्नत्ता, तंजहा-सुहुमनिगोदा य बायरनिओगा य, एवं निओगा भाणियव्वा जहा जीवाभिगमे तहेव निरवसेसं ( सूत्रं ७४९ ) ॥ कतिविहे णं भंते ! णामे पन्नत्ते ?, गोयमा ! छव्विहे णामे पन्नत्ते, तंजहा-ओदइए जाव सन्निवाइए। से किं तं उदइए णामे ?, उदइए णामे दुविहे प०, तं०-उदए य उदयनिप्फन्ने य, एवं जहा सत्तरसमसए पढमे उद्देसए भावो तहेव इहवि, नवरं इमं नामणाणत्तं, सेसं तहेव जाव सन्निवाइए। सेवं भंते ! २ ( सूत्रं ७५० ) ॥ २५।५ ॥

'कतिविहे'त्यादि, 'निगोदा य'त्ति अनन्तकायिकजीवशरीराणि 'निगोयजीवा य'त्ति साधारणनामकर्म्मोदयवर्त्तिनो जीवाः, 'जहा जीवाभिगमे'त्ति, अनेनेदं सूचितं-'सुहुमनिगोदा णं भंते ! कतिविहा पन्नत्ता ?, गोयमा ! दुविहा पन्नत्ता, तंजहा—पज्जत्तगा य अपज्जत्तगा य' इत्यादि ॥ अनन्तरं निगोदा उक्तास्ते च जीवपुद्गलानां परिणामभेदाद् भवन्तीति परिणामभेदान् दर्शयन्नाह—'कतिविहे णं भंते! नामे'इत्यादि, नमनं नामः परिणामो भाव इत्यनर्थान्तरं, 'नवरं इमं नाणत्तं'ति सप्तदशशते भावमाश्रित्येदं सूत्रमधीतं इह तु नामशब्दमाश्रित्येत्येतावान् विशेष इत्यर्थः ॥

॥ पञ्चविंशतितमशते पञ्चमः ॥ २५।५ ॥



पञ्चमोद्देशकान्ते नामभेद उक्तो, नामभेदाच्च निर्ग्रन्थभेदा भवन्तीत्यतस्ते षष्ठेऽभिधीयन्ते इत्यनेन सम्बन्धेनायातस्यास्यैतास्तिस्रो द्वारगाथाः—

पन्नवण १ वेद २ रागे ३ कप्प ४ चरित्त ५ पडिसेवणा ६ णाणे ७। तित्थे ८ लिंग ९ सरीरे १० खेत्ते ११ काल १२ गइ १३ संजम १४ निगासे १५ ॥ १ ॥ जोगु १६ वओग १७ कसाए १८ लेसा १९ परिणाम २० बंध २१ वेदे य २२। कम्मोदीरण २३ उवसंपजहन्न २४ सन्ना य २५ आहारे २६ ॥ २ ॥ भव २७ आगरिसे २८ कालं २९ तरे य ३० समुग्घाय ३१ खेत्त ३२ फुसणा य ३३। भावे ३४ परिणामे ३५ विय अप्पाबहुयं ३६ नियंठाणं ३७ ॥३॥ रायगिहे जाव एवं वयासी–कति णं भंते! णियंठा पन्नत्ता?, गोयमा! पंच णियंठा पन्नत्ता, तंजहा–पुलाए बउसे कुसीले णियंठे सिणाए ॥ पुलाए णं भंते! कतिविहे पन्नत्ते?, गोयमा! पंचविहे प०, तं–नाणपुलाए दंसणपुलाए चरित्तपुलाए लिंगपुलाए अहासुहुमपुलाए णामं पंचमे। बउसे णं भंते! कतिविहे प०?, गोयमा! पंचविहे प०, तं०–आभोगबउसे अणाभोगबउसे संवुडबउसे असंवुडबउसे अहासुहुमबउसे णामं पंचमे। कुसीले णं भंते! कतिविहे प०?, गोयमा! दुविहे प० तं०–पडिसेवणाकुसीले य कसायकुसीले य, पडिसेवणाकुसीले णं भंते! कतिविहे पन्नत्ते?, गोयमा! पंचविहे प०, तंजहा–नाणपडिसेवणाकुसीले दंसणपडिसेवणाकुसीले चरित्तपडिसेवणाकुसीले लिंगपडिसेवणाकुसीले अहासुहुमपडिसेवणाकुसीले णामं पंचमे, कसायकुसीले णं भंते! कतिविहे पन्नत्ते?, गोयमा! पंचविहे पं० तं०–नाणकसायकुसीले दंसणकसायकुसीले चरित्तकसायकुसीले लिंगकसायकुसीले अहासुहुमकसायकुसीले णामं पंचमे। नियंठे णं भंते! कतिविहे प०?, गोयमा! पंचविहे पं०, तंजहा–पढमसमयनियंठे अपढमसमयनियंठे चरमसमयनियंठे अच-

मसमयनियंठे अहासुहुमनियंठे णामं पंचमे । सिणाए णं भंते ! कतिविहे प० ?, गो० ! पंचविहे प० तं०—अच्छवी १ असबले २ अकम्मंसे ३ संसुद्धनाणदंसणधरे अरहा जिणे केवली ४ अपरिस्सावी ५। १ ।पुलाए णं भंते ! किं सवेयए होज्जा अवेदए होज्जा ?, गोयमा ! सवेयए होज्जा णो अवेयए होज्जा, जइ सवेयए होज्जा किं इत्थिवेदए होज्जा पुरिसवेयए पुरिसनपुंसगवेदए होज्जा ?, गोयमा ! नो इत्थिवेदए होज्जा पुरिसवेयए होज्जा पुरिसनपुंसगवेयए वा होज्जा। बउसे णं भंते! किं सवेदए होज्जा अवेदए होज्जा ?, गोयमा! सवेदए होज्जा णो अवेदए होज्जा, जइ सवेदए होज्जा किं इत्थिवेयए होज्जा पुरिसवेयए होज्जा पुरिसनपुंसगवेदए होज्जा ?, गोयमा ! इत्थिवेयए वा होज्जा पुरिसवेयए वा होज्जा पुरिसनपुंसगवेयए वा होज्जा, एवं पडिसेवणाकुसीलेवि, कसायकुसीले णं भंते ! किं सवेदए ? पुच्छा, गोयमा ! सवेदए वा हो० अवेदए वा हो०, जइ अवेदए किं उवसंतवेदए खीणवेदए हो० ?, गोयमा ! उवसंतवेदए वा खीणवेदए वा हो०, जइ सवेयए होज्जा किं इत्थिवेदए पुच्छा, गोयमा ! तिसुवि जहा बउसो। णियंठे णं भंते ! किं सवेदए पुच्छा, गोयमा! णो सवेयए होज्जा अवेयए हो०, जइ अवेयए हो० किं उवसंत पुच्छा, गोयमा ! उवसंतवेयए वा होइ खीणवेयए वा होज्जा । सिणाए णं भंते ! किं सवेयए होज्जा ?, जहा नियंठे तहा सिणाएवि, नवरं णो उवसंतवेयए होज्जा खीणवेयए होज्जा २ ॥ ( सूत्रं ७५१ )

'पण्णवणे'त्यादि, एताः पुनरुद्देशकार्थावगमगम्या इति, तत्र 'पन्नवण'त्ति द्वाराभिधानायाह—'रायगिहे'त्यादि, 'कति

ण'मित्यादि'नियंठ'त्ति निर्गताः सवाह्याभ्यन्तराद्ग्रन्थादिति निर्ग्रन्थाः-साधवः, एतेषां च प्रतिपन्नसर्वविरतीनामपि विचित्रचारित्रमोहनीयकर्मक्षयोपशमादिकृतो भेदोऽवसेयः, तत्र 'पुलाय'त्ति पुलाको-निस्सारो धान्यकणः पुलाकवत्पुलाकः संयमसारापेक्षया, स च संयमवानपि मनाक् तमसारं कुर्वन् पुलाक इत्युच्यते, वउसे'त्ति वकुशं-शवलं कर्बुरमित्यनर्थान्तरं, ततश्च वकुशसंयमयोगाद्वकुशः 'कुसीले'त्ति कुत्सितं शीलं-चरणमस्येति कुशीलः 'नियंठे'त्ति निर्गतो ग्रन्थात्-मोहनीयकर्माख्यादिति निर्ग्रन्थः 'सिणाए'त्ति स्नात इव स्नातो घातिकर्ममलक्षणमलपटलक्षालनादिति। तत्र पुलाको द्विविधो लब्धिप्रतिसेवाभेदात्, तत्र लब्धिपुलाको लब्धिविशेषवान्, यदाह—"संघाइयाण कज्जे चुन्निज्जा चक्कवट्टिमवि जीए। तीए लद्धीएँ जुओ लद्धिपुलाओ मुणेयव्वो ॥ १ ॥" [ सङ्घादिकानां कार्ये यया चक्रवर्त्तिनमपि चूरयेत्तया लब्ध्या युतो लब्धिपुलाको ज्ञातव्यः ॥ १ ॥ ] अन्ये त्वाहुः-आसेवनतो यो ज्ञानपुलाकस्तस्येयमीदृशी लब्धिः स एव लब्धिपुलाको न तद्व्यतिरिक्तः कश्चिदपर इति। आसेवनापुलाकं पुनराश्रित्याह—'पुलाए णं भंते!'इत्यादि, 'नाणपुलाए'त्ति ज्ञानमाश्रित्य पुलाकस्तस्यासारताकारीविराधको ज्ञानपुलाकः, एवं दर्शनादिपुलाकोऽपि, आह च—"खलियाइदूसणेहिं नाणं संकाइएहिं सम्मत्तं। मूलुत्तरगुणपडिसेवणाइ चरणं विराहेइ ॥ १ ॥ लिंगपुलाओ अन्नं निक्कारणओ करेइ जो लिंगं। मणसा अकप्पियाणं निसेवओ होइ अहसुहमो ॥ २ ॥" [ स्वलितादिदूषणैर्ज्ञानं शङ्कादिभिः सम्यक्त्वं मूलोत्तरगुणप्रतिसेवनया चारित्रं विराधयति ॥ १ ॥ लिङ्गपुलाकोऽन्यत् निष्कारणतः करोति यो लिङ्गम्। मनसाऽकल्पितानां निषेवको भवति यथासूक्ष्मः ॥ २ ॥ ] वकुशो द्विविधो भवत्युपकरणशरीरभेदात्, तत्र वस्त्रपात्राद्युपकरणविभूषानुवर्त्तन-

शील उपकरणवकुशः करचरणनखमुखादिदेहावयवविभूषाऽनुवर्त्ती शरीरबकुशः, स चायं द्विविधोऽपि पञ्चविधः, तथा चाह—'वउसे ण'मित्यादि, 'आभोगवउसे'त्ति आभोगः—साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवं ज्ञानं तत्प्रधानो वकुश आभोगवकुशः एवमन्येऽपि, इहाप्युक्तम्—"आभोगे जाणंतो करेइ दोसं अजाणमणभोगे। मूलुत्तरेहिं संवुड विवरीअ असंवुडो होइ ॥ १ ॥ अच्छिमुह मज्जमाणो होइ अहासुहुमओ तहा वउसो । अहवा जाणिज्जंतो असंवुडो संवुडो इयरो ॥ २ ॥" [ जानानो दोषं करोत्याभोगः अजानानोऽनाभोगो मूलोत्तरयोः संवृतोऽसंवृतो भवतीतरः ॥ १ ॥ अक्षिमुखं मार्जयन् भवति यथासूक्ष्मस्तथा वकुशः । अथवा ज्ञायमानोऽसंवृतः इतरः संवृतः ॥ २ ॥ ] 'पडिसेवणाकुसीले य'त्ति तत्र सेवना—सम्यगाराधना तत्प्रतिपक्षस्तु प्रतिषेवणा तया कुशीलः प्रतिसेवनाकुशीलः 'कसायकुसीले'त्ति कषायैः कुशीलः कषायकुशीलः 'नाणपडिसेवणाकुसीले'त्ति ज्ञानस्य प्रतिषेवणया कुशीलो ज्ञानप्रतिषेवणाकुशीलः एवमन्येऽपि, उक्तञ्च—"इह नाणाइकुसीलो उवजीवं होइ नाणपभिईए। अहसुहुमो पुण तुस्से एस तवस्सित्तिसंसाए॥१॥" [ ज्ञानप्रभृतिकानुपजीवन्निह ज्ञानादिकुशीलो भवति यथासूक्ष्मः पुनरेष तपस्वीति प्रशंसया तुष्यति ॥ १ ॥" ] 'नाणकसायकुसीले'त्ति ज्ञानमाश्रित्य कषायकुशीलो ज्ञानकषायकुशीलः, एवमन्येऽपि, इह गाथाः—"णाणंदंसणलिंगे जो जुंजइ कोहमाणमाईहिं । सो नाणाइकुसीलो कसायओ होइ विन्नेओ ॥ १ ॥ चारित्तंमि कुसीलो कसायओ जो पयच्छई सावं । मणसा कोहाईए निसेवयं होइ अहसुहुमो ॥२॥ अहवावि कसाएहिं नाणाईणं विराहओ जो उ। सो नाणाइकुसीलो णेओ वक्खाणभेएणं ॥ ३ ॥" [ ज्ञानदर्शनलिङ्गानि यः क्रोधमानादिभिर्युनक्ति स ज्ञानादिकुशीलः कषायतो भवति

विज्ञेयः ॥ १ ॥ यः कषायाच्छापं प्रयच्छति स चारित्रे कुशीलो मनसा क्रोधादीन्निषेवमाणो भवति यथासूक्ष्मः ॥ २ ॥ अथवाऽपि यस्तु कषायैर्ज्ञानादीनां विराधकः स ज्ञानादिकुशीलो ज्ञेयो व्याख्यानभेदेन ॥ ३ ॥ ] 'पढमसमयनियंठे' इत्यादि, उपशान्तमोहाद्धायाः क्षीणमोहच्छद्मस्थाद्धायाश्चान्तर्मुहूर्त्तप्रमाणायाः प्रथमसमये वर्त्तमानः प्रथमसमयनिर्ग्रन्थः शेषेष्वप्रथमसमयनिर्ग्रन्थः, एवं निर्ग्रन्थाद्धायाश्चरमसमये चरमसमयनिर्ग्रन्थः शेषेष्वितरः, सामान्येन तु यथासूक्ष्मेति पारिभाषिकी सञ्ज्ञा, उक्तं चेह—"अंतमुहुत्तपमाणयनिग्गंथद्धाइ पढमसमयंमि । पढमसमयंनियंठो अन्नेसु अपढमसमओ सो ॥ १ ॥ एमेव तयद्धाए चरिमे समयंमि चरमसमओ सो । सेसेसु पुण अचरमो सामन्नेणं तु अहसुहुमो ॥ २ ॥" [ अन्तर्मुहूर्त्तप्रमाणनिर्ग्रन्थाद्धायाः प्रथमसमये प्रथमसमयनिर्ग्रन्थः अन्येष्वप्रथमसमयः सः ॥ १ ॥ एवमेव तदद्धायाश्चरमसमये चरमसमयः यः शेषेषु स पुनरचरमः सामान्येन तु यथासूक्ष्मः ॥ २ ॥ ] 'अच्छवी'त्यादि, 'अच्छवी'त्ति अव्यथक इत्येके, छवियोगाच्छविः—शरीरं तद्योगनिरोधेन यस्य नास्त्यसावच्छविक इत्यन्ये, क्षपा—सखेदो व्यापारस्तस्या अस्तित्वात्क्षपी तन्निषेधादक्षपीत्यन्ये, घातिचतुष्टयक्षपणानन्तरं वा तत्क्षपणाभावादक्षपीत्युच्यते १ 'अशबलः' एकान्तविशुद्धचरणोऽतिचारपङ्काभावात् २ 'अकर्म्मांशः' विगतघातिकर्म्मा ३ 'संशुद्धज्ञानदर्शनधरः' केवलज्ञानदर्शनधारीति चतुर्थः अर्हन् जिनः केवलीत्येकार्थं शब्दत्रयं चतुर्थस्नातकभेदार्थाभिधायकम् ४ 'अपरिश्रावी' परिश्रवति—आश्रवति कर्म्म बध्नातीत्येवंशीलः परिश्रावी तन्निषेधादपरिश्रावी—अबन्धको निरुद्धयोग इत्यर्थः, अयं च पञ्चमः स्नातकभेदः, उत्तराध्ययनेषु त्वर्हन् जिनः केवलीत्ययं पञ्चमो भेद उक्तः, अपरिश्रावीति तु नाधीतमेव, इह चावस्थाभेदेन भेदो न

केनचिद्वृत्तिकृतेहान्यत्र च ग्रन्थे व्याख्यातस्तत्र चैवं संभावयामः—शब्दनयापेक्षयैतेषां भेदो भावनीयः शक्रपुरन्दरादिवदिति, प्रज्ञापनेति गतम् ॥ अथ वेदद्वारे—'नो अवेयए होज्ज'त्ति पुलाकबकुशप्रतिसेवाकुशीलानामुपशमक्षपकश्रेण्योरभावात् 'नो इत्थिवेयए'त्ति स्त्रियाः पुलाकलब्धेरभावात् 'पुरिसनपुंसगवेयए'त्ति पुरुषः सन् यो नपुंसकवेदको वर्द्धितकत्वादि-भावेन भवत्यसौ पुरुषनपुंसकवेदकः न स्वरूपेण नपुंसकवेदक इतियावत्। 'कसायकुसीले ण'मित्यादि, 'उवसंतवेदए वा होज्जा खीणवेयए वा होज्ज'त्ति सूक्ष्मसम्परायगुणस्थानकं यावत् कषायकुशीलो भवति, स च प्रमत्ताप्रमत्तापूर्व-करणेषु सवेदः अनिवृत्तिबादरे तूपशान्तेषु क्षीणेषु वा वेदेष्ववेदः स्यात् सूक्ष्मसम्पराये चेति, 'नियंठे ण' मित्यादौ 'उवसंतवेयए वा होज्जा खीणवेयए वा होज्ज'त्ति श्रेणिद्वये निर्ग्रन्थत्वभावादिति। 'सिणाए ण' मित्यादौ 'नो उवसंतवेयए होज्जा खीणवेयए होज्ज'त्ति क्षपकश्रेण्यामेव स्नातकत्वभावादिति ॥ रागद्वारे—

पुलाए णं भंते! किं सरागे होज्जा वीयरागे होज्जा?, गोयमा! सरागे होज्जा णो वीयरागे होज्जा, एवं जाव कसायकुसीले। णियंठे णं भंते! किं सरागे होज्जा? पुच्छा, गोयमा! णो सरागे होज्जा वीयरागे होज्जा, जइ वीयरागे होज्जा किं उवसंतकसायवीयरागे होज्जा खीणकसायवीयरागे वा होज्जा?, गोयमा! उवसंतकसायवीयरागेवा होज्जा खीणकसायवीयरागे वा होज्जा, सिणाए एवं चेव, नवरं णो उवसंतकसायवीय-रागे होज्जा खीणकसायवीयरागे होज्जा ३॥ (सूत्रं ७८२) पुलाए णं भंते! किं ठियकप्पे होज्जा अट्ठियकप्पे होज्जा? गोयमा! ठियकप्पे वा होज्जा अट्ठियकप्पे वा होज्जा, एवं जाव सिणाए। पुलाए णं भंते! किं जिणकप्पे

होज्जा थेरकप्पे होज्जा कप्पातीते होज्जा ?, गोयमा ! नो जिणकप्पे होज्जा थेरकप्पे होज्जा णो कप्पातीते होज्जा। बउसे णं पुच्छा, गोयमा ! जिणकप्पे वा होज्जा थेरकप्पे वा होज्जा नो कप्पातीते होज्जा, एवं पडिसेवणाकुसीलेवि। कसायकुसीले णं पुच्छा, गोयमा ! जिणकप्पे वा होज्जा थेरकप्पे होज्जा कप्पातीते वा होज्जा। नियंठे णं पुच्छा, गोयमा ! नो जिणकप्पे होज्जा नो थेरकप्पे होज्जा कप्पातीते होज्जा, एवं सिणाएवि ४ ॥ ( सूत्रं ७५३ ) पुलाए णं भंते ! किं सामाइयसंजमे होज्जा छेओवट्ठावणियसंजमे होज्जा परिहारविसुद्धियसंजमे होज्जा सुहुमसंपरागसंजमे होज्जा अहक्खायसंजमे होज्जा ?, गोयमा ! सामाइयसंजमे वा होज्जा छेओवट्ठावणियसंजमे वा होज्जा णो परिहारविसुद्धियसंजमे होज्जा णो सुहुमसंपरागे होज्जा णो अहक्खायसंजमे होज्जा, एवं बउसेवि, एवं पडिसेवणाकुसीलेवि, कसायकुसीले णं पुच्छा, गोयमा ! सामाइयसंजमे वा होज्जा जाव सुहुमसंपरागसंजमे वा होज्जा णो अहक्खायसंजमे होज्जा। नियंठे णं पुच्छा, गोयमा ! णो सामाइयसंजमे होज्जा जाव णो सुहुमसंपरागसंजमे हो० अहक्खायसं० होज्जा, एवं सिणाएवि ५ ॥ (सूत्रं ७५४) पुलाए णं भंते ! किं पडिसेवए होज्जा अपडिसेवए होज्जा ?, गोयमा ! पडिसेवए होज्जा णो अपडिसेवए होज्जा, जइ पडिसेवए होज्जा किं मूलगुणपडिसेवए होज्जा उत्तरगुणपडिसेवए होज्जा ?, गोयमा ! मूलगुणपडिसेवए वा होज्जा उत्तरगुणपडिसेवए वा होज्जा, मूलगुण पडिसेवमाणे पंचण्हं आसवाणं अन्नयरं पडिसेवेज्जा, उत्तरगुण पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अन्नयरं पडिसेवेज्जा। बउसे णं पुच्छा, गोयमा ! पडिसेवए हो-

ज्जा णो अपडिसेवए होज्जा, जइ पडिसेवए होज्जा किं मूलगुणपडिसेवए होज्जा उत्तरगुणपडिसेवए वा होज्जा?, गोयमा! णो मूलगुणपडिसेवए होज्जा उत्तरगुणपडिसेवए होज्जा, उत्तरगुण पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अन्नयरं पडिसेवेज्जा, पडिसेवणाकुसीले जहा पुलाए। कसायकुसीले णं पुच्छा, गोयमा! णो पडिसेवए होज्जा अपडिसेवए होज्जा, एवं निग्गंथेवि, एवं सिणाएवि ६॥ ( सूत्रं ७५९ )

'पुलाए णं भंते! किं सरागे'त्ति सरागः-सकषायः॥ कल्पद्वारे—'पुलाए ण'मित्यादि 'पुलाए णं भंते! किं ठियकप्पे'त्यादि, आचेलक्यादिषु दशसु पदेषु प्रथमपश्चिमतीर्थङ्करसाधवः स्थिता एव अवश्यं तत्पालनादिति तेषां स्थितिकल्पस्तत्र वा पुलाको भवेत्, मध्यमतीर्थङ्करसाधवस्तु तेषु स्थिताश्चास्थिताश्चेत्यस्थितकल्पस्तेषां तत्र वा पुलाको भवेत्, एवं सर्वेऽपि, अथवा कल्पो जिनकल्पः स्थविरकल्पश्चेति द्विधेति तमाश्रित्याह—'पुलाए णं भंते! किं जिणकप्पे' इत्यादि, 'कप्पातीते'त्ति जिनकल्पस्थविरकल्पाभ्यामन्यत्र। 'कसायकुसीले ण'मित्यादौ 'कप्पातीते वा होज्ज'त्ति कल्पातीते वा कषायकुशीलो भवेत्, कल्पातीतस्य छद्मस्थस्य तीर्थकरस्य सकषायित्वादिति। 'नियंठे ण'मित्यादौ 'कप्पातीते होज्ज'त्ति निर्ग्रन्थः कल्पातीत एव भवेद्, यतस्तस्य जिनकल्पस्थविरकल्पधर्म्मा न सन्तीति। चारित्रद्वारं व्यक्तमेव॥ प्रतिसेवनाद्वारे च—'पुलाए ण' मित्यादि, 'पडिसेवए'त्ति संयमप्रतिकूलार्थस्य सञ्ज्वलनकषायोदयात्सेवकः प्रतिसेवकः संयमविराधक इत्यर्थः 'मूलगुणपडिसेवए'त्ति मूलगुणाः-प्राणातिपातविरमणादयस्तेषां प्रातिकूल्येन सेवको मूलगुणप्रतिसेवकः, एवमुत्तरगुणप्रतिसेवकोऽपि नवरमुत्तरगुणा-दशविधप्रत्याख्यानरूपाः, 'दसविहस्स पच्चक्खा-

णस्स'त्ति तत्र दशविधं प्रत्याख्यानं 'अनागतमइक्कंतं कोडीसहिय'मित्यादि प्राग्व्याख्यातस्वरूपम्, अथवा 'नवकारपोरिसीए' इत्याद्यावश्यकप्रसिद्धम् 'अन्नयरं पडिसेवेज्ज'त्ति एकतरं प्रत्याख्यानं विराधयेत्, उपलक्षणत्वाच्चास्य पिण्डविशुद्ध्यादिविराधकत्वमपि संभाव्यत इति ६ ॥ ज्ञानद्वारे—

पुलाए णं भंते ! कतिसु नाणेसु होज्जा ?, गोयमा ! दोसु वा तिसु वा होज्जा, दोसु होज्जमाणे दोसु आभिणिबोहियनाणे सुअनाणे होज्जा तिसु होमाणे तिसु आभिणिबोहियनाणे सुयनाणे ओहिनाणे होज्जा, एवं बउसेवि, एवं पडिसेवणाकुसीलेवि, कसायकुसीले णं पुच्छा, गोयमा ! दोसु वा तिसु वा चउसु वा होज्जा, दोसु होमाणे दोसु आभिणिबोहियनाणे सुयनाणे होज्जा, तिसु होमाणे तिसु आभिणिबोहियनाणसुयनाणओहिनाणेसु होज्जा अहवा तिसु होमाणे आभिणिबोहियनाणसुयनाणमणपज्जवनाणेसु होज्जा, चउसु होज्जमाणे चउसु आभिणिबोहियनाणसुयनाणओहिनाणमणपज्जवनाणेसु होज्जा, एवं नियंठेवि । सिणाए णं पुच्छा, गोयमा ! एगंमि केवलनाणे होज्जा ॥ ( सूत्रं ७५६ ) पुलाए णं भंते ! केवतियं सुयं अहिज्जेज्जा ?, गोयमा ! जहन्नेणं नवमस्स पुव्वस्स ततियं आयारवत्थुं, उक्कोसेणं नव पुव्वाइं अहिज्जेज्जा । बउसे पुच्छा, गोयमा ! जहन्नेणं अट्ठ पवयणमायाओ उक्कोसेणं दस पुव्वाइं अहिज्जेज्जा । एवं पडिसेवणाकुसीलेवि । कसायकुसीले पुच्छा, गोयमा ! जहन्नेणं अट्ठ पवयणमायाओ उक्कोसेणं चोद्दस पुव्वाइं अहिज्जेज्जा, एवं नियंठेवि । सिणाए पुच्छा, गोयमा ! सुयवतिरित्ते होज्जा ७ ॥ ( सूत्रं ७५७ )

आभिनिवोधिकादिज्ञानप्रस्तावात् ज्ञानविशेषभूतं श्रुतं विशेषेण चिन्तयन्नाह—'पुलाए णं भंते ! केवइयं सुय' मित्यादि, 'जहन्नेणं अट्ठ पवयणमायाओ'त्ति अष्टप्रवचनमातृपालनरूपत्वाच्चारित्रस्य तद्वतोऽष्टप्रवचनमातृपरिज्ञानेनावश्यं भाव्यं, ज्ञानपूर्वकत्वाच्चारित्रस्य, तत्परिज्ञानं च श्रुतादतोऽष्टप्रवचनमातृप्रतिपादनपरं श्रुतं वकुशस्य जघन्यतोऽपि भवतीति, तच्च 'अट्ठण्हं पवयणमाईणं' इत्यस्य यद् विवरणसूत्रं तत्संभाव्यते, यत्पुनरुत्तराध्ययनेषु प्रवचनमातृनामकमध्ययनं तद्गुरुत्वाद्विशिष्टतरश्रुतत्वाच्च न जघन्यतः संभवतीति, बाहुल्याश्रयं चेदं श्रुतप्रमाणं तेन न माषतुषादिना व्यभिचार इति ॥ तीर्थद्वारे—

पुलाए णं भंते ! किं तित्थे होज्जा अतित्थे होज्जा ?, गोयमा ! तित्थे होज्जा णो अतित्थे होज्जा, एवं बउसेवि, एवं पडिसेवणाकुसीलेवि । कसायकुसीले पुच्छा, गोयमा ! तित्थे वा होज्जा अतित्थे वा होज्जा, जइ अतित्थे होज्जा किं तित्थयरे होज्जा पत्तेयबुद्धे होज्जा ?, गोयमा ! तित्थगरे वा होज्जा पत्तेयबुद्धे वा होज्जा, एवं नियंठेवि, एवं सिणाएवि ८ ॥ ( सूत्रं ७५८ ) पुलाए णं भंते ! किं सलिंगे होज्जा अन्नलिंगे होज्जा गिहिलिंगे होज्जा ?, गोयमा ! दव्वलिंगं पडुच्च सलिंगे वा होज्जा अन्नलिंगे वा होज्जा गिहिलिंगे वा होज्जा, भावलिंगं पडुच्च नियमा सलिंगे होज्जा एवं जाव सिणाए ९ ॥ ( सूत्रं ७५९ ) पुलाए णं भंते ! कइसु सरीरेसु होज्जा ?, गोयमा ! तिसु ओरालियतेयाकम्मएसु होज्जा, बउसे णं भंते ! पुच्छा, गोयमा ! तिसु वा चउसु वा होज्जा, तिसु होमाणे तिसु ओरालियतेयाकम्मएसु होज्जा, चउसु होमाणे चउसु ओरालियवेउव्वियतेया-

कम्मएसु होज्जा, एवं पडिसेवणाकुसीलेवि। कसायकुसीले पुच्छा, गोयमा! तिसु वा चउसु वा पंचसु वा होज्जा, तिसु होज्जमाणे तिसु ओरालियतेयाकम्मएसु होज्जा, चउसु होमाणे चउसु ओरालियवेउव्वियतेयाकम्मएसु होज्जा पंचसु होमाणे पंचसु ओरालियवेउव्वियआहारगतेयाकम्मएसु होज्जा, णियंठे सिणाओ य जहा पुलाओ ॥ १० ॥ ( सूत्रं ७६० ) पुलाए णं भंते! किं कम्मभूमीए होज्जा अकम्मभूमीए होज्जा?, गोयमा! जम्मणसंतिभावं पडुच्च कम्मभूमीए होज्जा णो अकम्मभूमीए होज्जा, बउसे णं पुच्छा, गोयमा! जम्मणसंतिभावं पडुच्च कम्मभूमीए होज्जा णो अकम्मभूमीए होज्जा, साहरणं पडुच्च कम्मभूमीए वा होज्जा अकम्मभूमीए वा होज्जा, एवं जाव सिणाए ॥ ११ ॥ ( सूत्रं ७६१ )

'तित्थे'त्ति सङ्घे सति, 'कसायकुसीले'त्यादि कषायकुशीलश्छद्मस्थावस्थायां तीर्थङ्करोऽपि स्यादतस्तदपेक्षया तीर्थव्यवच्छेदे च तदन्योऽप्यसौ स्यादिति तदन्यापेक्षया च 'अतित्थे वा होज्जे'त्युच्यते, अत एवाह-'जइ अतित्थे होज्जा किं तित्थयरे होज्जे'त्यादि ॥ लिङ्गद्वारे लिङ्गं द्विधा-द्रव्यभावभेदात्, तत्र च भावलिङ्गं-ज्ञानादि, एतच्च स्वलिङ्गमेव, ज्ञानादिभावस्यार्हतानामेव भावात्, द्रव्यलिङ्गं तु द्वेधा-स्वलिङ्गपरलिङ्गभेदात्, तत्र स्वलिङ्गं-रजोहरणादि, परलिङ्गं च द्विधा-कुतीर्थिकलिङ्गं गृहस्थलिङ्गं चेत्यत आह-'पुलाए णं भंते! किं सलिंगे'त्यादि। त्रिविधलिङ्गेऽपि भवेद्, द्रव्यलिङ्गानपेक्षत्वाच्चरणपरिणामस्येति ॥ शरीरद्वारं व्यक्तं। क्षेत्रद्वारे-'पुलाए णं भंते! किं कम्मभूमीए' इत्यादि, 'जम्मणसंतिभावं पडुच्च'त्ति जन्म-उत्पादः सद्भावश्च-विवक्षितक्षेत्रादन्यत्र तत्र वा जातस्य तत्र चरणभावेना-

स्तित्वमेव तयोश्च समाहारद्वन्द्वोऽतस्तत्प्रतीत्य पुलाकः कर्म्मभूमौ भवेत्, तत्र जायते विहरति च तत्रैवेत्यर्थः, अकर्म्मभूमौ पुनरसौ न जायते तज्जातस्य चारित्राभावात्, न च तत्र वर्त्तते, पुलाकलब्धौ वर्त्तमानस्य देवादिभिः संहर्त्तुमशक्यत्वात्। वकुशसूत्रे 'नो अकम्मभूमीए होज्ज'त्ति अकर्म्मभूमौ वकुशो न जन्मतो भवति स्वकृतविहारतश्च, परकृतविहारतस्तु कर्म्मभूम्यामकर्म्मभूम्यां च संभवतीत्येतदेवाह—'साहरणं पडुचे'त्यादि, इह च संहरणं–क्षेत्रान्तरात् क्षेत्रान्तरे देवादिभिर्नयनम् ॥ कालद्वारे—

पुलाए णं भंते ! किं ओसप्पिणिकाले होज्जा उस्सप्पिणिकाले हो० णोओसप्पिणिणोउस्सप्पिणिकाले वा होज्जा ?, गोयमा ! ओसप्पिणिकाले वा होज्जा उस्सप्पिणिकाले वा होज्जा नोउस्सप्पिणिनोओसप्पिणिकाले वा होज्जा, जइ ओसप्पिणिकाले होज्जा किं सुसमसुसमाकाले होज्जा १ सुसमाकाले होज्जा २ सुसमदूसमाकाले होज्जा ३ दूसमसुसमाकाले होज्जा ४ दूसमाकाले होज्जा ५ दूसमदूसमाकाले होज्जा ६ ?, गो० ! जंमणं पडुच णो सुसमसुसमाकाले होज्जा १ णो सुसमाकाले होज्जा २ सुसमदूसमाकाले होज्जा ३ दूसमसुसमाकाले वा होज्जा ४ णो दूसमाकाले होज्जा ५ णो दूसमदूसमाकाले होज्जा ६, संतिभावं पडुच णो सुसमसुसमाकाले होज्जा णो सुसमाकाले होज्जा सुसमदूसमाकाले वा होज्जा दूसमसुसमाकाले वा होज्जा दूसमाकाले वा होज्जा णो दूसमदूसमाकाले होज्जा, जइ उस्सप्पिणिकाले होज्जा किं दूसमदूसमाकाले होज्जा दूसमाकाले होज्जा दूसमसुसमाकाले होज्जा सुसमदूसमाकाले होज्जा सुसमाकाले होज्जा सुसमसुसमाकाले होज्जा ?,

गो०! जंमणं पडुच णो दूसमदूसमाकाले होज्जा १ दूसमाकाले वा होज्जा २ दूसमसुसमाकाले वा होज्जा ३ सुसमदूसमाकाले वा होज्जा ४ णो सुसमाकाले होज्जा ५ णो सुसमसुसमाकाले होज्जा ६, संतिभावं पडुच णोदूसमदूसमाकाले होज्जा १ दूसमाकाले होज्जा २ दूसमसुसमाकाले वा होज्जा ३ सुसमदूसमाकाले वा होज्जा ४ णो सुसमाकाले होज्जा ५ णो सुसमसुसमाकाले होज्जा ६। जइ णोउस्सप्पिणिनोअवसप्पिणिकाले होज्जा किं सुसमसुसमापलिभागे हो० सुसमपलिभागे० सुसमदूसमापलिभागे हो० दूसमसुसमापलिभागे ?, गोयमा! जंमणं संतिभावं च पडुच णो सुसमसुसमापलिभागे होज्जा णो सुसमपलिभागे० णो दूसमदूसमापलिभागे होज्जा दूसमसुसमापलिभागे हो०। बउसे णं पुच्छा, गोयमा! ओसप्पिणिकाले वा होज्जा उस्सप्पिणिकाले वा हो० नोओसप्पिणिनोउस्सप्पिणिकाले वा होज्जा, जइ ओसप्पिणिकाले हो० किं सुसमसुसमाकाले पुच्छा, गोयमा! जंमणं संतिभावं च पडुच णो सुसमसुसमाकाले होज्जा णो सुसमाकाले होज्जा सुसमदूसमाकाले वा होज्जा दूसमसुसमाकाले वा होज्जा दूसमाकाले वा हो० णो दूसमदूसमाकाले हो०, साहरणं पडुच अन्नयरे समाकाले होज्जा। जइ उस्सप्पिणिकाले होज्जा किं दूसमदूसमाकाले हो० ६? पुच्छा, गोयमा! जम्मणं पडुच णो दूसमदूसमाकाले होज्जा जहेव पुलाए, संतिभावं पडुच णो दूसमदूसमाकाले होज्जा णो दूसमाकाले होज्जा एवं संतिभावेणवि जहा पुलाए जाव णो सुसमसुसमाकाले हो०, साहरणं पडुच अन्नयरे समाकाले हो०। जइ नोओसप्पिणिनोउस्सप्पिणिकाले हो०? पुच्छा, गोयमा! जम्मणसं-

तिभावं पडुच्च णो सुसमसुसमापलिभागे होज्जा जहेव पुलाए जाव दूसमसुसमापलिभागे हो०, साहरणं पडुच्च अन्नयरे पलिभागे होज्जा, जहा बउसे एवं पडिसेवणाकुसीलेवि, एवं कसायकुसीलेवि, नियंठो सिणाओ य जहा पुलाओ, नवरं एतेसिं अब्भहियं साहरणं भाणियव्वं, सेसं तं चेव १२ ॥ ( सूत्रं ७६२ )

त्रिविधः कालोऽवसर्प्पिण्यादिः, तत्राद्यद्वयं भरतैरावतयोस्तृतीयस्तु महाविदेहहैमवतादिषु, 'सुसमदूसमाकाले वा होज्ज'त्ति आदिदेवकाले इत्यर्थः, 'दुस्समसुसमकाले व'त्ति चतुर्थेऽरके इत्यर्थः, उक्तात्समाद्वयान्नान्यत्रासौ जायते, 'संतिभावं पडुच्चे'त्यादि, अवसर्प्पिण्यां सद्भावं प्रतीत्य तृतीयचतुर्थपञ्चमारकेषु भवेत्, तत्र चतुर्थारके जातः सन् पञ्चमेऽपि वर्त्तते, तृतीयचतुर्थारके सद्भावस्तु तज्जन्मपूर्वक इति, 'जइ उस्सप्पिणी'त्यादि, उत्सर्पिण्यां द्वितीयतृतीयचतुर्थेष्वरकेषु जन्मतो भवति, तत्र द्वितीयस्यान्ते जायते तृतीये तु चरणं प्रतिपद्यते, तृतीयचतुर्थयोस्तु जायते चरणं च प्रतिपद्यत इति, सद्भावं पुनः प्रतीत्य तृतीयचतुर्थयोरेव तस्य सत्ता, तयोरेव चरणप्रतिपत्तेरिति, 'जइ णोओसप्पिणी'त्यादि, 'सुसमपलिभागे'त्ति सुषमसुषमायाः प्रतिभागः—सादृश्यं यत्र काले स तथा, स च देवकुरूत्तरकुरुषु, एवं सुषमाप्रतिभागो हरिवर्षरम्यकवर्षेषु, सुषमदुष्षमाप्रतिभागो हैमवतैरण्यवतेषु, दुष्षमसुषमाप्रतिभागो महाविदेहेषु । 'नियंठो सिणाओ य जहा पुलाओ'त्ति एतौ पुलाकवद्वक्तव्यौ, विशेषं पुनराह—'नवरं एएसिं अब्भहियं साहरणं भाणियव्वं'ति पुलाकस्य हि पूर्वोक्तयुक्त्या संहरणं नास्ति एतयोश्च तत्संभवतीति कृत्वा तद्वाच्यं, संहरणद्वारेण च यस्तयोः सर्वकालेषु सम्भवोऽसौ पूर्वसंहृतयोर्निर्ग्रन्थस्नातकत्वप्राप्तौ द्रष्टव्यो, यतो नापगतवेदानां संहरणमस्तीति, यदाह—"समणीमवगयवेयं परिहारपुलाय-

मप्पमत्तं च । चोद्दसपुव्विं आहारयं च ण य कोइ संहरइ ॥ १ ॥" [श्रमणीमपगतवेदं परिहारं पुलाकमप्रमत्तं च। चतुर्दशपूर्विणमाहारकं च न कोऽपि संहरति ॥ १ ॥] इति ॥ गतिद्वारे सौधर्मादिका देवगतिरिन्द्रादयस्तद्भेदास्तदायुश्च पुलाकादीनां निरूप्यते—

पुलाए णं भंते ! कालगए समाणे किं गतिं गच्छति ?, गोयमा ! देवगतिं गच्छति, देवगतिं गच्छमाणे किं भवणवासीसु उववज्जेज्जा वाणमंतरेसु उववज्जेज्जा जोइसवेमाणिएसु उववज्जेज्जा ?, गोयमा ! णो भवणवासीसु णो वाण० णो जोइस० वेमाणिएसु उवव०, वेमाणिएसु उववज्जमाणे जह० सोहम्मे कप्पे उक्कोसेणं सहस्सारे कप्पे उववज्जेज्जा, बउसे णं एवं चेव नवरं उक्कोसेणं अच्चुए कप्पे, पडिसेवणाकुसीले जहा बउसे, कसायकुसीले जहा पुलाए, नवरं उक्कोसेणं अणुत्तरविमाणेसु उववज्जेज्जा, णियंठे णं भंते ! एवं चेव, एवं जाव वेमाणिएसु उववज्जमाणे अजहन्नमणुक्कोसेणं अणुत्तरविमाणेसु उववज्जेज्जा, सिणाए णं भंते ! कालगए समाणे किं गतिं गच्छइ ?, गोयमा ! सिद्धिगतिं गच्छइ । पुलाए णं भंते ! देवेसु उववज्जमाणे किं इंदत्ताए उववज्जेज्जा सामाणियत्ताए उववज्जेज्जा तायत्तीसाए वा उववज्जेज्जा लोगपालत्ताए वा उववज्जेज्जा अहमिंदत्ताए वा उववज्जेज्जा ?, गोयमा ! अविराहणं पडुच्च इंदत्ताए उवव० सामाणियत्ताए उववज्जेज्जा लोगपालत्ताए वा उवव० तायत्तीसाए वा उववज्जेज्जा नो अहमिंदत्ताए उववज्जेज्जा, विराहणं पडुच्च अन्नयरेसु उववज्जेज्जा, एवं बउसेवि, एवं पडिसेवणाकुसीलेवि, कसायकुसीले पुच्छा, गोयमा ! अविराहणं पडुच्च इंदत्ताए वा उववज्जेज्जा जाव

अहमिंदत्ताए उवव० विराहणं पडुच्च अन्नयरेसु उवव०, नियंठे पुच्छा, गोयमा अविराहणं पडुच्च णो इंदत्ताए उवव० जाव णो लोगपालत्ताए उवव० अहमिंदत्ताए उवव०, विराहणं पडुच्च अन्नयरेसु उवव० ॥ पुलायस्स णं भंते ! देवलोगेसु उववज्जमाणस्स केवतियं कालं ठिती प० ?, गोयमा ! जहन्नेणं पलिओवमपुहुत्तं उक्कोसे० अट्ठारस सागरोवमाइं, बउसस्स पुच्छा, गोयमा ! जहन्नेणं पलिओवमपुहुत्तं उक्कोसेणं बावीसं सागरोवमाइं, एवं पडिसेवणाकुसीलेवि, कसायकुसीलस्स पुच्छा, गोयमा ! जहन्नेणं पलिओवमपुहुत्तं उक्कोसेणं तेत्तीसं सागरोवमाइं, णियंठस्स पुच्छा, गोयमा ! अजहन्नमणुक्कोसेणं तेत्तीसं सागरोवमाइं १३ ॥ ( सूत्रं ७६३ )

तत्र च 'अविराहणं पडुच्च'त्ति अविराधना ज्ञानादीनां अथवा लब्धेरनुपजीवनाऽतस्तां प्रतीत्य अविराधकाः सन्त इत्यर्थः, 'अन्नयरेसु उववज्जेज्ज'त्ति भवनपत्यादीनामन्यतरेषु देवेषूत्पद्यन्ते, विराधितसंयमानां भवनपत्याद्युत्पादस्योक्तत्वात्, यच्च प्रागुक्तं 'वेमाणिएसु उववज्जेज्ज'त्ति तत्संयमाविराधकत्वमाश्रित्यावसेयम् ॥ संयमद्वारे संयमस्थानानि तेषां चाल्पत्वादि चिन्त्यते, तत्र—

पुलागस्स णं भंते ! केवतिया संयमट्ठाणा प० ?, गो० ! असंखेज्जा संयमट्ठाणा प०, एवं जाव कसायकुसीलस्स। नियंठस्स णं भंते ! केवइया संजमट्ठाणा प० ?, गोयमा ! एगे अजहन्नमणुक्कोसए संजमट्ठाणे, एवं सिणायस्सवि, एतेसि णं भंते ! पुलागबउसपडिसेवणाकसायकुसीलनियंठसिणायाणं संजमट्ठाणाणं कयरे २ जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवे नियंठस्स सिणायस्स [ग्रन्थाग्रम् १४००० ]य एगे अज-

हन्नमणुक्कोसए संजमट्ठाणे पुलागस्स णं संजमट्ठाणा असंखेज्जगुणा बउसस्स संजमट्ठाणा असंखेज्जगुणा पडि-
सेवणाकुसीलस्स संजमट्ठाणा असंखेज्जगुणा कसायकुसीलस्स संजमट्ठाणा असंखेज्जगुणा १४॥ (सूत्रं ७६४)

'पुलागस्से'त्यादि, संयमः–चारित्रं तस्य स्थानानि–शुद्धिप्रकर्षाप्रकर्षकृता भेदाः संयमस्थानानि, तानि च प्रत्येकं सर्वा-
काशप्रदेशाग्रगुणितसर्वाकाशप्रदेशपरिमाणपर्यवोपेतानि भवन्ति, तानि च पुलाकस्यासङ्ख्येयानि भवन्ति, विचित्रत्वाच्चारि-
त्रमोहनीयक्षयोपशमस्य, एवं यावत्कषायकुशीलस्य, 'एगे अजहन्नमणुक्कोसए संजमठाणे'त्ति निर्ग्रन्थस्यैकं संयमस्थानं
भवति, कषायाणामुपशमस्य क्षयस्य चाविचित्रत्वेन शुद्धेरेकविधत्वात्, एकत्वादेव तदजघन्योत्कृष्टं, बहुष्वेव जघन्यो-
त्कृष्टभावसद्भावादिति ॥ अथ पुलाकादीनां परस्परतः संयमस्थानाल्पबहुत्वमाह–'एएसि णं'मित्यादि, सर्वेभ्यः स्तोकं
सर्वस्तोकं निर्ग्रन्थस्य स्नातकस्य च संयमस्थानं, कुतः?, यस्मादेकं, किंभूतं तत्? इत्याह–'अजहन्ने'त्यादि, एतच्चैवं शुद्धेरे-
कविधत्वात्, पुलाकादीनां तूक्तक्रमेणासङ्ख्येयगुणानि तानि क्षयोपशमवैचित्र्यादिति ॥ अथ निकर्षद्वारं, तत्र निकर्षः–
संनिकर्षः, पुलाकादीनां परस्परेण संयोजनं, तस्य च प्रस्तावनार्थमाह—

पुलागस्स णं भंते ! केवतिया चरित्तपज्जवा प० ?, गो० ! अणंता चरित्तपज्जवा प०, एवं जाव सिणायस्स।
पुलाए णं भंते ! पुलागस्स सट्ठाणसन्निगासेणं चरित्तपज्जवेहिं किं हीणे तुल्ले अब्भहिए ?, गोयमा ! सिय
हीणे १ सिय तुल्ले २ सिय अब्भहिए ३, जइ हीणे अणंतभागहीणे वा असंखेज्जभागहीणे वा संखेज्जइभाग-
हीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अनंतगुणहीणे वा, अह अब्भहिए अणंतभागमब्भहिए वा

असंखेज्जइभागमब्भहिए वा संखेज्जभागमब्भहिए वा संखेज्जगुणमब्भहिए वा असंखेज्जगुणमब्भहिए वा अणंतगुणमब्भहिए वा ॥ पुलाए णं भंते ! बउसस्स परट्ठाणसन्निगासेणं चरित्तपज्जवेहिं किं हीणे तुल्ले अब्भहिए ?, गोयमा ! हीणे नो तुल्ले नो अब्भहिए, अणंतगुणहीणे, एवं पडिसेवणाकुसीलस्सवि, कसायकुसीलेणं समं छट्ठाणवडिए जहेव सट्ठाणे, नियंठस्स जहा बउसस्स, एवं सिणायस्सवि ॥ बउसे णं भंते ! पुलागस्स परट्ठाणसन्निगासेणं चरित्तपज्जवेहिं किं हीणे तुल्ले अब्भहिए ?, गोयमा ! णो हीणे णो तुल्ले अब्भहिए अणंतगुणमब्भहिए । बउसे णं भंते ! बउसस्स सट्ठाणसन्निगासेणं चरित्तपज्जवेहिं पुच्छा, गोयमा ! सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे छट्ठाणवडिए । बउसे णं भंते ! पडिसेवणाकुसीलस्स परट्ठाणसन्निगासेणं चरित्तपज्जवेहिं किं हीणे० ?, छट्ठाणवडिए, एवं कसायकुसीलस्सवि ॥ बउसे णं भंते ! नियंठस्स परट्ठाणसन्निगासेणं चरित्तपज्जवेहिं पुच्छा, गोयमा ! हीणे णो तुल्ले णो अब्भहिए अणंतगुणहीणे, एवं सिणायस्सवि, पडिसेवणाकुसीलस्स एवं चेव बउसवत्तव्वया भाणियव्वा, कसायकुसीलस्स एस चेव बउसवत्तव्वया नवरं पुलाएणवि समं छट्ठाणवडिए । णियंठे णं भंते ! पुलागस्स परट्ठाणसन्निगासेणं चरित्तपज्जवेहिं पुच्छा, गोयमा ! णो हीणे णो तुल्ले अब्भहिए अणंतगुणमब्भहिए, एवं जाव कसायकुसीलस्स । णियंठे णं भंते ! णियंठस्स सट्ठाणसन्निगासेणं पुच्छा, गोयमा ! नो हीणे तुल्ले णो अब्भहिए, एवं सिणायस्सवि । सिणाए णं भंते ! पुलागस्स परट्ठाणसन्नि० एवं जहा नियंठस्स वत्तव्वया तहा सिणायस्सवि भाणियव्वा जाव सिणाए णं भंते ! सिणायस्स

सट्ठाणसन्निगासेणं पुच्छा, गोयमा! णो हीणे तुल्ले णो अब्भहिए ॥ एएसि णं भंते! पुलागबकुसपडिसेवणाकुसीलकसायकुसीलनियंठसिणायाणं जहन्नुक्कोसगाणं चरित्तपज्जवाणं कयरे २ जाव विसेसाहिया वा ?, गोयमा! पुलागस्स कसायकुसीलस्स य एएसि णं जहन्नगा चरित्तपज्जवा दोण्हवि तुल्ला सव्वत्थोवा, पुलागस्स उक्कोसगा चरित्तपज्जवा अनंतगुणा, बउसस्स पडिसेवणाकुसीलस्स य एएसि णं जहन्नगा चरित्तपज्जवा दोण्हवि तुल्ला अणंतगुणा, बउसस्स उक्कोसगा चरित्तपज्जवा अणंतगुणा, पडिसेवणाकुसीलस्स उक्कोसगा चरित्तपज्जवा अणंतगुणा, कसायकुसीलस्स उक्कोसगा चरित्तपज्जवा अणंतगुणा, णियंठस्स सिणायस्स य एतेसि णं अजहन्नमणुक्कोसगा चरित्तपज्जवा दोण्हवि तुल्ला अणंतगुणा १५ ॥ ( सूत्रं ७६५ ) पुलाए णं भंते! किं सयोगी होज्जा अजोगी वा होज्जा ?, गोयमा! सयोगी होज्जा नो अयोगी होज्जा, जइ सयोगी होज्जा किं मणजोगी होज्जा वइजोगी होज्जा काययोगी होज्जा ?, गोयमा! मणजोगी वा होज्जा वयजोगी वा होज्जा कायजोगी वा होज्जा, एवं जाव नियंठे। सिणाए णं पुच्छा, गोयमा! सयोगी वा होज्जा अयोगी वा होज्जा, जइ सयोगी होज्जा किं मणजोगी होज्जा सेसं जहा पुलागस्स १६ ॥ ( सूत्रं ७६६ ) पुलाए णं भंते! किं सागारोवउत्ते होज्जा अणागारोवउत्ते होज्जा ?, गोयमा! सागारोवउत्ते वा होज्जा अणागारोवउत्ते वा होज्जा एवं जाव सिणाए १७ ॥ ( सूत्रं ७६७ ) पुलाए णं भंते! सकसायी होज्जा अकसायी होज्जा ?, गोयमा! सकसायी होज्जा णो अकसायी होज्जा, जइ सकसाई से णं भंते! कतिसु कसाएसु होज्जा ?, गोयमा! चउसु

कोहमाणमायालोभेसु होज्जा, एवं बउसेवि, एवं पडिसेवणाकुसीलेवि, कसायकुसीले णं पुच्छा, गोयमा! सकसायी होज्जा णो अकसायी होज्जा, जइ सकसायी होज्जा से णं भंते! कतिसु कसाएसु होज्जा?, गोयमा! चउसु वा तिसु वा दोसु वा एगंमि वा होज्जा, चउसु होमाणे चउसु संजलणकोहमाणमायालोभेसु होज्जा तिसु होमाणे तिसु संजलणमाणमायालोभेसु होज्जा दोसु होमाणे संजलणमायालोभेसु होज्जा एगंमि होमाणे संजलणलोभे होज्जा, नियंठे णं पुच्छा, गोयमा! णो सकसायी होज्जा अकसायी होज्जा, जइ अकसायी होज्जा किं उवसंतकसायी होज्जा खीणकसायी होज्जा?, गोयमा! उवसंतकसायी वा होज्जा खीणकसायी वा होज्जा, सिणाए एवं चेव, नवरं णो उवसंतकसायी होज्जा, खीणकसायी होज्जा १८॥ ( सूत्रं ७६८ )

'पुलागस्से'त्यादि, 'चरित्तपज्जव'त्ति चारित्रस्य–सर्वविरतिरूपपरिणामस्य पर्यवा–भेदाश्चारित्रपर्यवास्ते च बुद्धिकृता अविभागपलिच्छेदा विषयकृता वा 'सट्ठाणसन्निगासेणं'ति स्वं–आत्मीयं सजातीयं स्थानं–पर्यवाणामाश्रयः स्वस्थानं–पुलाकादेः पुलाकादिरेव तस्य संनिकर्षः–संयोजनं स्वस्थानसंनिकर्षस्तेन, किं?–'हीणे'त्ति विशुद्धसंयमस्थानसम्बन्धित्वेन विशुद्धतरपर्यवापेक्षया अविशुद्धतरसंयमस्थानसम्बन्धित्वेनाविशुद्धतराः पर्यवा हीनास्तद्योगात्साधुरपि हीनः 'तुल्ले'त्ति तुल्यशुद्धिकपर्यवयोगात्तुल्यः 'अब्भहिय'त्ति विशुद्धतरपर्यवयोगादभ्यधिकः, 'सिय हीणे'त्ति अशुद्धसंयमस्थानवर्त्तित्वात् 'सिय तुल्ले'त्ति एकसंयमस्थानवर्त्तित्वात् 'सिय अब्भहिए'त्ति विशुद्धतरसंयमस्थानवर्त्तित्वात्, 'अणंतभागहीणे'त्ति किलासद्भावस्थापनया पुलाकस्योत्कृष्टसंयमस्थानपर्यवाग्रं दश सहस्राणि १००००, तस्य सर्वजीवानन्तकेन शतप-

रिमाणतया कल्पितेन भागे हृते शतं लब्धं १००, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राणि नवशताधिकानि ९९००, पूर्वभागलब्धं शतं तत्र प्रक्षिप्तं जातानि दश सहस्राणि, ततोऽसौ सर्वजीवानन्तकभागहारलब्धेन शतेन हीनमित्यनन्तभागहीनः, 'असंखेज्जभागहीणे व'त्ति पूर्वोक्तकल्पितपर्यायराशेर्दशसहस्रस्य १०००० लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन भागे हृते लब्धं द्विशती, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राण्यष्टौ च शतानि ९८००, पूर्वभागलब्धा च द्विशती तत्र प्रक्षिप्ता, जातानि दश सहस्राणि, ततोऽसौ लोकाकाशप्रदेशपरिमाणासङ्ख्येयकभागहारलब्धेन शतद्वयेन हीन इत्यसङ्ख्येयभागहीनः, 'संखेज्जभागहीणे व'त्ति पूर्वोक्तकल्पितपर्यायराशेर्दशसहस्रस्य १०००० उत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन भागे हृते लब्धं सहस्रं, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राणि ९००० पूर्वभागलब्धं च सहस्रं तत्र प्रक्षिप्तं जातानि दश सहस्राणि, ततोऽसावुत्कृष्टसङ्ख्येयकभागहारलब्धेन सहस्रेण हीनः, 'संखेज्जगुणहीणे व'त्ति किलैकस्य पुलाकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च सहस्रं, ततश्चोत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन गुणकारेण गुणितः साहस्रो राशिर्जायते दश सहस्राणि, स च तेनोत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन गुणकारेण हीनः—अनभ्यस्त इति सङ्ख्येयगुणहीनः, 'असंखेज्जगुणहीणे व'त्ति किलैकस्य पुलाकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च द्विशती, ततश्च लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया पञ्चाशत्परिमाणेन गुणकारेण गुणितो द्विशतिको राशिर्जायते दश सहस्राणि, स च तेन लोकाकाशप्रदेशपरिमाणासङ्ख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन गुणकारेण हीन

इत्यसङ्ख्येयगुणहीन इति, 'अनंतगुणहीणे व'त्ति किलैकस्य पुलाकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च शतं, ततश्च सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण गुणितः शतिको राशिर्जायते दश सहस्राणि, स च तेन सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण हीन इत्यनन्तगुणहीनः, एवमभ्यधिकषट्स्थानकशब्दार्थोऽप्येभिरेव भागापहारगुणकारैर्व्याख्येयः, तथाहि—एकस्य पुलाकस्य कल्पनया दश सहस्राणि चरणपर्यवमानं तदन्यस्य नवशताधिकानि नव सहस्राणि, ततो द्वितीयापेक्षया प्रथमोऽनन्तभागाभ्यधिकः, तथा यस्य नव सहस्राण्यष्टौ च शतानि पर्यवाग्रं तस्मात्प्रथमोऽसङ्ख्येयभागाधिकः, तथा यस्य नव सहस्राणि चरणपर्यवाग्रं तस्मात्प्रथमः सङ्ख्येयभागाधिकः, तथा यस्य चरणपर्यवाग्रं सहस्रमानं तदपेक्षया प्रथमः सङ्ख्येयगुणाधिकः, तथा यस्य चरणपर्यवाग्रं द्विशती तदपेक्षयाऽऽद्योऽसङ्ख्येयगुणाधिकः, तथा यस्य चरणपर्यवाग्रं शतमानं तदपेक्षयाऽऽद्योऽनन्तगुणाधिक इति ॥ 'पुलाए णं भंते ! बउसस्से'त्यादि, 'परट्ठाणसन्निगासेणं'ति विजातीययोगमाश्रित्येत्यर्थः, विजातीयश्च पुलाकस्य बकुशादिः, तत्र पुलाको बकुशाद्धीनस्तथाविधविशुद्ध्यभावात्, 'कसायकुसीलेणं समं छट्ठाणवडिए जहेव सट्ठाणे'त्ति पुलाकः पुलाकापेक्षया यथाऽभिहितस्तथा कषायकुशीलापेक्षयाऽपि वाच्य इत्यर्थः, तत्र पुलाकः कषायकुशीलाद्धीनो वा स्यात् अविशुद्धसंयमस्थानवृत्तित्वात् तुल्यो वा स्यात् समानसंयमस्थानवृत्तित्वाद् अधिको वा स्यात् शुद्धतरसंयमस्थानवृत्तित्वात्, यतः पुलाकस्य कषायकुशीलस्य च सर्वजघन्यानि संयमस्थानान्यधः, ततस्तौ युगपदसङ्ख्येयानि गच्छतस्तुल्याध्यवसानत्वात्, ततः पुलाको व्यवच्छिद्यते हीनपरिणामत्वात्, व्यवच्छिन्ने च पुलाके कषायकुशील एकक एवासङ्ख्येयानि संयमस्थानानि

गच्छति शुभतरपरिणामत्वात्, ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसङ्ख्येयानि संयमस्थानानि गच्छन्ति, ततश्च बकुशो व्यवच्छिद्यते, प्रतिसेवनाकुशीलकषायकुशीलावसङ्ख्येयानि संयमस्थानानि गच्छतस्ततश्च प्रतिसेवनाकुशीलो व्यवच्छिद्यते, कषायकुशीलस्त्वसङ्ख्येयानि संयमस्थानानि गच्छति, ततः सोऽपि व्यवच्छिद्यते, ततो निर्ग्रन्थस्नातकावेकं संयमस्थानं प्राप्नुत इति । 'नियंठस्स जहा बउसस्स'त्ति पुलाको निर्ग्रन्थादनन्तगुणहीन इत्यर्थः ॥ चिन्तितः पुलाकोऽवशेषैः सह, अथ बकुशश्चिन्त्यते—'बउसे णं'मित्यादि, बकुशः पुलाकादनन्तगुणाभ्यधिक एव विशुद्धतरपरिणामत्वात्, बकुशात्तु हीनादिर्विचित्रपरिणामत्वात्, प्रतिसेवाकषायकुशीलाभ्यामपि हीनादिरेव, निर्ग्रन्थस्नातकाभ्यां तु हीन एवेति, 'बउसवत्तव्वया भाणियव्व'त्ति प्रतिसेवाकुशीलस्तथा वाच्यो यथा बकुश इत्यर्थः, कषायकुशीलोऽपि बकुशवद्वाच्यः, केवलं पुलाकाद्बकुशोऽभ्यधिक एवोक्तः सकषायस्तु षट्स्थानपतितो वाच्यो हीनादिरित्यर्थः, तत्परिणामस्य पुलाकापेक्षया हीनसमाधिकस्वभावत्वादिति ॥ अथ पर्यवाधिकारात्तेषामेव जघन्यादिभेदानां पुलाकादिसम्बन्धिनामल्पत्वादि प्ररूपयन्नाह—'एएसि णं'मित्यादि ॥ योगद्वारे—'अयोगी वा होज्ज'त्ति इहायोगी शैलेशीकरणे । उपयोगद्वारं तु सुगमत्वान्न लिखितम् । कषायद्वारे—'सकसाई होज्ज'त्ति पुलाकस्य कषायाणां क्षयस्योपशमस्य चाभावात् । 'निसु होमाणे'इत्यादि, उपशमश्रेण्यां क्षपकश्रेण्यां वा सञ्ज्वलनक्रोधे उपशान्ते क्षीणे वा शेषेषु त्रिषु, एवं माने विगते द्वयोर्मायायां तु विगतायां सूक्ष्मसम्परायगुणस्थानके एकत्र लोभे भवेदिति ॥ लेश्याद्वारे—'

पुलाए णं भंते ! किं सलेस्से होज्जा अलेस्से होज्जा ?, गोयमा ! सलेस्से होज्जा णो अलेस्से होज्जा, जइ

सलेस्से होज्जा से णं भंते ! कतिसु लेस्सासु होज्जा ?, गोयमा ! तिसु विसुद्धलेस्सासु होज्जा, तं०—तेउलेस्साए पम्हलेस्साए सुक्कलेस्साए, एवं बउसस्सवि, एवं पडिसेवणाकुसीलेवि, कसायकुसीले पुच्छा, गोयमा ! सलेस्से होज्जा णो अलेस्से होज्जा, जइ सलेस्से होज्जा से णं भंते ! कतिसु लेसासु होज्जा ? गोयमा ! छसु लेसासु होज्जा, तं०—कण्हलेस्साए जाव सुक्कलेस्साए, नियंठे णं भंते ! पुच्छा, गोयमा ! सलेस्से होज्जा णो अलेस्से होज्जा, जइ सलेसे हो० से णं भंते ! कतिसु लेस्सासु होज्जा ?, गोयमा ! एक्काए सुक्कलेस्साए होज्जा, सिणाए पुच्छा, गोयमा ! सलेस्से वा अलेस्से वा होज्जा, जइ सलेस्से हो० से णं भंते ! कतिसु लेस्सासु होज्जा ? गोयमा ! एगाए परमसुक्कलेस्साए होज्जा १९ ॥ ( सूत्रं ७६९ ) पुलाए णं भंते ! किं वड्ढमाणपरिणामे होज्जा हीयमाणपरिणामे होज्जा अवट्ठियपरि० ?, गोयमा ! वड्ढमाणपरि० वा होज्जा हीयमाणपरिणामे वा होज्जा अवट्ठियपरिणामे वा होज्जा, एवं जाव कसायकुसीले । णियंठे णं पुच्छा, गोयमा ! वड्ढमाणपरिणामे हो० णो हीयमाणप० हो०, अवट्ठियपरिणामे वा होज्जा, एवं सिणाएवि ॥ पुलाए णं भंते ! केवइयं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्को० अंतोमु०, केवतियं कालं हीयमाणपरिणामे होज्जा ?, गोयमा ! जह० एक्कं समयं उक्को० अंतोमु०, केवइयं कालं अवट्ठियपरिणामे होज्जा ?, गोयमा ! जहन्ने० एक्कं समयं उक्कोसेणं सत्त समया, एवं जाव कसायकुसीले । नियंठे णं भंते ! केवतियं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जहन्ने० अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं, केवतियं कालं अवट्ठियपरिणामे होज्जा ?,

गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं। सिणाए णं भंते ! केवइयं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं, केवइयं कालं अवट्ठियपरिणामे होज्जा ?, गोयमा ! जह० अंतोमु० उक्कोसे० देसूणा पुव्वकोडी २० ॥ ( सूत्रं ७७० )

'तिसु विसुद्धलेसासु'त्ति भावलेश्यापेक्षया प्रशस्तासु तिसृषु पुलाकादयस्त्रयो भवन्ति, कषायकुशीलस्तु षट्स्वपि, सकषायमेव आश्रित्य 'पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए' [ पूर्वप्रतिपन्नः पुनरन्यतरस्यां लेश्यायां ] इत्येतदुक्तमिति संभाव्यते, 'एक्काए परमसुक्काए'त्ति शुक्लध्यानतृतीयभेदावसरे या लेश्या सा परमशुक्लाऽन्यदा तु शुक्लैव, साऽपीतरजीवशुक्ललेश्यापेक्षया स्नातकस्य परमशुक्लेति ॥ परिणामद्वारे—'वड्ढमाणपरिणामे'इत्यादि, तत्र च वर्द्धमानः—शुद्धेरुत्कर्षं गच्छन् हीयमानस्त्वपकर्षं गच्छन् अवस्थितस्तु स्थिर इति, तत्र निर्ग्रन्थो हीयमानपरिणामो न भवति, तस्य परिणामहानौ कषायकुशीलव्यपदेशात्, स्नातकस्तु हानिकारणाभावान्न हीयमानपरिणामः स्यादिति ॥ परिणामाधिकारादेवेदमाह—'पुलाए ण'मित्यादि, तत्र पुलाको वर्द्धमानपरिणामकाले कषायविशेषेण बाधिते तस्मिंस्तस्यैकादिकं समयमनुभवतीत्यत उच्यते जघन्येनैकं समयमिति 'उक्कोसेणं अंतोमुहुत्तं'ति एतत्स्वभावत्वाद्वर्द्धमानपरिणामस्येति । एवं बकुशप्रतिसेवाकुशीलकषायकुशीलेष्वपि, नवरं बकुशादीनां जघन्यत एकसमयता मरणादपीष्टा, न पुनः पुलाकस्य, पुलाकत्वे मरणाभावात्, स हि मरणकाले कषायकुशीलत्वादिना परिणमति, यच्च प्राक् पुलाकस्य कालगमनं तद्भूतभावापेक्षयेति, निर्ग्रन्थो जघन्येनोत्कर्षेण चान्तर्मुहूर्त्तं वर्द्धमानपरिणामः स्यात्, केवलज्ञानोत्पत्तौ परिणामान्तरभावात्, अवस्थितपरिणामः पुन-

निर्ग्रन्थस्य जघन्यत एकं समयं मरणात्स्यादिति । 'सिणाए णं भंते !' इत्यादि, स्नातको जघन्येतराभ्यामन्तर्मुहूर्त्तं वर्द्धमानपरिणामः, शैलेश्यां तस्यास्तत्प्रमाणत्वात्, अवस्थितपरिणामकालोऽपि जघन्यतस्तस्यान्तर्मुहूर्त्तं, कथम् ?, उच्यते, यः स केवलज्ञानोत्पादानन्तरमन्तर्मुहूर्त्तमवस्थितपरिणामो भूत्वा शैलेशीं प्रतिपद्यते तदपेक्षयेति, 'उक्कोसेणं देसूणा पुव्वकोडी'त्ति पूर्वकोट्यायुषः पुरुषस्य जन्मतो जघन्येन नवसु वर्षेष्वतिगतेषु केवलज्ञानमुत्पद्यते ततोऽसौ तदूनां पूर्वकोटीमवस्थितपरिणामः शैलेशीं यावद्विहरति, शैलेश्यां च वर्द्धमानपरिणामः स्यादित्येवं देशोनामिति ॥ बन्धद्वारे—

पुलाए णं भंते ! कति कम्मपगडीओ वंधति ?, गोयमा ! आउयवज्जाओ सत्त कम्मप्पगडीओ बंधति । बउसे पुच्छा, गोयमा ! सत्तविहबंधए वा अट्ठविहबंधए वा, सत्त बंधमाणे आउयवज्जाओ सत्त कम्मप्पगडीओ बंधति, अट्ठ बंधमाणे पडिपुन्नाओ अट्ठ कम्मप्पगडीओ बंधइ, एवं पडिसेवणाकुसीलेवि, कसायकुसीले पुच्छा, गोयमा ! सत्तविहबंधए वा अट्ठविहबंधए वा छव्विहबंधए वा, सत्त बंधमाणे आउयवज्जाओ सत्त कम्मप्पगडीओ बंधइ, अट्ठ बंधमाणे पडिपुन्नाओ अट्ठ कम्मप्पगडीओ बंधइ, छ बंधमाणे आउयमोहणिज्जवज्जाओ छक्कम्मप्पगडीओ बंधइ । नियंठे णं पुच्छा, गोयमा ! एगं वेयणिज्जं कम्मं बंधइ । सिणाए पुच्छा, गोयमा ! एगविहबंधए वा अबंधए वा, एगं बंधमाणे एगं वेयणिज्जं कम्मं बंधइ २१ ॥ (सूत्रं ७७१) पुलाए णं भंते ! कति कम्मप्पगडीओ वेदेइ ?, गोयमा ! नियमं अट्ठ कम्मप्पगडीओ वेदेइ, एवं जाव कसायकुसीले, नियंठे णं पुच्छा, गोयमा ! मोहणिज्जवज्जाओ सत्त कम्मप्पगडीओ वेदेइ । सिणाए णं पुच्छा, गोयमा ! वेय-

णिज्जआउयनामगोयाओ चत्तारि कम्मप्पगडीओ वेदेइ २२ ॥ ( सूत्रं ७७२ ) पुलाए णं भंते ! कति कम्मप्पगडीओ उदीरेति ?, गोयमा ! आउयवेयणिज्जवज्जाओ छ कम्मप्पगडीओ उदीरेइ । बउसे पुच्छा, गोयमा ! सत्तविहउदीरए वा अट्ठविहउदीरए वा छव्विहउदीरए वा, सत्त उदीरेमाणे आउयवज्जाओ सत्त कम्मप्पगडीओ उदीरेति, अट्ठ उदीरेमाणे पडिपुन्नाओ अट्ठ कम्मप्पगडीओ उदीरेति, छ उदीरेमाणे आउयवेयणिज्जवज्जाओ छ कम्मपगडीओ उदीरेति, पडिसेवणाकुसीले एवं चेव, कसायकुसीले णं पुच्छा, गो० ! सत्तविहउदीरए वा अट्ठविहउदीरए वा छव्विहउदीरए वा पंचविहउदीरए वा, सत्त उदीरेमाणे आउयवज्जाओ सत्त कम्मप्पगडीओ उदीरेति, अट्ठ उदीरेमाणे पडिपुन्नाओ अट्ठ कम्मप्पगडीओ उदीरेति, छ उदीरेमाणे आउयवेयणिज्जवज्जाओ छ कम्मप्पगडीओ उदीरेति, पंच उदीरेमाणे आउयवेयणिज्जमोहणिज्जवज्जाओ पंच कम्मप्पगडीओ उदीरेति । नियंठे णं पुच्छा, गोयमा ! पंचविहउदीरए वा दुविहउदीरए वा, पंच उदीरेमाणे आउयवेयणिज्जमोहणिज्जवज्जाओ पंच कम्मप्पगडीओ उदीरेति, दो उदीरेमाणे णामं च गोयं च उदीरेति । सिणाए पुच्छा, गोयमा ! दुविहउदीरए वा अणुदीरए वा, दो उदीरेमाणे णामं च गोयं च उदीरेति २३ ॥ ( सूत्रं ७७३ )

'आउयवज्जाओ'त्ति पुलाकस्यायुर्बन्धो नास्ति, तद्बन्धाध्यवसायस्थानानां तस्याभावादिति । 'बउसे' इत्यादि, त्रिभागाद्यवशेषायुषो हि जीवा आयुर्बध्नन्तीति त्रिभागद्वयादौ तन्न बध्नन्तीतिकृत्वा बकुशादयः सप्तानामष्टानां वा कर्मणां बन्धका भवन्तीति, 'छव्विहं बंधेमाणा' इत्यादि, कषायकुशीलो हि सूक्ष्मसम्परायत्वे आयुर्न बध्नाति, अप्रमत्तान्तत्वात्

द्वन्धस्य, मोहनीयं च बादरकषायोदयाभावान्न बध्नातीति शेषाः षडेवेति। 'एगं वेयणिज्जं'ति निर्ग्रन्थो वेदनीयमेव बध्नाति, बन्धहेतुषु योगानामेव सद्भावात्, 'अबंधए व'त्ति अयोगी बन्धहेतूनां सर्वेषामभावादबन्धक एवेति ॥ वेदनद्वारे—'मोहणिज्जवज्जाओ'त्ति निर्ग्रन्थो हि मोहनीयं न वेदयति, तस्योपशान्तत्वात् क्षीणत्वाद्वा, स्नातकस्य तु घातिकर्म्मणां क्षीणत्वाद्वेदनीयादीनामेव वेदनमत उच्यते—'वेयणिज्जे'त्यादि ॥ उदीरणाद्वारे—'आउयवेयणिज्जवज्जाओ'त्ति, अयमर्थः—पुलाक आयुर्वेदनीयप्रकृतीर्नोदीरयति तथाविधाध्यवसायस्थानाभावात्, किन्तु पूर्वं ते उदीर्य्य पुलाकतां गच्छति, एवमुत्तरत्रापि यो याः प्रकृतीर्नोदीरयति स ताः पूर्वमुदीर्य बकुशादितां प्राप्नोति, स्नातकः सयोग्यवस्थायां तु नामगोत्रयोरेवोदीरकः, आयुर्वेदनीये तु पूर्वोदीर्णे एव, अयोग्यवस्थायां त्वनुदीरक एवेति ॥ 'उवसंपजहन्न'त्तिद्वारं, तत्रोपसम्पत् उपसम्पत्तिः—प्राप्तिः 'जहन्न'त्ति हानं—त्यागः उपसम्पच्च हानं चोपसम्पद्धानं—किं पुलाकत्वादि त्यक्त्वा किं सकषायत्वादिकमुपसम्पद्यते इत्यर्थः, तत्र—

पुलाए णं भंते! पुलायत्तं जहमाणे किं जहति किं उवसंपज्जति?, गोयमा! पुलायत्तं जहति कसायकुसीलं वा अस्संजमं वा उवसंपज्जति, बउसे णं भंते! बउसत्तं जहमाणे किं जहति किं उवसंपज्जति?, गोयमा! बउसत्तं जहति पडिसेवणाकुसीलं वा कसायकुसीलं वा असंजमं वा संजमासंजमं वा उवसंपज्जति, पडिसेवणाकुसीले णं भंते! पडि० पुच्छा, गोयमा! पडिसेवणाकुसीलत्तं जहति बउसं वा कसायकुसीलं वा अस्संजमं वा संयमासंयमं वा उवसंपज्जति, कसायकुसीले पुच्छा, गोयमा! कसायकुसीलत्तं जहति पुलायं

वा बउसं वा पडिसेवणाकुसीलं वा णियंठं वा अस्संजमं वा संयमासंयमं वा उवसंपज्जति, णियंठे पुच्छा, गोयमा ! नियंठत्तं जहति कसायकुसीलं वा सिणायं वा अस्संजमं वा उवसंपज्जति। सिणाए पुच्छा, गोयमा! सिणायत्तं जहति सिद्धिगतिं उवसंपज्जति २४ ॥ ( सूत्रं ७७४ ) पुलाए णं भंते ! किं सन्नोवउत्ते होज्जा नोसन्नोवउत्ते होज्जा ?, गोयमा ! णोसन्नोवउत्ते वा होज्जा सन्नोवउत्ते वा होज्जा । बउसे णं भंते ! पुच्छा, गोयमा ! सन्नोवउत्ते वा होज्जा नोसन्नोवउत्ते वा होज्जा, एवं पडिसेवणाकुसीलेवि, एवं कसायकुसीलेवि, नियंठे सिणाए य जहा पुलाए २५॥(सूत्रं ७७५) पुलाए णं भंते ! किं आहारए होज्जा अणाहारए होज्जा?, गोयमा! आहारए होज्जा णो अणाहारए होज्जा, एवं जाव नियंठे। सिणाए पुच्छा, गोयमा! आहारए वा होज्जा अणाहारए वा होज्जा २६ ॥ ( सूत्रं ७७६ )

'पुलाए ण'मित्यादि, पुलाकः पुलाकत्वं त्यक्त्वा संयतः कषायकुशील एव भवति, तत्सदृशसंयमस्थानसद्भावात्, एवं यस्य यत्सदृशानि संयमस्थानानि सन्ति स तद्भावमुपसम्पद्यते मुक्त्वा कषायकुशीलादीन्, कषायकुशीलो हि विद्यमानस्वसदृशसंयमस्थानकान् पुलाकादिभावानुपसम्पद्यते, अविद्यमानसमानसंयमस्थानकं च निर्ग्रन्थभावं, निर्ग्रन्थस्तु कषायित्वं वा स्नातकत्वं वा याति, स्नातकस्तु सिद्ध्यत्येवेति । निर्ग्रन्थसूत्रे 'कसायकुसीलं वा सिणायं वा' इह भावप्रत्ययलोपात् कषायकुशीलत्वमित्यादि दृश्यं, एवं पूर्वसूत्रेष्वपि, तत्रोपशमनिर्ग्रन्थः श्रेणीतः प्रच्यवमानः सकषायो भवति, श्रेणीमस्तके तु मृतोऽसौ देवत्वेनोत्पन्नोऽसंयतो भवति नो संयतासंयतो, देवत्वे तदभावात्, यद्यपि च श्रेणीपतितोऽसौ संयतासंयतोऽपि

भवति तथाऽपि नासाविहोक्तः, अनन्तरं तद्भावादिति ॥ सञ्ज्ञाद्वारे—'सन्नोवउत्ते'त्ति, इह सञ्ज्ञा—आहारादिसञ्ज्ञा तत्रोपयुक्तः—कथञ्चिदाहाराद्यभिष्वङ्गवान् सञ्ज्ञोपयुक्तः, नोसञ्ज्ञोपयुक्तस्त्वाहाराद्युपभोगेऽपि तत्रानभिष्वक्तः, तत्र पुलाक-निर्ग्रन्थस्नातका नोसञ्ज्ञोपयुक्ता भवन्ति, आहारादिष्वनभिष्वङ्गात्, ननु निर्ग्रन्थस्नातकावेवं युक्तौ वीतरागत्वात्, न तु पुलाकः सरागत्वात्, नैवं, न हि सरागत्वे निरभिष्वङ्गता सर्वथा नास्तीति वक्तुं शक्यते, बकुशादीनां सरागत्वेऽपि निःसङ्गताया अपि प्रतिपादितत्वात्, चूर्णिकारस्त्वाह—'नोसन्ना नाणसन्न'त्ति, तत्र च पुलाकनिर्ग्रन्थस्नातकाः नोसञ्ज्ञोपयुक्ताः, ज्ञानप्रधानोपयोगवन्तो न पुनराहारादिसञ्ज्ञोपयुक्ताः, बकुशादयस्तूभयथाऽपि, तथाविधसंयमस्थानसद्भावादिति ॥ आहारकद्वारे—'आहारए होज्ज'त्ति पुलाकादेर्निर्ग्रन्थान्तस्य विग्रहगत्यादीनामनाहारकत्वकारणानामभावादाहारकत्वमेव। 'सिणाए' इत्यादि, स्नातकः केवलिसमुद्घाते तृतीयचतुर्थपञ्चमसमयेषु अयोग्यवस्थायां चानाहारकः स्यात्, ततोऽन्यत्र पुनराहारक इति ॥ भवद्वारे—

पुलाए णं भंते ! कति भवग्गहणाइं होज्जा ?, गोयमा ! जहन्नेणं एक्कं उक्कोसेणं तिन्नि। बउसे पुच्छा, गोयमा ! जह० एक्कं उक्कोसेणं अट्ठ, एवं पडिसेवणाकुसीलेवि, एवं कसायकुसीलेवि, नियंठे जहा पुलाए। सिणाए पुच्छा, गोयमा ! एक्कं २७॥ (सूत्रं ७७७) पुलागस्स णं भंते ! एगभवग्गहणीया केवतिया आगरिसा प० ?, गोयमा ! जहन्नेणं एक्को उक्कोसेणं तिन्नि। बउसस्स णं पुच्छा, गोयमा ! जहन्नेणं एक्को उक्कोसेणं सतग्गसो, एवं पडिसेवणाकुसीलेवि, कसायकुसीलेवि। णियंठस्स णं पुच्छा, गोयमा ! जहन्नेणं एक्को उक्कोसेणं

दोन्नि। सिणायस्स णं पुच्छा, गोयमा ! एक्को॥ पुलागस्स णं भंते ! नाणाभवग्गहणिया केवतिया आगरिसा पन्नत्ता ?, गोयमा ! जहन्नेणं दोन्नि उक्कोसे० सत्त। बउसस्स पुच्छा, गोयमा ! जहन्नेणं दोन्नि उक्कोसेणं सहस्सग्गसो, एवं जाव कसायकुसीलस्स। नियंठस्स णं पुच्छा, गोयमा ! जहन्नेणं दोन्नि उक्कोसेणं पंच। सिणायस्स पुच्छा, गोयमा ! नत्थि एक्कोवि २८॥ ( सूत्रं ७७८)

'पुलाए ण'मित्यादि, पुलाको जघन्यत एकस्मिन् भवग्रहणे भूत्वा कषायकुशीलत्वादिकं संयतत्वान्तरमेकशोऽनेकशो वा तत्रैव भवे भवान्तरे वाऽवाप्य सिद्ध्यति, उत्कृष्टतस्तु देवादिभवान्तरितान् त्रीन् भवान् पुलाकत्वमवाप्नोति। 'बउसे'त्यादि, इह कश्चिदेकत्र भवे बकुशत्वमवाप्य कषायकुशीलत्वादि च सिद्ध्यति, कश्चित्त्वेकत्रैव बकुशत्वमवाप्य भवान्तरे तदनवाप्यैव सिद्ध्यतीत्यत उच्यते—'जहन्नेणं एक्कं भवग्गहणं'ति, 'उक्कोसेणं अट्ठ'त्ति किलाष्टौ भवग्रहणानि उत्कृष्टतया चरणमात्रमवाप्यते, तत्र कश्चित्तान्यष्टौ बकुशतया पर्यन्तिमभवे सकषायत्वादियुक्तया, कश्चित्तु प्रतिभवं प्रतिसेवाकुशीलत्वादियुक्तया पूरयतीत्यत उच्यते—'उक्कोसेणं अट्ठ'त्ति॥ अथाकर्षद्वारं, तत्राकर्षणमाकर्षः—चारित्रस्य प्राप्तिरिति। 'एगभवग्गहणिय'त्ति एकभवग्रहणे ये भवन्ति 'सयग्गसो'त्ति शतपरिमाणेनेत्यर्थः, शतपृथक्त्वमिति भावना, उक्तञ्च—"तिण्ह सहस्सपुहुत्तं सयपुहुत्तं च होति विरईए।"त्ति [ त्रयाणां सहस्रपृथक्त्वं विरतेः पुनः शतपृथक्त्वं भवति॥ ] 'उक्कोसेणं दोन्नि'त्ति एकत्र भवे वारद्वयमुपश्रेणिकरणादुपशमनिर्ग्रन्थत्वस्य द्वावाकर्षाविति॥ 'पुलागस्से'त्यादौ 'नाणाभवग्गहणिय'त्ति नानाप्रकारेषु भवग्रहणेषु ये भवन्तीत्यर्थः, 'जहन्नेणं दोन्नि'त्ति एक आकर्ष एकत्र भवे

द्वितीयोऽन्यत्रेत्येवमनेकत्र भवे आकर्षौ स्यातां, 'उक्कोसेणं सत्त'त्ति पुलाकत्वमुत्कर्षतस्त्रिषु भवेषु स्यादेकत्र च तदुत्कर्षतो वारत्रयं भवति ततश्च प्रथमभवे एक आकर्षोऽन्यत्र च भवद्वये त्रयस्त्रय इत्यादिभिर्विकल्पैः सप्त ते भवन्तीति । 'बउसे'-त्यादि, 'उक्कोसेणं सहस्सग्गसो'त्ति बकुशस्याष्टौ भवग्रहणानि उत्कर्षत उक्तानि, एकत्र च भवग्रहणे उत्कर्षत आकर्षाणां शतपृथक्त्वमुक्तं, तत्र च यदाऽष्टास्वपि भवग्रहणेषूत्कर्षतो नव प्रत्येकमाकर्षशतानि तदा नवानां शतानामष्टाभिर्गुणनात्सप्त सहस्राणि शतद्वयाधिकानि भवन्तीति । 'नियंठस्से'त्यादौ 'उक्कोसेणं पंच'त्ति निर्ग्रन्थस्योत्कर्षतस्त्रीणि भवग्रहणान्युक्तानि, एकत्र च भवे द्वावाकर्षावित्येवमेकत्र द्वावन्यत्र च द्वावपरत्र चैकं क्षपकनिर्ग्रन्थत्वाकर्षं कृत्वा सिद्ध्यतीति कृत्वोच्यते पञ्चेति ॥ कालद्वारे—

पुलाए णं भंते ! कालओ केवचिरं होइ ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं । बउस पुच्छा, गोयमा ! जह० एक्कं समयं उक्कोसेणं देसूणा पुव्वकोडी, एवं पडिसेवणाकुसीलेवि कसायकुसीलेवि । नियंठे पुच्छा, गोयमा ! जह० एक्कं समयं उक्कोसेणं अंतोमुहुत्तं। सिणाए पुच्छा, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं देसूणा पुव्वकोडी ॥ पुलाया णं भंते ! कालओ केवचिरं होइ ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं । बउसे णं पुच्छा, गोयमा ! सव्वद्धं, एवं जाव कसायकुसीला, नियंठा जहा पुलागा, सिणाया जहा बउसा २९ ॥ ( सूत्रं ७७९ ) पुलागस्स णं भंते ! केवतियं कालं अंतरं होइ ?, गोयमा ! जह० अंतोमु० उक्को० अणंतं कालं अणंताओ ओसप्पिणिउस्सप्पिणीओ कालओ खेत्तओ अवड्ढपोग्गलपरियट्टं

देसूणं, एवं जाव नियंठस्स। सिणायस्स पुच्छा, गोयमा! नत्थि अंतरं॥ पुलायाणं भंते! केवतियं कालं अंतरं होइ?, गोयमा! जह० एक्कं समयं उक्को० संखेज्जाइं वासाइं। वउसाणं भंते! पुच्छा, गोयमा! नत्थि अंतरं, एवं जाव कसायकुसीलाणं। नियंठाणं पुच्छा, गोयमा! जह० एक्कं स० उक्कोसेणं छम्मासा, सिणायाणं जहा वउसाणं ३०॥ (सूत्रं ७८०)

'पुलाए ण'मित्यादौ, 'जहन्नेणं अंतोमुहुत्तं'ति पुलाकत्वं प्रतिपन्नोऽन्तर्मुहूर्त्तापरिपूर्त्तौ पुलाको न म्रियते नापि प्रतिपततीतिकृत्वा जघन्यतोऽन्तर्मुहूर्त्तमित्युच्यते, उत्कर्षतोऽप्यन्तर्मुहूर्त्तमेतत्प्रमाणत्वादेतत्स्वभावस्येति। 'वउसे'इत्यादि, 'जहन्नेणमेक्कं समयं'ति वकुशस्य चरणप्रतिपत्त्यनन्तरसमय एव मरणसम्भवादिति, 'उक्कोसेणं देसूणा पुव्वकोडि'त्ति पूर्वकोट्यायुषोऽष्टवर्षान्ते चरणप्रतिपत्ताविति। 'नियंठे ण'मित्यादौ 'जहन्नेणं एक्कं समयं'ति उपशान्तमोहस्य प्रथमसमयसमनन्तरमेव मरणसम्भवात्, 'उक्कोसेणं अंतोमुहुत्तं'ति निर्ग्रन्थाद्धाया एतत्प्रमाणत्वादिति। 'सिणाये'त्यादौ 'जहन्नेणं अंतोमुहुत्तं'ति आयुष्कान्तिमेऽन्तर्मुहूर्त्ते केवलोत्पत्तावन्तर्मुहूर्त्तं जघन्यतः स्नातककालः स्यादिति॥ पुलाकादीनामेकत्वेन कालमानमुक्तं अथ पृथक्त्वेनाह—'पुलाया ण'मित्यादि, 'जहन्नेणं एक्कं समयं'ति, कथम्?, एकस्य पुलाकस्य योऽन्तर्मुहूर्त्तकालस्तस्यान्त्यसमयेऽन्यः पुलाकत्वं प्रतिपन्न इत्येवं जघन्यत्वविवक्षायां द्वयोः पुलाकयोरेकत्र समये सद्भावो द्वित्वे च जघन्यं पृथक्त्वं भवतीति। 'उक्कोसेणं अंतोमुहुत्तं'ति यद्यपि पुलाका उत्कर्षत एकदा सहस्रपृथक्त्वपरिमाणाः प्राप्यन्ते तथाऽप्यन्तर्मुहूर्त्तत्वात्तदद्धाया बहुत्वेऽपि तेषामन्तर्मुहूर्त्तमेव तत्कालः, केवलं बहूनां स्थितौ यदन्तर्मुहूर्त्तं तदेकपुलाकस्थि-

त्यन्तर्मुहूर्त्तान्महत्तरमित्यवसेयं, बकुशादीनां तु स्थितिकालः सर्वाद्धा, प्रत्येकं तेषां बहुस्थितिकत्वादिति । 'नियंठा जहा पुलाय'त्ति ते चैवं–जघन्यत एकं समयमुत्कर्षतोऽन्तर्मुहूर्त्तमिति ॥ अन्तरद्वारे—'पुलागस्स ण'मित्यादि, तत्र पुलाकः पुलाको भूत्वा कियता कालेन पुलाकत्वमापद्यते ?, उच्यते, जघन्यतोऽन्तर्मुहूर्त्तं स्थित्वा पुनः पुलाक एव भवति, उत्कर्षतः पुनरनन्तेन कालेन पुलाकत्वमाप्नोति, कालानन्त्यमेव कालतो नियमयन्नाह—'अणंताओ' इत्यादि, इदमेव क्षेत्रतोऽपि नियमयन्नाह–'खेत्तओ' इति, स चानन्तः कालः क्षेत्रतो मीयमानः किंमानः ? इत्याह–'अवड्ढ'मित्यादि, तत्र पुद्गलपरावर्त्त एवं श्रूयते—किल केनापि प्राणिना प्रतिप्रदेशं म्रियमाणेन मरणैर्यावता कालेन लोकः समस्तोऽपि व्याप्यते तावता क्षेत्रतः पुद्गलपरावर्त्तो भवति, स च परिपूर्णोऽपि स्यादत आह–'अपार्द्धम्' अपगतार्द्धमर्द्धमात्रमित्यर्थः, अपार्द्धोऽप्यर्द्धतः पूर्णः स्यादत आह–'देसूणं'ति देशेन–भागेन न्यूनमिति। 'सिणायस्स नत्थि अंतरं'ति प्रतिपाताभावात् ॥ एकत्वापेक्षया पुलाकत्वादीनामन्तरमुक्तमथ पृथक्त्वापेक्षया तदेवाह–'पुलायाणं'मित्यादि, व्यक्तम् ॥ समुद्घातद्वारे—

पुलागस्स णं भंते ! कति समुग्घाया पन्नत्ता ?, गोयमा ! तिन्नि समुग्घाया प०, तं–वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए, बउसस्स णं भंते ! पुच्छा, गोयमा ! पंच समुग्घाया प०, तं०–वेयणासमुग्घाए जाव तेयासमुग्घाए, एवं पडिसेवणाकुसीलेवि, कसायकुसीलस्स पुच्छा, गोयमा ! छ समुग्घाया प०, तं०–वेयणासमुग्घाए जाव आहारसमुग्घाए, नियंठस्स णं पुच्छा, गोयमा ! नत्थि एक्कोवि, सिणायस्स पुच्छा, गोयमा ! एगे केवलिसमुग्घाए प० ३१ ॥ ( सूत्रं ७८१ ) पुलाए णं भंते ! लोगस्स किं संखेज्जइभागे होज्जा ?

असंखेज्जइभागे होज्जा २ संखेज्जेसु भागेसु होज्जा ३ असंखेज्जेसु भागेसु होज्जा ४ सबलोए होज्जा ५?, गोयमा! णो संखेज्जइभागे होज्जा असंखेज्जइभागे होज्जा णो संखेज्जेसु भागेसु होज्जा णो असंखेज्जेसु भागेसु होज्जा णो सबलोए होज्जा, एवं जाव नियंठे। सिणाए णं पुच्छा, गोयमा! णो संखेज्जइभागे होज्जा असंखेज्जइभागे होज्जा णो संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा सबलोए वा होज्जा ३२॥ (सूत्रं ७८२) पुलाए णं भंते! लोगस्स किं संखेज्जइभागं फुसइ असंखेज्जइभागं फुसइ?, एवं जहा ओगाहणा भणिया तहा फुसणावि भाणियबा जाव सिणाए ३३॥ (सूत्रं ७८३) पुलाए णं भंते! कतरंमि भावे होज्जा?, गो०! खओवसमिए भावे होज्जा, एवं जाव कसायकुसीले। नियंठे पुच्छा, गोयमा! उवसमिए वा भावे होज्जा खइए वा भावे होज्जा। सिणाए पुच्छा, गो०! खाइए भावे होज्जा [1]३४॥ (सूत्रं ७८४)

'कसायसमुग्घाए'त्ति चारित्रवतां संज्वलनकषायोदयसम्भवेन कषायसमुद्घातो भवतीति, 'मारणंतियसमुग्घाए'त्ति, इह पुलाकस्य मरणाभावेऽपि मारणान्तिकसमुद्घातो न विरुद्धः समुद्घातान्निवृत्तस्य कषायकुशीलत्वादिपरिणामे सति मरणभावात्, 'नियंठस्स नत्थि एक्कोवि'त्ति तथास्वभावत्वादिति॥ अथ क्षेत्रद्वारं, तत्र क्षेत्रं—अवगाहनाक्षेत्रं, तत्र 'असंखेज्जइभागे होज्ज'त्ति पुलाकशरीरस्य लोकासङ्ख्येयभागमात्रावगाहित्वात्। 'सिणाए ण'मित्यादि, 'असंखेज्जइभागे होज्ज'त्ति शरीरस्थो दण्डकपाटकरणकाले च लोकासङ्ख्येयभागवृत्तिः केवलिशरीरादीनां तावन्मात्रत्वात्, 'असंखेज्जेसु भागेसु

१ पुलाकत्वादिनिबन्धनाना चारित्रमोहक्षयोपशमादीनामेव विवक्षणात् नाौदयिकपारिणामिकायनुक्तौ क्षतिः।

होज्ज'त्ति मथिकरणकाले वहोर्लोकस्य व्याप्तत्वेन स्तोकस्य चाव्याप्ततयोक्तत्वाल्लोकस्यासङ्ख्येयेषु भागेषु स्नातको वर्त्तते, लोकापूरणे च सर्वलोके वर्त्तत इति ॥ स्पर्शनाद्वारे—स्पर्शना क्षेत्रवन्नवरं क्षेत्रं अवगाढमात्रं स्पर्शना त्ववगाढस्य तत्पार्श्ववर्तिनश्चेति विशेषः ॥ भावद्वारं च व्यक्तमेव ॥ परिमाणद्वारे च—

पुलाया णं भंते ! एगसमएणं केवतिया होज्जा ? गोयमा ! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सयपुहत्तं, पुव्वपडिवन्नए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सहस्सपुहत्तं । वउसा णं भंते ! एगसमएणं पुच्छा, गोयमा ! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सयपुहत्तं, पुव्वपडिवन्नए पडुच्च जहन्नेणं कोडिसयपुहुत्तं उक्कोसेणवि कोडिसयपुहुत्तं, एवं पडिसेवणाकुसीलेवि । कसायकुसीलाणं पुच्छा, गोयमा ! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सहस्सपुहुत्तं, पुव्वपडिवन्नए पडुच्च जहन्नेणं कोडिसहस्सपुहुत्तं उक्कोसेणवि

१ यद्यपि भाषापुद्गलैर्लोकव्याप्तिर्भाषाभागैः संख्येयैः संख्येयेषु लोकभागेषु अस्ति ततः अत्रापि समुद्घाते स्नातकस्य संख्येयानां भागानां पूरणं स्यात् परं तत्र वासकत्वात् पूर्णत्वाच्च वास्यद्रव्यैर्लोकस्य युक्तं लोकपूरणादर्वाग् लोकसंख्येयभागानां पूरणं न चैवमत्र वासकत्वं वास्यद्रव्यपूर्णत्वं वा तेनासंख्येयेषु सर्वलोके चेति भङ्गद्वयमेव, न चात्र मथिषट्कं, मथिकाले चासंख्येया एव भागा व्याप्यन्ते ततः, अत एव जैनसमुद्घातवत् भाषाद्रव्येण लोकापूर्त्तिर्नेष्टा ।

कोडिसहस्सपुहुत्तं। नियंठाणं पुच्छा, गोयमा! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एको वा दो वा तिन्नि वा उक्कोसेणं बावट्ठं सतं, अट्ठसयं खवगाणं चउप्पन्नं उवसामगाणं, पुव्वपडिवन्नए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एको वा दो वा तिन्नि वा उक्कोसेणं सयपुहुत्तं। सिणायाणं पुच्छा, गोयमा! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एको वा दो वा तिन्नि वा उक्कोसेणं अट्ठसतं, पुव्वपडिवन्नए पडुच्च जहन्नेणं कोडिपुहुत्तं उक्कोसेणवि कोडिपुहुत्तं॥ एएसि णं भंते! पुलागबकुसपडिसेवणाकुसीलकसायकुसीलनियंठसिणायाणं कयरे २ जाव विसेसाहिया वा?, गोयमा! सव्वत्थोवा नियंठा पुलागा संखेज्जगुणा सिणाया संखेज्जगुणा बउसा संखेज्जगुणा पडिसेवणाकुसीला संखेज्जगुणा कसायकुसीला संखेज्जगुणा। सेवं भंते! सेवं भंतेति जाव विहरति॥ (सूत्रं ७८५)॥ पंचवीसमसयस्स छट्ठो उद्देसओ सम्मत्तो॥ २५। ६॥

'पुलाया ण' मित्यादि, ननु सर्वसंयतानां कोटीसहस्रपृथक्त्वं श्रूयते, इह तु केवलानामेव कषायकुशीलानां तदुक्तं ततः पुलाकादिमानानि ततोऽतिरिच्यन्त इति कथं न विरोधः?, उच्यते, कषायकुशीलानां यत् कोटीसहस्रपृथक्त्वं तद्द्वित्रादिकोटीसहस्ररूपं कल्पयित्वा पुलाकबकुशादिसङ्ख्या तत्र प्रवेश्यते ततः समस्तसंयतमानं यदुक्तं तन्नातिरिच्यत इति॥ अल्पबहुत्वद्वारे—'सव्वत्थोवा नियंठ'त्ति तेषामुत्कर्षतोऽपि शतपृथक्त्वसङ्ख्यत्वात्, 'पुलागा संखेज्जगुण'त्ति तेषामुत्कर्षतः सहस्रपृथक्त्वसङ्ख्यत्वात्, 'सिणाया संखेज्जगुण'त्ति तेषामुत्कर्षतः कोटीपृथक्त्वमानत्वात्, 'बउसा संखेज्जगुण'त्ति तेषा-

मुत्कर्षतः कोटीशतपृथक्त्वमानत्वात्, 'पडिसेवणाकुसीला संखेज्जगुण'त्ति, कथमेतत् तेषामप्युत्कर्षतः कोटीशतपृथक्त्वमानतयोक्तत्वात् ?, सत्यं, किन्तु बकुशानां यत्कोटीशतपृथक्त्वं तद्द्वित्र्यादिकोटीशतमानं प्रतिसेविनां तु कोटीशतपृथक्त्वं चतुःषट्कोटीशतमानमित्ति न विरोधः, कषायिणां तु सङ्ख्यातगुणत्वं व्यक्तमेवोत्कर्षतः कोटीसहस्रपृथक्त्वमानतया तेषामुक्तत्वादिति ॥ ॥ पञ्चविंशतितमशते षष्ठः ॥ २५-६ ॥

षष्ठोद्देशके संयतानां स्वरूपमुक्तं, सप्तमेऽपि तदेवोच्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्-'कइ णं भंते !' इत्यादि, इहापि प्रज्ञापनादीनि द्वाराणि वाच्यानि, तत्र प्रज्ञापनाद्वारमधिकृत्योक्तम्-

कति णं भंते ! संजया पन्नत्ता ?, गोयमा ! पंच संजया पं०, तं०—सामाइयसंजए छेदोवट्ठावणियसंजए परिहारविसुद्धियसंजए सुहुमसंपरायसंजए अहक्खायसंजए, सामाइयसंजए णं भंते ! कतिविहे पन्नत्ते ?, गोयमा ! दुविहे पन्नत्ते, तंजहा—इत्तरिए य आवकहिए य, छेओवट्ठावणियसंजए णं पुच्छा, गोयमा ! दुविहे प०, तं०—सातियारे य निरतियारे य, परिहारविसुद्धियसंजए पुच्छा, गोयमा ! दुविहे पं०, तं०—णिव्विसमाणए य निव्विट्ठकाइए य, सुहुमसंपरागपुच्छा, गोयमा ! दुविहे पं०, तं०—संकिलिस्समाणए य विसुज्झमाणए य, अहक्खायसंजए पुच्छा, गोयमा ! दुविहे पं०, तं०—छउमत्थे य केवली य ॥ सामाइयंमि उ कए चाउज्जामं अणुत्तरं धम्मं । तिविहेणं फासयंतो सामाइयसंजओ स खलु ॥ १ ॥ छेत्तूण उ परियागं पोराणं जो ठवेइ

अप्पाणं। धम्मंमि पंचजामे छेदोवट्ठावणो स खलु ॥ २ ॥ परिहरइ जो विसुद्धं तु पंचयामं अणुत्तरं धम्मं। तिविहेणं फासयंतो परिहारियसंजओ स खलु ॥ ३ ॥ लोभाणु वेययंतो जो खलु उवसामओ व खवओ वा। सो सुहुमसंपराओ अहखाया ऊणओ किंचि ॥ ४ ॥ उवसंते खीणंमि व जो खलु कम्मंमि मोहणिज्जंमि। छउमत्थो व जिणो वा अहखाओ संजओ स खलु ॥ ५ ॥ ( सूत्रं ७८६ )

'कति णं भंते !' इत्यादि, 'सामाइयसंजए'त्ति सामायिकं नाम चारित्रविशेषस्तत्प्रधानस्तेन वा संयतः सामायिकसंयतः, एवमन्येऽपि, 'इत्तरिए य'त्ति इत्वरस्य—भाविव्यपदेशान्तरत्वेनाल्पकालिकस्य सामायिकस्यास्तित्वादित्वरिकः, स चारोपयिष्यमाणमहाव्रतः प्रथमपश्चिमतीर्थकरसाधुः, 'आवकहिए य'त्ति यावत्कथिकस्य—भाविव्यपदेशान्तराभावाद् यावज्जीविकस्य सामायिकस्यास्तित्वाद्यावत्कथिकः, स च मध्यमजिनमहाविदेहजिनसम्बन्धी साधुः, 'साइयारे य'त्ति सातिचारस्य यदारोप्यते तत्सातिचारमेव छेदोपस्थापनीयं, तद्योगात्साधुरपि सातिचार एव, एवं निरतिचारच्छेदोपस्थापनीययोगान्निरतिचारः स च शैक्षकस्य पार्श्वनाथतीर्थान्महावीरतीर्थसङ्क्रान्तौ वा, छेदोपस्थापनीयसाधुश्च प्रथमपश्चिमतीर्थयोरेव भवतीति, 'णिव्विसमाणए य'त्ति परिहारिकतपस्तपस्यन् 'निव्विट्ठकाइए य'त्ति निर्विशमानकानुचरक इत्यर्थः, 'संकिलिस्समाणए'त्ति उपशमश्रेणीतः प्रच्यवमानः 'विसुद्धमाणए य'त्ति उपशमश्रेणीं क्षपकश्रेणीं वा समारोहन्, 'छउमत्थे य केवली य'त्ति व्यक्तम् ॥ अथ सामायिकसंयतादीनां स्वरूपं गाथाभिराह—'सामाइयंमि उ'गाहा, सामायिके एव प्रतिपन्ने न तु छेपस्थापनीयादौ 'चतुर्यामं' चतुर्महाव्रतम् 'अनुत्तरं धर्मं' श्रमणधर्ममित्यर्थः 'त्रिविधेन'मनःप्रभृतिना

'फासयंतो'त्ति स्पृशन्—पालयन् यो वर्त्तते इति शेषः सामायिकसंयतः सः 'खलु'निश्चितमित्यर्थः, अनया च गाथया यावत्कथिकसामायिकसंयतः उक्तः, इत्वरसामायिकसंयतस्तु स्वयं वाच्यः ॥ १ ॥ 'छेत्तूण'गाहा, कण्ठ्या, नवरं 'छेदोवट्ठावणे'त्ति छेदेन—पूर्वपर्यायच्छेदेन उपस्थापनं व्रतेषु यत्र तच्छेदोपस्थानं तद्योगाच्छेदोपस्थापनः, अनया च गाथया सातिचार इतरश्च द्वितीयसंयत उक्तः ॥ २ ॥ 'परिहरइ'गाहा, परिहरति—निर्विशमानकादिभेदं तप आसेवते यः साधुः, किं कुर्वन् ? इत्याह—विशुद्धमेव 'पञ्चयामं' अनुत्तरं धर्मं त्रिविधेन स्पृशन्, परिहारिकसंयतः स खल्विति, पञ्चयाममित्यनेन च प्रथमचरमतीर्थयोरेव तत्सत्तामाह ॥ ३ ॥ 'लोभाणु'गाहा, 'लोभाणून्' लोभलक्षणकषायसूक्ष्मकिट्टिकाः वेदयन् यो वर्त्तत इति, शेषं कण्ठ्यम् ॥ ४ ॥ 'उवसंते' गाहा, अयमर्थः—उपशान्ते मोहनीये कर्म्मणि क्षीणे वा यश्छद्मस्थो जिनो वा वर्त्तते स यथाख्यातसंयतः खल्विति ॥ ५ ॥ वेदद्वारे—

सामाइयसंजए णं भंते ! किं सवेदए होज्जा अवेदए होज्जा ?, गोयमा ! सवेदए वा होज्जा अवेदए वा होज्जा, जइ सवेदए एवं जहा कसायकुसीले तहेव निरवसेसं, एवं छेदोवट्ठावणियसंजएवि, परिहारविसुद्धियसंजओ जहा पुलाओ, सुहुमसंपरायसंजओ अहक्खायसंजओ य जहा नियंठो २। सामाइयसंजए णं भंते ! किं सरागे होज्जा वीयरागे होज्जा ?, गोयमा ! सरागे होज्जा नो वीयरागे होज्जा, एवं सुहुमसंपरायसंजए, अहक्खायसंजए जहा नियंठे ३ ॥ सामाइयसंजमे णं भंते ! किं ठियकप्पे होज्जा अट्ठियकप्पे होज्जा ?, गोयमा ! ठियकप्पे वा होज्जा अट्ठियकप्पे वा होज्जा, छेदोवट्ठावणियसंजए पुच्छा, गोयमा ! ठियकप्पे होज्जा नो अट्ठि-

यकप्पे होज्जा, एवं परिहारविसुद्धियसंजएवि, सेसा जहा सामाइयसंजए। सामाइयसंजए णं भंते! किं जिणकप्पे होज्जा थेरकप्पे वा होज्जा कप्पातीते वा होज्जा ?, गोयमा ! जिणकप्पे वा हो० जहा कसायकुसीले तहेव निरवसेसं, छेदोवट्ठावणिओ परिहारविसुद्धिओ य जहा बउसो, सेसा जहा नियंठे ४ ॥ ( सूत्रं ७८७ ) सामाइयसंजए णं भंते ! किं पुलाए होज्जा बउसे जाव सिणाए होज्जा ?, गोयमा ! पुलाए वा होज्जा बउसे जाव कसायकुसीले वा होज्जा नो नियंठे होज्जा नो सिणाए होज्जा, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धियसंजए णं भंते ! पुच्छा, गोयमा ! नो पुलाए नो बउसे नो पडिसेवणाकुसीले होज्जा कसायकुसीले होज्जा नो नियंठे होज्जा नो सिणाए होज्जा, एवं सुहुमसंपराएवि, अहक्खायसंजए पुच्छा, गोयमा ! नो पुलाए होज्जा जाव नो कसायकुसीले होज्जा नियंठे वा होज्जा सिणाए वा हो० ५॥ सामाइयसंजए णं भंते ! किं पडिसेवए हो० अपडिसेवए होज्जा ?, गोयमा ! पडिसेवए वा होज्जा अपडिसेवए वा होज्जा, जइ पडिसेवए होज्जा किं मूलगुणपडिसेवए होज्जा सेसं जहा पुलागस्स, जहा सामाइयसंजए एवं छेदोवट्ठावणिएवि, परिहारविसुद्धियसंजए पुच्छा, गोयमा ! नो पडिसेवए होज्जा अपडिसेवए होज्जा एवं जाव अहक्खायसंजए ६ ॥ सामाइयसंजए णं भंते ! कतिसु नाणेसु होज्जा ?, गोयमा ! दोसु वा तिसु वा चउसु वा नाणेसु होज्जा, एवं जहा कसायकुसीलस्स तहेव चत्तारि नाणाइं भयणाए, एवं जाव सुहुमसंपराए, अहक्खायसंजयस्स पंच नाणाइं भयणाए जहा नाणुद्देसए। सामाइयसंजए णं भंते ! केवतियं सुयं अहिज्जेज्जा ?, गोयमा ! जहन्नेणं अट्ठ पव-

यणमायाओ जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धियसंजए पुच्छा, गोयमा ! जहन्नेणं नवमस्स पुव्वस्स ततियं आयारवत्थुं उक्कोसेणं असंपुन्नाइं दस पुव्वाइं अहिज्जेज्जा, सुहुमसंपरायसंजए जहा सामाइयसंजए, अहक्खायसंजए पुच्छा, गोयमा ! जहन्नेणं अट्ठ पवयणमायाओ उक्कोसेणं चोद्दस पुव्वाइं अहिज्जेज्जा सुयवतिरित्ते वा होज्जा ७। सामाइयसंजए णं भंते ! किं तित्थे हो० अतित्थे होज्जा ?, गोयमा ! तित्थे वा होज्जा अतित्थे वा होज्जा जहा कसायकुसीले, छेदोवट्ठावणिए परिहारविसुद्धिए य जहा पुलाए, सेसा जहा सामाइयसंजए ८। सामाइयसंजए णं भंते ! किं सलिंगे होज्जा अन्नलिंगे होज्जा गिहिलिंगे होज्जा जहा पुलाए, एवं छेदोवट्ठावणिएवि, परिहारिविसुद्धियसंजए णं भंते ! किं पुच्छा, गोयमा ! दव्वलिंगंपि भावलिंगंपि पडुच्च सलिंगे होज्जा नो अन्नलिंगे होज्जा नो गिहिलिंगे होज्जा, सेसा जहा सामाइयसंजए ९। सामाइयसंजए णं भंते ! कतिसु सरीरेसु होज्जा ?, गोयमा ! तिसु वा चउसु वा पंचसु वा जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, सेसा जहा पुलाए १०। सामाइयसंजए णं भंते ! किं कम्मभूमीए होज्जा अकम्मभूमीए होज्जा ?, गोयमा ! जम्मणं संतिभावं च पडुच्च कम्मभूमीए नो अकम्मभूमीए जहा बउसे, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए य जहा पुलाए, सेसा जहा सामाइयसंजए ११ ॥ ( सूत्रं ७८८ )

सामायिकसंयतोऽवेदकोऽपि भवेत्, नवमगुणस्थानके हि वेदस्योपशमः क्षयो वा भवति, नवमगुणस्थानकं च यावत्सामायिकसंयतोऽपि व्यपदिश्यते, 'जहा कसायकुसीले'त्ति सामायिकसंयतः सवेदस्त्रिवेदोऽपि स्यात्, अवेदस्तु क्षीणो-

पशान्तवेद इत्यर्थः । 'परिहारविसुद्धियसंजए जहा पुलागो'त्ति पुरुषवेदो वा पुरुषनपुंसकवेदो वा स्यादित्यर्थः, 'सुहुमसंपराये'त्यादौ 'जहा नियंठो'त्ति क्षीणोपशान्तवेदत्वेनावेदक इत्यर्थः । एवमन्यान्यप्यतिदेशसूत्राण्यनन्तरोद्देशकानुसारेण स्वयमवगन्तव्यानीति ॥ कल्पद्वारे—'णो अट्ठियकप्पे'त्ति अस्थितकल्पो हि मध्यमजिनमहाविदेहजिनतीर्थेषु भवति, तत्र च छेदोपस्थापनीयं नास्तीति ॥ चारित्रद्वारमाश्रित्येदमुक्तम्—'सामाइयसंजए णं भंते ! किं पुलाए'इत्यादि, पुलाकादिपरिणामस्य चारित्रत्वात् ॥ ज्ञानद्वारे—'अहक्खायसंजयस्स पंच नाणाइं भयणाए जहा णाणुद्देसए'त्ति, इह च ज्ञानोद्देशकः—अष्टमशतद्वितीयोद्देशकस्य ज्ञानवक्तव्यतार्थमवान्तरप्रकरणं, भजना पुनः केवलियथाख्यातचारित्रिणः केवलज्ञानं छद्मस्थवीतरागयथाख्यातचारित्रिणो द्वे वा त्रीणि वा चत्वारि वा ज्ञानानि भवन्तीत्येवंरूपा, श्रुताधिकारे यथाख्यातसंयतो यदि निर्ग्रन्थस्तदाऽष्टप्रवचनमात्रादिचतुर्दशपूर्वान्तं श्रुतं यदि तु स्नातकस्तदा श्रुतातीतोऽत एवाह—'जहन्नेणं अट्ठ पवयणमायाओ' इत्यादि ॥ कालद्वारे—

सामाइयसंजए णं भंते ! किं ओसप्पिणीकाले होज्जा उस्सप्पिणिकाले होज्जा नोओसप्पिणिनोउस्सप्पिणिकाले होज्जा ?, गोयमा ! ओसप्पिणिकाले जहा बउसे, एवं छेदोवट्ठावणिएवि, नवरं जम्मणं संतिभावं(च) पडुच्च चउसुवि पलिभागेसु नत्थि साहरणं पडुच्च अन्नयरे पडिभागे होज्जा, सेसं तं चेव, परिहारविसुद्धिए पुच्छा, गोयमा ! ओसप्पिणिकाले वा होज्जा उस्सप्पिणिकाले वा होज्जा नोओसप्पिणिनोउस्सप्पिणिकाले नो होज्जा, जइ ओसप्पिणिकाले होज्जा जहा पुलाओ, उस्सप्पिणिकालेवि जहा पुलाओ, सुहुमसंपराइओ जहा

नियंठो, एवं अहक्खाओवि १२॥(सूत्रं ७८९) सामाइयसंजए णं भंते! कालगए समाणे किं गतिं गच्छति?, गोयमा! देवगतिं गच्छति, देवगतिं गच्छमाणे किं भवणवासीसु उवव० वाणमंतर० उववज्जेज्जा जोइसिएसु उववज्जेज्जा वेमाणिएसु उववज्जेज्जा?, गो०! णो भवणवासीसु उववज्जेज्जा जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए जहा पुलाए, सुहुमसंपराए जहा नियंठे, अहक्खाए पुच्छा, गोयमा! एवं अहक्खायसंजएवि जाव अजहन्नमणुक्कोसेणं अणुत्तरविमाणेसु उववज्जेज्जा, अत्थेगतिए सिज्झंति जाव अंतं करेंति॥ सामाइयसंजए णं भंते! देवलोगेसु उववज्जमाणे किं इंदत्ताए उववज्जति पुच्छा, गोयमा! अविराहणं पडुच्च एवं जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए जहा पुलाए, सेसा जहा नियंठे। सामाइयसंजयस्स णं भंते! देवलोगेसु उववज्जमाणस्स केवतियं कालं ठिती प०?, गोयमा! जहन्नेणं दो पलिओवमाइं उक्कोसेणं तेत्तीसं सागरोवमाइं, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धियस्स पुच्छा, गोयमा! जहन्नेणं दो पलिओवमाइं उक्कोसेणं अट्ठारस सागरोवमाइं, सेसाणं जहा नियंठस्स १३॥(सूत्रं ७९०) सामाइयसंजयस्स णं भंते! केवइया संजमट्ठाणा पन्नत्ता?, गोयमा! असंखेज्जा संजमट्ठाणा प०, एवं जाव परिहारविसुद्धियस्स, सुहुमसंपरायसंजयस्स पुच्छा, गोयमा! असंखेज्जा अंतोमुहुत्तिया संजमट्ठाणा प०, अहक्खायसंजयस्स पुच्छा, गोयमा! एगे अजहन्नमणुक्कोसए संजमट्ठाणे। एएसि णं भंते! सामाइयछेदोवट्ठावणियपरिहारविसुद्धियसुहुमसंपरागअहक्खायसंजयाणं संजमट्ठाणाणं कयरे २ जाव विसेसाहिया वा?,

गोयमा ! सव्वत्थोवे अहक्खायसंजमस्स एगे अजहन्नमणुक्कोसए संजमट्ठाणे सुहुमसंपरागसंजयस्स अंतोमुहु-त्तिया संजमट्ठाणा असंखेज्जगुणा परिहारविसुद्धियसंजयस्स संजमट्ठाणा असंखेज्जगुणा सामाइयसंजयस्स छेदोवट्ठावणियसंजयस्सय एएसि णं संजमट्ठाणा दोण्हवि तुल्ला असंखेज्जगुणा १४ ॥ ( सूत्रं ७९१ ) सामाइय-संजयस्स णं भंते ! केवइया चरित्तपज्जवा प० ?, गोयमा ! अणंता चरित्तपज्जवा प० एवं जाव अहक्खायसं-जयस्स ॥ सामाइयसंजए णं भंते ! सामाइयसंजयस्स सट्ठाणसन्निगासेणं चरित्तपज्जवेहिं किं हीणे तुल्ले अब्भ-हिए ?, गोयमा ! सिय हीणे छट्ठाणवडिए, सामाइयसंजए णं भंते ! छेदोवट्ठावणियसंजयस्स परट्ठाणसन्निगा-सेणं चरित्तपज्जवेहिं पुच्छा, गोयमा ! सिय हीणे छट्ठाणवडिए, एवं परिहारविसुद्धियस्सवि, सामाइयसंजए णं भंते ! सुहुमसंपरागसंजयस्स परट्ठाणसन्निगासेणं चरित्तपज्जवे पुच्छा, गोयमा ! हीणे नो तुल्ले नो अब्भ-हिए अणंतगुणहीणे, एवं अहक्खायसंजयस्सवि, एवं छेदोवट्ठावणिएवि, हेट्ठिल्लेसु तिसुवि समं छट्ठाणवडिए उवरिल्लेसु दोसु तहेव हीणे, जहा छेदोवट्ठावणिए तहा परिहारविसुद्धिएवि, सुहुमसंपरागसंजए णं भंते ! सामाइयसंजयस्स परट्ठाण पुच्छा, गोयमा ! नो हीणे नो तुल्ले अब्भहिए अणंतगुणमब्भहिए, एवं छेओवट्ठावणि-यपरिहारविसुद्धिएसुवि समं सट्ठाणे सिय हीणे नो तुल्ले सिय अब्भहिए, जइ हीणे अणंतगुणहीणे अह अब्भहिए अणंतगुणमब्भहिए, सुहुमसंपरायसंजयस्स अहक्खायसंजयस्स परट्ठाणे पुच्छा, गोयमा ! हीणे नो तुल्ले नो अब्भहिए अणंतगुणहीणे, अहक्खाए हेट्ठिल्लाणं चउण्हवि नो हीणे नो तुल्ले अब्भहिए अणंतगुणमब्भहिए,

२५ श
उद्देश
काल
संयम
नचा
पर्यव
७८९

॥९

सट्ठाणे नो हीणे तुल्ले नो अब्भहिए। एएसि णं भंते! सामाइयछेदोवट्ठावणियपरिहारविसुद्धियसुहुमसंपराय अहक्खायसंजयाणं जहन्नुक्कोसगाणं चरित्तपज्जवाणं कयरे २ जाव विसेसाहिया वा?, गोयमा! सामाइय-संजयस्स छेओवट्ठावणियसंजयस्स य एएसि णं जहन्नगा चरित्तपज्जवा दोण्हवि तुल्ला सव्वत्थोवा परिहारविसुद्धि-यसंजयस्स जहन्नगा चरित्तपज्जवा अणंतगुणा तस्स चेव उक्कोसगा चरित्तपज्जवा अणंतगुणा सामाइयसंजयस्स छेओवट्ठावणियसंजयस्स य एएसि णं उक्कोसगा चरित्तपज्जवा दोण्हवि तुल्ला अनंतगुणा सुहुमसंपरायसंजयस्स जहन्नगा चरित्तपज्जवा अणंतगुणा तस्स चेव उक्कोसगा चरित्तपज्जवा अणंतगुणा अहक्खायसंजयस्स अजहन्नम-णुक्कोसगा चरित्तपज्जवा अणंतगुणा १५॥ सामाइयसंजए णं भंते! किं सजोगी होज्जा अजोगी होज्जा?, गोयमा! सजोगी जहा पुलाए एवं जाव सुहुमसंपरायसंजए अहक्खाए जहा सिणाए १६॥ सामाइयसंजए णं भंते! किं सागारोवउत्ते होज्जा अणागारोवउ०?, गोयमा! सागारोवउत्ते जहा पुलाए एवं जाव अहक्खाए; नवरं सुहुमसंपराए सागारोवउत्ते होज्जा नो अणागारोवउत्ते होज्जा १७॥ सामाइयसंजए णं भंते! किं सक-सायी होज्जा अकसायी होज्जा?, गोयमा! सकसायी होज्जा नो अकसायी होज्जा, जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए जहा पुलाए, सुहुमसंपरागसंजए पुच्छा, गोयमा! सकसायी होज्जा नो अकसायी होज्जा, जइ सकसायी होज्जा से णं भंते! कतिसु कसायेसु होज्जा?, गोयमा! एगंमि संजलण-लोभे होज्जा, अहक्खायसंजए जहा नियंठे १८॥ सामाइयसंजए णं भंते! किं सलेस्से होज्जा अलेस्से होज्जा?,

गोयमा ! सलेस्से होज्जा जहा कसायकुसीले, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए जहा पुलाए, सुहुमसंपराए जहा नियंठे, अहक्खाए जहा सिणाए, नवरं जइ सलेस्से होज्जा एगाए सुक्कलेस्साए होज्जा १९ ॥ ( सूत्रं ७९२ )

'एवं छेओवट्ठावणिएवि'त्ति, अनेन बकुशसमानः कालतश्छेदोपस्थापनीयसंयत उक्तः, तत्र च बकुशस्योत्सर्पिण्यवसर्पिणीव्यतिरिक्तकाले जन्मतः सद्भावतश्च सुषमसुषमादिप्रतिभागत्रये निषेधोऽभिहितः दुष्षमसुषमाप्रतिभागे च विधिः छेदोपस्थापनीयसंयतस्य तु तत्रापि निषेधार्थमाह—'नवर'मित्यादि ॥ संयमस्थानद्वारे—'सुहुमसंपराये'त्यादौ 'असंखेज्जा अंतोमुहुत्तिया संजमट्ठाण'त्ति अन्तर्मुहूर्त्ते भवानि आन्तर्मुहूर्त्तिकानि, अन्तर्मुहूर्त्तप्रमाणा हि तदद्धा, तस्याश्च प्रतिसमयं चरणविशुद्धिविशेषभावादसङ्ख्येयानि तानि भवन्ति, यथाख्याते त्वेकमेव, तदद्धायाश्चरणविशुद्धेर्निर्विशेषत्वादिति ॥ संयमस्थानाल्पबहुत्वचिन्तायां तु किलासद्भावस्थापनया समस्तानि संयमस्थानान्येकविंशतिः, तत्रैकमुपरितनं यथाख्यातस्य, ततोऽधस्तनानि चत्वारि सूक्ष्मसम्परायस्य, तानि च तस्मादसङ्ख्येयगुणानि दृश्यानि, तेभ्योऽधश्चत्वारि परिहृत्यान्यान्यष्टौ परिहारिकस्य, तानि च पूर्वेभ्योऽसङ्ख्येयगुणानि दृश्यानि, ततः परिहृतानि, यानि चत्वार्यष्टौ च पूर्वोक्तानि तेभ्योऽन्यानि च चत्वारीत्येवं तानि षोडश सामायिकच्छेदोपस्थापनीयसंयतयोः, पूर्वेभ्यश्चैतान्यसङ्ख्यातगुणानीति ॥ सन्निकर्षद्वारे—'सामाइयसंजमे णं भंते ! सामाइयसंजयस्से'त्यादौ 'सिय हीणे'त्ति असङ्ख्यातानि तस्य संयमस्थानानि, तत्र च यदैको हीनशुद्धिकेऽन्यस्त्वितरत्र वर्त्तते तदैको हीनोऽन्यस्त्वभ्यधिकः, यदा तु समाने संयमस्थाने वर्त्तेते तदा तुल्ये,

हीनाधिकत्वे च षट्स्थानपतितत्वं स्यादत एवाह–'छट्ठाणवडिए'त्ति ॥ उपयोगद्वारे–सामायिकसंयतादीनां पुलाकवदुपयोगद्वयं भवति, सूक्ष्मसम्परायसंयतस्य तु विशेषोपदर्शनार्थमाह–'नवरं सुहुमसंपराइए'इत्यादि, सूक्ष्मसम्परायः साकारोपयुक्तस्तथास्वभावत्वादिति ॥ लेश्याद्वारे–यथाख्यातसंयतः स्नातकसमान उक्तः, स्नातकश्च सलेश्यो वा स्यादलेश्यो वा, यदि सलेश्यस्तदा परमशुक्ललेश्यः स्यादित्येवमुक्तः, यथाख्यातसंयतस्य तु निर्ग्रन्थत्वापेक्षया निर्विशेषेणापि शुक्ललेश्या स्यादतोऽस्य विशेषस्याभिधानार्थमाह–'नवरं जई'त्यादि ॥ परिणामद्वारे–

सामाइयसंजए णं भंते ! किं वड्ढमाणपरिणामे होज्जा हीयमाणपरिणामे अवट्ठियपरिणामे ?, गोयमा ! वड्ढमाणपरिणामे जहा पुलाए, एवं जाव परिहारविसुद्धिए, सुहुमसंपराय पुच्छा, गोयमा ! वड्ढमाणपरिणामे वा होज्जा हीयमाणपरिणामे वा होज्जा नो अवट्ठियपरिणामे होज्जा, अहक्खाए जहा नियंठे । सामाइयसंजए णं भंते ! केवतियं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जह० एक्कं समयं जहा पुलाए, एवं जाव परिहारविसुद्धिएवि, सुहुमसंपरागसंजए णं भंते ! केवतियं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं, केवतियं कालं हीयमाणपरिणामे एवं चेव, अहक्खायसंजए णं भंते ! केवतियं कालं वड्ढमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं, केवतियं कालं अवट्ठिय परिणामे होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं देसूणा पुव्वकोडी २० ॥ ( सूत्रं ७९३ )

'सुहुमसंपराये'इत्यादौ, 'वड्ढमाणपरिणामे वा होज्जा हीयमाणपरिणामे वा होज्जा नो अवट्ठियपरिणामे होज्ज'त्ति

सूक्ष्मसम्परायसंयतः श्रेणिं समारोहन् वर्द्धमानपरिणामस्ततो भ्रस्यन् हीयमानपरिणामः, अवस्थितपरिणामस्त्वसौ न भवति, गुणस्थानकस्वभावादिति। तथा 'सुहुमसम्परायसंजए णं भंते! केवइयं कालं' इत्यादौ 'जहन्नेणं एक्कं समयं'ति सूक्ष्मसम्परायस्य जघन्यतो वर्द्धमानपरिणाम एकं समयं प्रतिपत्तिसमयानन्तरमेव मरणात्, 'उक्कोसेणं अंतोमुहुत्तं'ति तद्गुणस्थानकस्यैतावत्प्रमाणत्वात्, एवं तस्य हीयमानपरिणामोऽपि भावनीय इति। तथा 'अहक्खायसंजए णं भंते!' इत्यादौ 'जहन्नेणं अंतोमुहुत्तं उक्कोसेणंपि अंतोमुहुत्तं'त्ति यो यथाख्यातसंयतः केवलज्ञानमुत्पादयिष्यति यश्च शैलेशीप्रतिपन्नस्तस्य वर्द्धमानपरिणामो जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तं तदुत्तरकालं तद्व्यवच्छेदात्, अवस्थितपरिणामस्तु जघन्येनैकं समयं, उपशमाद्धायाः प्रथमसमयानन्तरमेव मरणात्, 'उक्कोसेणं देसूणा पुव्वकोडि'त्ति एतच्च प्राग्वद्भावनीयमिति॥ वन्धद्वारे—

सामाइयसंजए णं भंते! कइ कम्मप्पगडीओ वंधइ?, गोयमा! सत्तविहबंधए वा अट्ठविहबंधए वा एवं जहा वउसे, एवं जाव परिहारविसुद्धिए, सुहुमसंपरागसंजए पुच्छा, गोयमा! आउयमोहणिज्जवज्जाओ छ कम्मप्पगडीओ बंधति, अहक्खाएसंजए जहा सिणाए २१॥ सामाइयसंजए णं भंते! कति कम्मप्पगडीओ वेदेति?, गोयमा! नियमं अट्ठ कम्मप्पगडीओ वेदेति, एवं जाव सुहुमसंपराए, अहक्खाए पुच्छा, गोयमा! सत्तविहवेयए वा चउव्विहवेयए वा, सत्तविह वेदेमाणे मोहणिज्जवज्जाओ सत्त कम्मप्पगडीओ वेदेति, चत्तारि वेदेमाणे वेयणिज्जाउयनामगोयाओ चत्तारि कम्मप्पगडीओ वेदेति २२॥ सामाइयसंजए णं भंते! कति कम्म-

प्पगडीओ उदीरेति ?, गोयमा ! सत्तविह जहा बउसो, एवं जाव परिहारविसुद्धीए, सुहुमसंपराए पुच्छा, गोयमा ? छव्विह उदीरए वा पंचविह उदीरए वा, छ उदीरेमाणे आउयवेयणिज्जवज्जाओ छ कम्मप्पगडीओ उदीरेइ पंच उदीरेमाणे आउयवेयणिज्जमोहणिज्जवज्जाओ पंच कम्मप्पगडीओ उदीरेइ, अहक्खायसंजए पुच्छा, गोयमा ! पंचविह उदीरए वा दुविह उदीरए वा अणुदीरए वा, पंच उदीरेमाणे आउय०सेसं जहा नियंठस्स २३ ॥ ( सूत्रं ७९४ ) सामाइयसंजए णं भंते ! सामाइयसंजयत्तं जहमाणे किं जहति किं उवसंपज्जति ?, गोयमा ! सामाइयसंजयत्तं जहति छेदोवट्ठावणियसंजयं वा सुहुमसंपरागसंजयं वा असंजमं वा संजमासंजमं वा उवसंपज्जति, छेओवट्ठावणिए पुच्छा, गोयमा ! छेओवट्ठावणियसंजयत्तं जहति सामाइयसंज० परिहारवि० सुहुमसं० असंज० संजमासंजमं वा उव०, परिहारविसुद्धिए पुच्छा, गोयमा ! परिहारविसुद्धियसंजयत्तं जहति छेदोवट्ठावणियसंजयं वा असंजमं वा उपसंपज्जति, सुहुमसंपराए पुच्छा, गोयमा ! सुहुमसंपरायसंजयत्तं जहति सामाइयसंजयं वा छेओवट्ठावणियसंजयं वा अहक्खायसंजयं वा असंजमं वा उवसंपज्जइ, अहक्खायसंजए णं पुच्छा, गोयमा ! अहक्खायसंजयत्तं जहति सुहुमसंपरागसंजयं वा असंजमं वा सिद्धिगतिं वा उवसंपज्जति २४ ॥ ( सूत्रं ७९५ ) सामाइयसंजए णं भंते ! किं सन्नोवउत्ते हो० नोसन्नोवउत्ते होज्जा ?, गोयमा ! सन्नोवउत्ते जहा बउसो, एवं जाव परिहारविसुद्धिए, सुहुमसंपराए अहक्खाए य जहा पुलाए २५ ॥ सामाइयसंजए णं भंते ! किं आहारए होज्जा अणाहारए होज्जा जहा पुलाए, एवं जाव

सुहुमसंपराए, अहक्खायसंजए जहा सिणाए २६ ॥ सामाइयसंजए णं भंते ! कति भवग्गहणाइं होज्जा ?, गोयमा ! जह० एक्कं समयं उक्कोसेणं अट्ठ, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए पुच्छा, गोयमा ! जह० एक्कं समयं उक्कोसेणं तिन्नि, एवं जाव अहक्खाए २७ ॥ ( सूत्रं ७९६ )

'सुहुमसंपराए' इत्यादौ 'आउयमोहणिज्जवज्जाओ छ कम्मप्पगडीओ बंधइ'त्ति सूक्ष्मसम्परायसंयतो ह्यायुर्न बध्नाति अप्रमत्तान्तत्वात्तद्बन्धस्य, मोहनीयं च बादरकषायोदयाभावान्न बध्नातीति तद्वर्जाः षट् कर्म्मप्रकृतीर्बध्नातीति ॥ वेदद्वारे— 'अहक्खाये'त्यादौ 'सत्तविहवेयए वा चउव्विहवेयए व'त्ति यथाख्यातसंयतो निर्ग्रन्थावस्थायां 'मोहवज्ज'त्ति मोहवर्जानां सप्तानां कर्म्मप्रकृतीनां वेदको, मोहनीयस्योपशान्तत्वात् क्षीणत्वाद्वा, स्नातकावस्थायां तु चतसृणामेव, घातिकर्म्मप्रकृतीनां तस्य क्षीणत्वात् ॥ उपसम्पद्धानद्वारे—'सामाइयसंजए ण'मित्यादि, सामायिकसंयतः सामायिकसंयतत्वं त्यजति छेदोपस्थापनीयसंयतत्वं प्रतिपद्यते, चतुर्यामधर्म्मात्पञ्चयामधर्म्मसङ्क्रमे पार्श्वनाथशिष्यवत्, शिष्यको वा महाव्रतारोपणे, सूक्ष्मसम्परायसंयतत्वं वा प्रतिपद्यते श्रेणिप्रतिपत्तितः असंयमादिर्वा भवेद्भावप्रतिपातादिति । तथा छेदोपस्थापनीयसंयतश्छेदोपस्थापनीयसंयतत्वं त्यजन् सामायिकसंयतत्वं प्रतिपद्यते, यथाऽऽदिदेवतीर्थसाधुः अजितस्वामितीर्थं प्रतिपद्यमानः, परिहारविशुद्धिकसंयतत्वं वा प्रतिपद्यते, छेदोपस्थापनीयवत एव परिहारविशुद्धिसंयमस्य योग्यत्वादिति । तथा परिहारविशुद्धिकसंयतः परिहारविशुद्धिकसंयतत्वं त्यजन् छेदोपस्थापनीयसंयतत्वं प्रतिपद्यते पुनर्गच्छाद्याश्रयणात् असंयमं वा प्रतिपद्यते देवत्वोत्पत्ताविति । तथा सूक्ष्मसम्परायसंयतः सूक्ष्मसम्परायसंयतत्वं श्रेणीप्रतिपातेन त्यजन् सामायिकसंयतत्वं

प्रतिपद्यते यदि पूर्वं सामायिकसंयतो भवेत् छेदोपस्थापनीयसंयतत्वं वा प्रतिपद्यते यदि पूर्वं छेदोपस्थापनीयसंयतो भवेत्, यथाख्यातसंयतत्वं वा प्रतिपद्यते श्रेणीसमारोहणत इति, तथा यथाख्यातसंयतो यथाख्यातसंयतत्वं त्यजन् श्रेणिप्रतिपतनात् सूक्ष्मसम्परायसंयतत्वं प्रतिपद्यते असंयमं वा प्रतिपद्यते, उपशान्तमोहत्वे मरणात् देवोत्पत्तौ, सिद्धिगतिं वोपसम्पद्यते स्नातकत्वे सतीति ॥ आकर्षद्वारे—

**सामाइयसंजयस्स णं भंते ! एगभवग्गहणिया केवतिया आगरिसा प०, गोयमा ! जहन्नेणं जहा बउसस्स, छेदोवट्ठावणियस्स पुच्छा, गोयमा ! जहन्नेणं एक्कं उक्कोसेणं वीसपुहुत्तं, परिहारविसुद्धियस्स पुच्छा, गोयमा ! जहन्नेणं एक्कं उक्कोसेणं तिन्नि, सुहुमसंपरायस्स पुच्छा, गोयमा ! जहन्नेणं एक्कं उक्कोसेणं चत्तारि, अहक्खायस्स पुच्छा, गोयमा ! जहन्नेणं एक्कं उक्कोसेणं दोन्नि । सामाइयसंजयस्स णं भंते ! नाणाभवग्गहणिया केवतिया आगरिसा प० ?, गोयमा ! जहा बउसे, छेदोवट्ठावणियस्स पुच्छा, गोयमा ! जहन्नेणं दोन्नि उक्कोसेणं उवरिं नवण्हं सयाणं अंतो सहस्सस्स, परिहारविसुद्धियस्स जहन्नेणं दोन्नि उक्कोसेणं सत्त, सुहुमसंपरागस्स जहन्नेणं दोन्नि उक्कोसेणं नव, अहक्खायस्स जहन्नेणं दोन्नि उक्कोसेणं पंच ॥ ( सूत्रं ७९७ )**

'छेदोवट्ठावणीयस्से'त्यादौ 'वीसपुहुत्तं'ति छेदोपस्थापनीयस्योत्कर्षतो विंशतिपृथक्त्वं पञ्चषादिविंशतयः आकर्षाणां भवन्ति 'परिहारविसुद्धियस्से'त्यादौ 'उक्कोसेणं तिन्नि'त्ति परिहारविसुद्धिकसंयतत्वं त्रीन् वारान् एकत्र भवे उत्कर्षतः प्रतिपद्यते, 'सुहुमसंपरायस्से'त्यादौ 'उक्कोसेणं चत्तारि'त्ति एकत्र भवे उपशमश्रेणीद्वयसम्भवेन प्रत्येकं सङ्क्लिश्यमान-

विशुद्ध्यमानलक्षणसूक्ष्मसम्परायद्वयभावाच्चतस्रः प्रतिपत्तयः सूक्ष्मसम्परायसंयतत्वे भवन्ति, 'अहक्खाए' इत्यादौ 'उक्कोसेणं दोन्नि'त्ति उपशमश्रेणीद्वयसम्भवादिति । नानाभवग्रहणाकर्षाधिकारे 'छेओवट्ठावणीयस्से'त्यादौ 'उक्कोसेणं उवरिं नवण्हं सयाणं अंतोसहस्स'त्ति, कथं ?, किलैकत्र भवग्रहणे षड्विंशतय आकर्षाणां भवन्ति, ताश्चाष्टाभिर्भवैर्गुणिता नव शतानि षष्ठ्यधिकानि भवन्ति, इदं च सम्भवमात्रमाश्रित्य सङ्ख्याविशेषप्रदर्शनमतोऽन्यथाऽपि यथा नव शतान्यधिकानि भवन्ति तथा कार्यं, 'परिहारविसुद्धियस्से'त्यादौ 'उक्कोसेणं सत्त'त्ति, कथम् ?, एकत्र भवे तेषां त्रयाणामुक्तत्वात् भवत्रयस्य च तस्याभिधानादेकत्र भवे त्रयं द्वितीये द्वयं तृतीये द्वयमित्यादिविकल्पतः सप्ताकर्षाः परिहारविशुद्धिकस्येति, 'सुहुमसंपरायस्से'त्यादौ 'उक्कोसेणं नव'त्ति, कथं ?, सूक्ष्मसम्परायस्यैकत्र भवे आकर्षचतुष्कस्योक्तत्वाद्भवत्रयस्य च तस्याभिधानादेकत्र चत्वारो द्वितीयेऽपि चत्वारस्तृतीये चैक इत्येवं नवेति । 'अहक्खाए' इत्यादौ 'उक्कोसेणं पंच'त्ति, कथं ?, यथाख्यातसंयतस्यैकत्र भवे द्वावाकर्षौ द्वितीये च द्वावेकत्र चैक इत्येवं पञ्चेति ॥ कालद्वारे—

सामाइयसंजए णं भंते ! कालओ केवचिरं होइ ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं देसूणएहिं नवहिं वासेहिं ऊणिया पुव्वकोडी, एवं छेदोवट्ठावणिएवि, परिहारविसुद्धिए जहन्नेणं एक्कं समयं उक्कोसेणं देसूणएहिं एकूणतीसाए वासेहिं ऊणिया पुव्वकोडी, सुहुमसंपराए जहा नियंठे, अहक्खाए जहा सामाइयसंजए । सामाइयसंजया णं भंते ! कालओ केवचिरं होइ ?, गोयमा ! सव्वद्धा, छेदोवट्ठावणिएसु पुच्छा, गोयमा ! जहन्नेणं अड्ढाइज्जाइं वाससयाइं उक्को० पन्नासं सागरोवमकोडिसयसहस्साइं, परिहारविसुद्धीए पुच्छा,

गोयमा ! जहन्नेणं देसूणाइं दो वाससयाइं उक्को० देसूणाओ दो पुव्वकोडीओ, सुहुमसंपरागसंजया णं भंते ! पुच्छा, गोयमा ! जह० एक्कं समयं उक्कोसेणं अंतोमुहुत्तं, अहक्खायसंजया जहा सामाइयसंजया २९ ॥ सामाइयसंजयस्स णं भंते ! केवतियं कालं अंतरं होइ ?, गोयमा ! जहन्नेणं जहा पुलागस्स एवं जाव अहक्खायसंजयस्स, सामाइयसं० भंते ! पुच्छा, गोयमा ! नत्थि अंतरं, छेदोवट्ठावणिय पुच्छा, गोयमा ! जहन्नेणं तेवट्ठिं वाससहस्साइं उक्कोसेणं अट्ठारस सागरोवमकोडाकोडीओ, परिहारविसुद्धियस्स पुच्छा, गोयमा ! जहन्नेणं चउरासीइं वाससहस्साइं उक्कोसेणं अट्ठारस सागरोवमकोडाकोडीओ, सुहुमसंपरायाणं जहा नियंठाणं, अहक्खायाणं जहा सामाइयसंजयाणं ३० ॥ सामाइयसंजयस्स णं भंते ! कति समुग्घाया पन्नत्ता ?, गोयमा ! छ समुग्घाया पन्नत्ता, तं जहाकसायकुसीलस्स, एवं छेदोवट्ठावणियस्सवि, परिहारविसुद्धियस्स जहा पुलागस्स, सुहुमसंपरागस्स जहा नियंठस्स, अहक्खायस्स जहा सिणायस्स ३१ ॥ सामाइयसंजए णं भंते ! लोगस्स किं संखेज्जइभागे होज्जा असंखेज्जइभागे पुच्छा, गोयमा ! नो संखेज्जइ जहा पुलाए, एवं जाव सुहुमसंपराए । अहक्खायसंजए जहा सिणाए ३२ ॥ सामाइयसंजए णं भंते ! लोगस्स किं संखेज्जइभागं फुसइ जहेव होज्जा तहेव फुसइ ३३ ॥ सामाइयसंजए णं भंते ! कयरंमि भावे होज्जा ?, गोयमा ! उवसमिए भावे होज्जा, एवं जाव सुहुमसंपराए, अहक्खायसंपराए पुच्छा, गोयमा ! उवसमिए वा खइए वा भावे होज्जा ३४ । सामाइयसंजयाणं भंते ! एगसमएणं केवतिया होज्जा ?, गोयमा ! पडिवज्जमाणए य पडुच्च जहा

कसायकुसीला तहेव निरवसेसं, छेदोवट्ठावणिया पुच्छा, गोयमा! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सयपुहुत्तं, पुव्वपडिवन्नए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं कोडिसयपुहुत्तं उक्कोसेणवि कोडिसयपुहुत्तं, परिहारविसुद्धिया जहा पुलागा, सुहुमसंपराया जहा नियंठा, अहक्खायसंजयाणं पुच्छा, गोयमा! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं बावट्ठसयं अट्ठुत्तरसयं खवगाणं चउप्पन्नं उवसामगाणं, पुव्वपडिवन्नए पडुच्च जहन्नेणं कोडिपुहुत्तं उक्कोसेणवि कोडिपुहुत्तं ॥ एएसि णं भंते! सामाइयछेओवट्ठावणियपरिहारविसुद्धियसुहुमसंपरायअहक्खायसंजयाणं कयरे २ जाव विसेसाहिया?, गोयमा! सव्वत्थोवा सुहुमसंपरायसंजया परिहारविसुद्धियसंजया संखेज्जगुणा अहक्खायसंजया संखे॰ छेओवट्ठावणियसंजया संखे॰ सामाइयसंजया संखेज्जगुणा ३६ ॥ ( सूत्रं ७९८ )

'सामाइय' इत्यादौ सामायिकप्रतिपत्तिसमयसमनन्तरमेव मरणादेकः समयः, 'उक्कोसेणं देसूणएहिं नवहिं वासेहिं ऊणिया पुव्वकोडी'त्ति यदुक्तं तद्गर्भसमयादारभ्यावसेयम्, अन्यथा जन्मदिनापेक्षयाऽष्टवर्षोनिकैव सा भवतीति, 'परिहारविसुद्धिए जहन्नेणं एक्कं समयं'ति मरणापेक्षमेतत्, 'उक्कोसेणं देसूणएहिं'ति, अस्यायमर्थः—देशोननववर्षजन्मपर्यायेण केनापि पूर्वकोट्यायुषा प्रव्रज्या प्रतिपन्ना, तस्य च विंशतिवर्षप्रव्रज्यापर्यायस्य दृष्टिवादोऽनुज्ञातस्ततश्चासौ परिहारविशुद्धिकं प्रतिपन्नः, तच्चाष्टादशमासमानमप्यविच्छिन्नतरपरिणामेन तेनाजन्म पालितमित्येवमेकोनत्रिंशद्वर्षोना पूर्वकोटिं

यावत्तत्स्यादिति, 'अहक्खाए जहा सामाइयसंजए'त्ति तत्र जघन्यत एकं समयं उपशमावस्थायां मरणात्, उत्कर्षतो देशोना पूर्वकोटी, स्नातकयथाख्यातापेक्षयेति। पृथक्त्वेन कालचिन्तायां 'छेओवट्ठावणिए' इत्यादि, तत्रोत्सर्प्पिण्यामादितीर्थकरस्य तीर्थं यावच्छेदोपस्थापनीयं भवतीति, तीर्थं च तस्य सार्द्धे द्वे वर्षशते भवतीत्यत उक्तं—'अड्ढाइज्जाइं' इत्यादि, तथाऽवसर्प्पिण्यामादितीर्थकरस्य तीर्थं यावच्छेदोपस्थापनीयं प्रवर्त्तते तच्च पञ्चाशत्सागरोपमकोटीलक्षा इत्यतः 'उक्कोसेणं पन्नास'मित्याद्युक्तमिति। परिहारविशुद्धिककालो जघन्येन 'देसूणाइं दो वाससयाइं'ति, कथम्?, उत्सर्प्पिण्यामाद्यस्य जिनस्य समीपे कश्चिद्वर्षशतायुः परिहारविशुद्धिकं प्रतिपन्नस्तस्यान्तिके तज्जीवितान्तेऽन्यो वर्षशतायुरेव ततः परतो न तस्य प्रतिपत्तिरस्तीत्येवं द्वे वर्षशते, तयोश्च प्रत्येकमेकोनात्रिंशति वर्षेषु गतेषु तत्प्रतिपत्तिरित्येवमष्टपञ्चाशता वर्षैर्न्यूने ते इति देशोने इत्युक्तं, एतच्च टीकाकारव्याख्यानं, चूर्णिकारव्याख्यानमप्येवमेव, किन्त्ववसर्प्पिण्यन्तिमजिनापेक्षमिति विशेषः, 'उक्कोसेणं देसूणाओ दो पुव्वकोडीओ'त्ति, कथम्?, अवसर्प्पिण्यामादितीर्थकरस्यान्तिके पूर्वकोट्यायुः कश्चित्परिहारविशुद्धिकं प्रतिपन्नस्तस्यान्तिके तज्जीवितान्तेऽन्यस्तादृश एव तत्प्रतिपन्न इत्येवं पूर्वकोटीद्वयं तथैव देशोनं परिहारविशुद्धिकसंयतत्वं स्यादिति॥ अन्तरद्वारे—'छेओवट्ठावणिए'त्यादौ 'जहन्नेणं तेवट्ठिं वाससहस्साइं'ति, कथम्?, अवसर्प्पिण्यां दुष्षमां यावच्छेदोपस्थापनीयं प्रवर्त्तते ततस्तस्या एवैकविंशतिवर्षसहस्रमानायामेकान्तदुष्षमायामुत्सर्प्पिण्याश्चैकान्तदुष्षमायां च तत्प्रमाणायामेव तदभावः स्यात् एवं चैकविंशतिवर्षसहस्रमानत्रयेण त्रिषष्टिवर्षसहस्राणामन्तरमिति, 'उक्कोसेणं अट्ठारस सागरोवमकोडाकोडीओ'त्ति किलोत्सर्प्पिण्यां चतुर्विंशतितमजिनतीर्थे छेदोपस्थापनीयं प्रवर्त्तते

ततश्च सुषमदुष्षमादिसमात्रये क्रमेण द्वित्रिचतुःसागरोपमकोटीकोटीप्रमाणे अतीते अवसर्प्पिण्याश्चैकान्तसुषमादित्रये क्रमेण चतुस्त्रिद्विसागरोपमकोटीश्प्रमाणे अतीतप्राये प्रथमजिनतीर्थे छेदोपस्थापनीयं प्रवर्त्तत इत्येवं यथोक्तं छेदोपस्थापनीयस्यान्तरं भवति, यच्चेह किञ्चिन्न पूर्यते यच्च पूर्वसूत्रेऽतिरिच्यते तदल्पत्वान्न विवक्षितमिति, 'परिहारविसुद्धियस्से'त्यादि, परिहारविशुद्धिकसंयतस्यान्तरं जघन्यं चतुरशीतिवर्षसहस्राणि, कथम् ?, अवसर्प्पिण्या दुष्षमैकान्तदुष्षमयोरुत्सर्प्पिण्याश्चैकान्तदुष्षमादुष्षमयोः प्रत्येकमेकविंशतिवर्षसहस्रप्रमाणत्वेन चतुरशीतिर्वर्षसहस्राणां भवति तत्र च परिहारविशुद्धिकं न भवतीतिकृत्वा जघन्यमन्तरं तस्य यथोक्तं स्यात्, यश्चेहान्तिमजिनानन्तरो दुष्षमायां परिहारविशुद्धिककालो यश्चोत्सर्प्पिण्यास्तृतीयसमायां परिहारविशुद्धिकप्रतिपत्तिकालात्पूर्वः कालो नासौ विवक्षितोऽल्पत्वादिति, 'उक्कोसेणं अट्ठारस सागरोवमकोडाकोडीओ'त्ति छेदोपस्थापनीयोत्कृष्टान्तरवदस्य भावना कार्येति ॥ परिणामद्वारे 'छेदोवट्ठावणिये' इत्यादौ 'जहन्नेणं कोडिसयपुहुत्तं उक्कोसेणवि कोडिसयपुहुत्तं'त्ति, इहोत्कृष्टं छेदोपस्थापनीयसंयतपरिमाणमादितीर्थकरतीर्थान्याश्रित्य संभवति, जघन्यं तु तत्सम्यग् नावगम्यते, यतो दुष्षमान्ते भरतादिषु दशसु क्षेत्रेषु प्रत्येकं तद्द्वयस्य भावाद्विंशतिरेव तेषां श्रूयते, केचित्पुनराहुः—इदमप्यादितीर्थकराणां यस्तीर्थकालस्तदपेक्षयैव समवसेयं, कोटीशतपृथक्त्वं च जघन्यमल्पतरमुत्कृष्टं च बहुतरमिति ॥ अल्पबहुत्वद्वारे—'सव्वत्थोवा सुहुमसंपरायसंजय'त्ति स्तोकत्वात्तत्कालस्य निर्ग्रन्थतुल्यत्वेन च शतपृथक्त्वप्रमाणत्वात्तेषां, 'परिहारविसुद्धियसंजया संखेज्जगुण'त्ति तत्कालस्य बहुत्वात् पुलाकतुल्यत्वेन च सहस्रपृथक्त्वमानत्वात्तेषाम्, 'अहक्खायसंजया संखेज्जगुण'त्ति कोटीपृथक्त्व-

मानत्वात्तेषां, 'छेदोवट्ठावणियसंजया संखेज्जगुण'त्ति कोटीशतपृथक्त्वमानतया तेषामुक्तत्वात्, 'सामाइयसंजया संखेज्जगुण'त्ति कषायकुशीलतुल्यतया कोटीसहस्रपृथक्त्वमानत्वेनोक्तत्वात्तेषामिति ॥ अनन्तरं संयता उक्तास्तेषां च केचित्प्रतिसेवावन्तो भवन्तीति प्रतिसेवाभेदान् प्रतिसेवा च निर्दोषमालोचयितव्येति आलोचनादोषान् आलोचनासम्बन्धादालोचकगुणान् गुरुगुणांश्च दर्शयन्नाह—

पडिसेवण दोसालोयणा य आलोयणारिहे चेव । तत्तो सामायारी पायच्छित्ते तवे चेव ॥ १ ॥ कइविहा णं भंते ! पडिसेवणा पन्नत्ता ?, गोयमा ! दसविहा पडिसेवणा पं०, तं०—दप्प १ प्पमाद २ ऽणाभोगे ३, आउरे ४ आवती ५ ति य । संकिन्ने ६ सहसक्कारे, ७ भय ८ प्पओसा ९ य वीमंसा १० ॥ १ ॥ दस आलोयणादोसा पन्नत्ता, तंजहा—आकंपइत्ता १ अणुमाणइत्ता २ जं दिट्ठं ३ बायरं च ४ सुहुमं वा ५ । छन्नं ६ सद्दाउलयं ७ बहुजण ८ अव्वत्त ९ तस्सेवी १० ॥ २ ॥ दसहिं ठाणेहिं संपन्ने अणगारे अरिहति अत्तदोसं आलोइत्तए, तंजहा—जातिसंपन्ने १ कुलसंपन्ने २ विणयसंपन्ने ३ णाणसंपन्ने ४ दंसणसंपन्ने ५ चरित्तसंपन्ने ६ खंते ७ दंते ८ अमायी ९ अपच्छाणुतावी १० । अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहति आलोयणं पडिच्छित्तए, तंजहा—आयारवं १ आहारवं २ ववहारवं ३ उव्वीलए ४ पकुव्वए ५ अपरिस्सावी ६ निज्जवए ७ अवायदंसी ८ ॥ ( सूत्रं ७९९ )

'दसविहे'त्यादि, 'दप्पप्पमायऽणाभोगे'त्ति, इह सप्तमी प्रत्येकं दृश्या, तेन दर्पे सति प्रतिसेवा भवति, दर्पश्च—

वल्गनादिः, तथा प्रमादे सति, प्रमादश्च मद्यविकथादिः, तथाऽनाभोगे सति, अनाभोगश्चाज्ञानम्, 'आतुरे'त्ति आतुरत्वे सति, आतुरश्च बुभुक्षापिपासादिवाधितः, 'आवईय'त्ति आपदि सत्यां, आपच्च द्रव्यादिभेदेन चतुर्विधा, तत्र द्रव्यापत् प्रासुकादिद्रव्यालाभः, क्षेत्रापत् कान्तारक्षेत्रपतितत्वं, कालापत् दुर्भिक्षकालप्राप्तिः, भावापद् ग्लानत्वमिति, 'संकिण्णे'त्ति सङ्कीर्णे स्वपक्षपरपक्षव्याकुले क्षेत्रे सति, 'संकिय'त्ति क्वचित्पाठस्तत्र च शङ्किते–आधाकर्मादित्वेन शङ्कितभक्तादिविषये, निशीथपाठे तु 'तिंतिण' इत्यभिधीयते, तत्र च तिन्तिणत्वे सति, तच्चाहाराद्यलाभे सखेदं वचनं, 'सहसक्कारे'त्ति सहसाकारे सति–आकस्मिकक्रियायां, तथा च—"पुव्विं अपासिऊणं पाए छूढंमि जं पुणो पासे। न तरइ नियत्तेउं पायं सहसाकरणमेयं ॥ १ ॥" इति, 'भयप्पओसा य'त्ति भयात्–सिंहादिभयेन प्रतिसेवा भवति, तथा प्रद्वेषाच्च, प्रद्वेषश्च–क्रोधादिः, 'वीमंस'त्ति विमर्शात्–शिक्षकादिपरीक्षणादिति, एवं कारणभेदेन दश प्रतिसेवाभेदा भवन्ति ॥ 'आकंपइत्ता'गाहा, आकम्प्य–आवर्जितः सन्नाचार्यः स्तोकं प्रायश्चित्तं मे दास्यतीतिबुद्ध्याऽऽलोचनाऽऽचार्यं वैयावृत्त्यकरणादिनाऽऽवर्ज्य यदालोचनमसावालोचनादोषः 'अणुमाणइत्त'त्ति अनुमान्य–अनुमानं कृत्वा लघुतरापराधनिवेदनेन मृदुदण्डादित्वमाचार्यस्याकालय्य यदालोचनमसौ तद्दोषः, एवं 'जं दिट्ठं'त्ति यदाचार्यादिना दृष्टमपराधजातं तदेवालोचयति 'बायरं व'त्ति बादरमेवातिचारजातमालोचयति न सूक्ष्मं तत्रावज्ञापरत्वात्, 'सुहुमं व'त्ति सूक्ष्ममेवातिचारजातमालोचयति, यः किल सूक्ष्मं तदालोचयति स कथं बादरं तन्नालोचयतीत्येवंरूपभावसम्पादनायाऽऽचार्यस्येति, 'छन्नं'ति छन्न–

१ पूर्वमदृष्ट्वा पादे त्यक्ते ( प्रसारिते ) यत्पुनः पश्यति न च पादं निवर्त्तयितुं शक्नोति एतत्सहसाकरणम् ॥ १ ॥

प्रतिच्छन्नं प्रच्छन्नं-अतिलज्जालुतयाऽव्यक्तवचनं यथा भवति, एवमालोचयति यथाऽऽत्मनैव शृणोति, 'सद्दाउलयं'ति शब्दाकुलं-बृहच्छब्दं यथा भवत्येवमालोचयति, अगीतार्थान् श्रावयन्नित्यर्थः, 'बहुजण'त्ति बहवो जना-आलोचनागुरवो यत्रालोचने तद्बहुजनं यथा भवत्येवमालोचयति, एकस्याप्यपराधस्य बहुभ्यो निवेदनमित्यर्थः, 'अव्वत्त'त्ति अव्यक्तः—अगीतार्थस्तस्मै आचार्याय यदालोचनं तदप्यव्यक्तमित्युच्यते, 'तस्सेवि'त्ति यमपराधमालोचयिष्यति तमेवासेवते यो गुरुः स तत्सेवी तस्मै यदालोचनं तदपि तत्सेवीति, यतः समानशीलाय गुरवे सुखेनैव विवक्षितापराधो निवेदयितुं शक्यत इति तत्सेविने निवेदयतीति ॥ 'जाइसंपन्ने' इत्यादि, नन्वेतावान् गुणसमुदाय आलोचकस्य कस्मादन्विष्यते ? इति, उच्यते, जातिसम्पन्नः प्रायोऽकृत्यं न करोत्येव कृतं च सम्यगालोचयतीति, कुलसम्पन्नोऽङ्गीकृतप्रायश्चित्तस्य वोढा भवति, विनयसम्पन्नो वन्दनादिकाया आलोचनासामाचार्याः प्रयोक्ता भवतीति, ज्ञानसम्पन्नः कृत्याकृत्यविभागं जानाति, दर्शनसम्पन्नः प्रायश्चित्ताच्छुद्धिं श्रद्धत्ते, चारित्रसम्पन्नः प्रायश्चित्तमङ्गीकरोति, क्षान्तो-गुरुभिरुपालम्भितो न कुप्यति, दान्तो—दान्तेन्द्रियतया शुद्धिं सम्यग् वहति, अमायी-अगोपयन्नपराधमालोचयति, अपश्चात्तापी आलोचितेऽपराधे पश्चात्तापमकुर्वन्निर्जराभागी भवतीति ॥ 'आयारव' मित्यादि, तत्र 'आचारवान्' ज्ञानादिपञ्चप्रकाराचारयुक्तः 'आहारवं'ति आलोचितापराधानामवधारणावान् 'ववहारवं'ति आगमश्रुतादिपञ्चप्रकारव्यवहाराणामन्यतमयुक्तः 'उव्वीलए'त्ति अपव्रीडकः-लज्जयाऽतीचारान् गोपायन्तं विचित्रवचनैर्विलज्जीकृत्य सम्यगालोचनां कारयतीत्यर्थः 'पकुव्वए'त्ति आलोचितेष्वपराधेषु प्रायश्चित्तदानतो विशुद्धिं कारयितुं समर्थः 'अपरिस्साविं'त्ति आलोचकेनालोचितान् दोषान् योऽन्यस्मै

न कथयत्यसावपरिश्रावी 'निज्जवए'त्ति 'निर्य्यापकः' असमर्थस्य प्रायश्चित्तिनः प्रायश्चित्तस्य खण्डशः करणेन निर्वाहकः 'अवायदंसि'त्ति आलोचनाया अदाने पारलौकिकापायदर्शनशील इति ॥ अनन्तरमालोचनाचार्य उक्तः, स च सामाचार्याः प्रवर्त्तको भवतीति तां प्रदर्शयन्नाह—

दसविहा सामायारी पं० तं०—इच्छा १ मिच्छा २ तहक्कारे ३, आवस्सिया य ४ निसीहिया ५। आपुच्छणा य ६ पडिपुच्छा ७, छंदणा य ८ निमंतणा ९ ॥ १॥ उवसंपया १० य काले, सामायारी भवे दसहा ॥ (सूत्रं ८००) दसविहे पायच्छित्ते पं० तं०—आलोयणारिहे पडिक्कमणारिहे तदुभयारिहे विवेगारिहे विउसग्गारिहे तवारिहे छेदारिहे मूलारिहे अणवट्ठप्पारिहे पारंचियारिहे। (सूत्रं ८०१)

'दसविहा सामायारी'त्यादि, प्रतीता चेयं, नवरमापृच्छा—कार्ये प्रश्न इति, प्रतिपृच्छा तु पूर्वनिषिद्धे कार्य एव, तथा छन्दना—पूर्वगृहीतेन भक्तादिना निमन्त्रणा त्वगृहीतेन, उपसम्पच्च—ज्ञानादिनिमित्तमाचार्यान्तराश्रयणमिति ॥ अथ सामाचारीविशेषत्वात्प्रायश्चित्तस्य तदभिधातुमाह—'दसविहे'त्यादि, इह प्रायश्चित्तशब्दोऽपराधे तच्छुद्धौ च दृश्यते तदिहापराधे दृश्यः, तत्र 'आलोयणारिहे'त्ति आलोचना—निवेदना तल्लक्षणां शुद्धिं यदर्हत्यतिचारजातं तदालोचनार्हं, एवमन्यान्यपि, केवलं प्रतिक्रमणं—मिथ्यादुष्कृतं तदुभयं आलोचनामिथ्यादुष्कृते, विवेकः—अशुद्धभक्तादित्यागः, व्युत्सर्गः—कायोत्सर्गः तपो—निर्विकृतिकादि, छेदः—प्रव्रज्यापर्यायह्रस्वीकरणं मूलं—महाव्रतारोपणं अनवस्थाप्यं—कृततपसो व्रतारोपणं पाराञ्चिकं—लिङ्गादिभेदमिति ॥ प्रायश्चित्तं च तप उक्तं, अथ तप एव भेदत आह—

दुविहे तवे पन्नत्ते, तंजहा—बाहिरिए य अब्भिंतरए य, से किं तं बाहिरए तवे ?, बाहिरए तवे छविहे प०, तं०—अणसण ऊणोयरिया भिक्खायरिया य रसपरिच्चाओ । कायकिलेसो पडिसंलीणया बज्झो (तवो होइ) ॥ १ ॥ से किं तं अणसणे ?, अ० २ दुविहे पं०, तं०—इत्तरिए य आवकहिए य, से किं तं इत्तरिए ?, २ अणेगविहे पन्नत्ते, तंजहा—चउत्थे भत्ते छट्ठे भत्ते अट्ठमे भत्ते दसमे भत्ते दुवालसमे भत्ते चोद्दसमे भत्ते अद्धमासिए भत्ते मासिए भत्ते दोमासिए भत्ते तेमासिए भत्ते जाव छम्मासिए भत्ते, सेत्तं इत्तरिए । से किं तं आवकहिए ?, आवक० २ दुविहे पं०, तं०—पाओवगमणे य भत्तपच्चक्खाणे य, से किं तं पाओवगमणे ?, पा० २ दुविहे० पं०, तं०—नीहारिमे य अणीहारिमे य नियमं अपडिकम्मे, से तं पाओवगमणे, से किं तं भत्तपच्चक्खाणे ?, भत्त० २ दुविहे पं०, तं०—नीहारिमे य अनीहारिमे य नियमं सपडिक्कमे, सेत्तं भत्तपच्चक्खाणे, सेत्तं आवकहिए, सेत्तं अणसणे । से किं तं ओमोयरिया ?, ओमोयरिया दुविहा पं०, तं०—दव्वोमोयरिया य भावोमोयरिया य, से किं तं दव्वोमोयरिया ?, २ दुविहा प०, तं०—उवगरणदव्वोमोयरिया य भत्तपाणदव्वोमोयरिया य, से किं तं उवगरणदव्वोमोयरिया ?, २ एगे वत्थे एगे पादे चियत्तोवगरणसातिज्जणया, सेत्तं उवकरणदव्वोमोय०, से किं तं भत्तपाणदव्वोमोयरिया ?, अट्ठकुक्कुडिअंडगप्पमाणमेत्ते कवले आहारं आहारेमाणस्स अप्पाहारे दुवालस जहा सत्तमसए पढमोद्देसए जाव नो पकामरसभोतीति वत्तव्वं सिया, सेत्तं भत्तपाणदव्वोमोयरिया, सेत्तं दव्वोमोयरिया, से किं तं भावोमोयरिया ?, भावो० २ अणेगविहा पं०,

तं०—अप्पकोहे जाव अप्पलोभे अप्पसद्दे अप्पझञ्झे अप्पतुमंतुमे, सेत्तं भावोमोदरिया, सेत्तं ओमोयरिया। से किं तं भिक्खा० ?, भि० २ अणेगविहा प०, तं—दव्वाभिग्गहचरए जहा उववाइए जाव सुद्धेसणिए संखाद-त्तिए, सेत्तं भिक्खायरिया। से किं तं रसपरिचाए ?, र० २ अणेगविहे पं०, तं०—निविगितिए पणीयरसविवज्जए जहा उववाइए जाव लूहाहारे, सेत्तं रसपरिचाए। से किं तं कायकिलेसे ?, कायकिलेसे अणेगविहे पं० तं०—ठाणादीए उक्कुडुयासणिए जहा उववाइए जाव सव्वगायपडिकम्मविप्पमुक्के, सेत्तं कायकिलेसे। से किं तं पडिसंलीणया ?, पडिसंलीणया चउव्विहा पं०, तं०—इंदियपडिसंलीणया कसायपडिसंलीणया जोगपडिसंलीणया विवित्तसयणासणसेवणया। से किं तं इंदियपडिसंलीणया ?, २ पंचविहा पं०, तं०—सोइंदियविसयप्पयारणिरोहो वा सोइंदियविसयप्पत्तेसु वा अत्थेसु रागदोसविणिग्गहो चक्खिंदियविसय एवं जाव फासिंदियविसयपयारणिरोहो वा फासिंदियविसयप्पत्तेसु वा अत्थेसु रागदोसविणिग्गहो, सेत्तं इंदियपडिसंलीणया, से किं तं कसायपडिसंलीणया ?, कसायपडिसंलीणया चउव्विहा पं०, तंजहा—कोहोदयनिरोहो वा उदयपत्तस्स वा कोहस्स विफलीकरणं एवं जाव लोभोदयनिरोहो वा उदयपत्तस्स वा लोभस्स विफलीकरणं, सेत्तं कसायपडिसंलीणया, से किं तं जोगपडिसंलीणया ?, जोगपडिसंलीणया तिविहा पन्नत्ता, तंजहा—अकुसलमणनिरोहो वा कुसलमणउदीरणं वा मणस्स वा एगत्तीभावकरणं अकुसलवइनिरोहो वा कुसलवइउदीरणं वा वइए वा एगत्तीभावकरणं, से किं तं कायपडिसंलीणया ?, २ जन्नं सुसमाहियपसंतसाहरियपाणिपाए कुम्मो इव

गुत्तिंदिए अल्लीणे पल्लीणे चिट्ठति, सेत्तं कायपडिसंलीणया, सेत्तं जोगपडिसंलीणया, से किं तं विवित्तस- यणासणसेवणया ?, विवित्तसय० २जन्नं आरामेसु वा उज्जाणेसु वा जहा सोमिलुद्देसए जाव सेज्जासंथारगं उवसंपज्जित्ताणं विहरइ, सेत्तं विवित्तसयणासणसेवणया, सेत्तं पडिसंलीणया, सेत्तं बाहिरए तवे १ ॥ से किं तं अब्भितरए तवे ?, २ छव्विहे पं०, तं०—पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ। झाणं विउसग्गो। से किं तं पायच्छित्ते ?, पाय २ दसविहे पं०, तं०—आलोयणारिहे जाव पारंचियारिहे, सेत्तं पायच्छित्ते । से किं तं विणए ?, विणए सत्तविहे पन्नत्ते, तंजहा—नाणविणए दंसणविणए चरित्तविणए मणविणए वयविणए कायविणए लोगोवयारविणए, से किं तं नाणविणए ?, ना० २ पंचविहे प०, तं०—आभिणिबोहियनाणविणए जाव केवलनाणविणए, सेत्तं नाणविणए, से किं तं दंसणविणए ?, दंसणविणए दुविहे० प०, तं०—सुस्सूसणा- विणए य अणच्चासादणाविणए य, से किं तं सुस्सूसणाविणए ?, सु० २ अणेगविहे पं०, तं०—सक्कारेइ वा सम्माणेइ वा जहा चोद्दसमसए ततिए उद्देसए जाव पडिसंसाहणया, सेत्तं सुस्सूसणाविणए, से किं तं अणच्चासायणाविणए ?, अ० २ पणयालीसइविहे पं०, तं०—अरिहंताणं अणच्चासादणया अरिहंतपन्नत्तस्स धम्मस्स अणच्चासादणया आयरियाणं अणच्चासादणया उवज्झायाणं अणच्चासादणया थेराणं अणच्चासाद- णया कुलस्स अणच्चासादणया गणस्स अणच्चासादणया संघस्स अणच्चासादणया किरियाए अणच्चासादणया संभोगस्स अणच्चासायणया आभिणिबोहियनाणस्स अणच्चासायणया जाव केवलनाणस्स अणच्चासादणया

१५, एएसिं चेव भत्तिबहुमाणेणं एएसिं चेव वन्नसंजलणया, सेत्तं अणच्चासायणयाविणए, सेत्तं दंसणविणए, से किं तं चरित्तविणए ?, च २ पंचविहे पं०, तं०—सामाइयचरित्तविणए जाव अहक्खायचरित्तविणए, सेत्तं चरित्तविणए, से किं तं मणविणए ?, म० २ दुविहे पं०, तं०—पसत्थमणविणए अपसत्थमणविणए य, से किं तं पसत्थमणविणए ?, पस० २ सत्तविहे प०, तंजहा—अपावए असावज्जे अकिरिए निरुवक्केसे अणण्हवकरे अच्छविकरे अभूयाभिसंकणे, सेत्तं पसत्थमणविणए, से किं तं अपसत्थमणविणए ?, अप्प० २ सत्तविहे पं०, तं—पावए सावज्जे सकिरिए सउवक्केसे अण्हवयकरे छविकरे भूयाभिसंकणे, सेत्तं अप्पसत्थमणविणए, सेत्तं मणविणए, से किं तं वइविणए ?, व० २ दुविहे पं० तं०—पसत्थवइविणए अप्पसत्थवइविणए य, से किं तं पसत्थवइविणए ?, प० २ सत्तविहे पं०, तं०—अपावए जाव अभूयाभिसंकणे, सेत्तं पसत्थवइविणए, से किं तं अप्पसत्थवइविणए ?, अ० २ सत्तविहे पं०, तं०—पावए सावज्जे जाव भूयाभिसंकणे, सेत्तं अपसत्थवयविणए, सेत्तं वयविणए, से किं तं कायवि० ?, २ दुविहे प०, तं०—पसत्थकायविणए य अप्पसत्थकायविणए य, से किं तं पसत्थकायवि० ?, पस० २ सत्तविहे पं० तंजहा—आउत्तं गमणं आउत्तं ठाणं आउत्तं निसीयणं आउत्तं तुयट्टणं आउत्तं उल्लंघणं आउत्तं पल्लंघणं आउत्तं सव्विंदियजोगजुंजणया, सेत्तं पसत्थकायविणए, से किं तं अप्पसत्थकायविणए ?, अ० २ सत्तविहे पन्नत्ते, तंजहा—अणाउत्तं गमणं जाव अणाउत्तं सव्विंदियजोगजुंजणया, सेत्तं अप्पसत्थकायविणए, सेत्तं कायविणए, से किं तं लोगोवयारविणए ?, लोगो० २ सत्तविहे पं०, तं०—

अब्भासवत्तियं परच्छंदाणुवत्तियं कज्जहेऊं कयपडिकतिया अत्तगवेसणया देसकालण्णया सव्वत्थेसु अप्पडिलोमया, सेत्तं लोगोवयारविणए, सेत्तं विणए। से किं तं वेयावच्चे?, वे० २ दसविहे पं० तं०—आयरियवेयावच्चे उवज्झायवेयावच्चे थेरवेयावच्चे तवस्सीवेया० गिलाणवेया० सेहवेया० कुलवेया० गणवेया० संघवेया० साहम्मियवेयावच्चे, सेत्तं वेयावच्चे। से किं तं सज्झाए?, सज्झाए पंचविहे पन्नत्ते, तं०—वायणा पडिपुच्छणा परियट्टणा अणुप्पेहा धम्मकहा, सेत्तं सज्झाए ॥ (सूत्रं ८०२) से किं तं झाणे?, झाणे चउविहे पन्नत्ते, तंजहा—अट्टे झाणे रोद्दे झाणे धम्मे झाणे सुक्के झाणे, अट्टे झाणे चउविहे पन्नत्ते, तंजहा—अमणुन्नसंपयोगसंपउत्ते तस्स विप्पयोगसतिसमन्नागए यावि भवइ १ मणुन्नसंपओगसंपउत्ते तस्स अविप्पयोगसतिसमन्नागए यावि भवइ २ आयंकसंपयोगसंपउत्ते तस्स विप्पयोगसतिसमन्नागए यावि भवइ ३ परिज्झुसियकामभोगसंपयोगसंपउत्ते तस्स अविप्पयोगसतिसमन्नागए यावि भवइ ४, अट्टस्स णं झाणस्स चत्तारि लक्खणा पं० तं०—कंदणया सोयणया तिप्पणया परिदेवणया १। रोद्दज्झाणे चउविहे पं०, तं०—हिंसाणुबंधी मोसाणुबंधी तेयाणुबंधी सारक्खणाणुबंधी, रोद्दस्स णं झाणस्स चत्तारि लक्खणा पं०, तं०—ओस्सन्नदोसे बहुलदोसे अण्णाणदोसे आमरणांतदोसे २। धम्मे झाणे चउविहे चउप्पडोयारे पं०, तं०—आणाविजए अवायविजए विवागविजए संठाणविजए, धम्मस्स णं झाणस्स चत्तारि लक्खणा पं०, तं०—आणारुयी निसग्गरुयी सुत्तरुयी ओगाढरुयी, धम्मस्स णं झाणस्स चत्तारि आलंबणा प० तं—वायणा पडिपुच्छणा परियट्टणा धम्मकहा, धम्मस्स णं

